हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः
२९

# कामसूत्रम्।

श्रीवात्स्यायनमुनिप्रणीतं-

बहुयत्नैरासादितया पूर्णया यशोधररचितया
जयमङ्गलाख्यया टीकया समेतम्।

श्रीमन्माध्वसम्प्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य-
तर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिणा
बहुखण्डितपाठान् परिपूर्य; सूत्राङ्कांश्च संयोज्य;
परिष्कृत्य; संशोध्य; सम्पादितम्।

प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी।

विक्रम संवत्
१९८६

श्रीश्रीहरिः शरणम् ।

# द्वितीयसंस्करणोपसंहारः ।

विज्ञापयाम्येतद् विशेषशास्त्ररसज्ञमहोदयान्, यद् बहुवर्षेभ्यः पूर्वं मुम्बईस्थनिर्णयसागरयन्त्रालयाध्यक्षेण स्वीययन्त्रालये कामशास्त्रे शेषस्यार्षग्रन्थस्य वात्स्यायनसूत्रस्य पुस्तकं कामतन्त्ररहस्यमधिजिगमिषूणामतिभूमिं गताभिस्तद्ग्रन्थदर्शनोत्कण्ठाभिर्विलम्बमसहमानेनेव व्युत्क्रान्तप्रक्षिप्तपरिष्कृतताऽऽदिदोषदूषितमप्रदर्शितसूत्रसंख्याविभागं तादृशैव षष्ठाधिकरणान्तमुपलब्धया यशोधरकृतया जयमङ्गलाख्यया टीकया सह मुद्रयित्वाऽनीयत प्रकाशम्,

परं तु निर्दिष्टदोषैरेतद्ग्रन्थपर्यालोचने पानकरसास्वादे सिकतारेणुभिरिवारुन्तुदतां सहृदयधुरीणानामवगम्य; यथाशक्त्येनां प्रतिचिकीर्षुणा चौखम्भासंस्कृतसीरीजाध्यक्षेण मदीयजनकेन बाबूहरिदासगुप्तेन शोधकस्य प्राचीनं प्रायः शुद्धं सटीकं कामसूत्रपुस्तकमेकं, द्वितीयं च विविधग्रन्थसंग्रहरसिककाशीस्थबाबूश्रीयुक्तगोविन्ददासमहोदयस्य सटीकं शुद्धं तत्पुस्तकमवलम्बय्य; सूत्राणामङ्कांश्च यथास्थानं समावेशय्य; सुमुद्रणाय पुनरेतच्छोधनं प्रारम्भितम्,

टीकाशून्यं च सप्तममौपनिषदिकमधिकरणं बहुयत्नैरासादितेन तट्टीकाऽवशिष्टांशेन संयोज्य प्राचीकटं, तथाऽपि ग्रन्थमात्रमुद्रणमेवावसितमियत्समयावधि, विशिष्टा भूमिकाऽऽदयः परिशिष्टाश्चान्येऽधिग्रन्थपर्य्यालोचनवेलमुपकारकाः विशेषसूच्यादयो विषया नूनमवश्यसन्धेयं परिशिष्टत्वेन समाविवेशयिषितव्यं सन्धाय; सन्धाप्य; च नातिचिरायैव प्रकाशयिष्यन्ते; तावच्चिररात्रायोत्पन्नचरीदमीया बलवती दिदृक्षा दर्शकैः फलवती विधेया, मानुष्यकनान्तरीयकानवधानजनिताशुद्धयश्चात्रत्यानिजतितिक्षागुणगरिम्णा मर्षणीया इति ।

चौखम्भासंस्कृतसीरीजाध्यक्षौ—

हरिदासगुप्तजयकृष्णदासगुप्तौ—

कार्यालय—

बनारस सिटी ।

श्रीकृष्णाय नमः ।

# कामसूत्रविषयानुक्रमः—

## अत्राधिकरणानि ७

कामशास्त्रसमाप्तिः ।

---

**अत्र शास्त्रे–**

अधिकरणानि ७

अध्यायाः ३६

प्रकरणानि ६४

सूत्राणि १२६४

श्लोकाः—१२५०

---

श्रीवात्स्यायनमुनिप्रणीतं—

# कामसूत्रम् ।

## यशोधरकृतया जयमङ्गलाख्यया व्याख्यया समेतम् ।

### साधारणनामके प्रथमेऽधिकरणे

### प्रथमोऽध्यायः ।

नमो धर्मार्थकामेभ्यस्तत्कामेभ्यो नमो नमः ।
त्रिवर्गमोक्षकामेभ्योऽकामेभ्यस्त्वमितं नमः ॥

वात्स्यायनीयं किल कामसूत्रं व्याख्यायि तत् कैश्चिदिहान्यथैव ।
तस्माद्विधास्ये जयमङ्गलाऽऽख्यां टीकामिमां सर्वविदं प्रणम्य ॥

इह चत्वारो वर्णा (१)ब्राह्मणादयः, चत्वारश्चाश्रमा ब्रह्मचारी, गृहस्थो, (२)वैखानसो, भिक्षुरिति, तत्र ब्राह्मणादीनां गृहस्थानां मोक्षस्यान(३)भिमतत्वात् (४)त्रिवर्गः पुरुषार्थः, तत्रापि धर्मार्थयोर्हेतुत्वात्काम एव फलभूतः प्रकृष्टः पुरुषार्थ इति कामवादिनः, स चोपायं विना न भवतीति तदुपायमाचिख्यासुराचार्य(५)मल्लनागः पूर्वाचार्यमतानुसारेण शास्त्रमिदं प्रणीतवान् ।

ननु तद्धेतुत्वाद्धर्मार्थावेवोपादेयौ, तौ च शास्त्रविहितौ ? सत्यम्,

---

(१) आदिशब्दात् क्षत्रियवैश्यशूद्रा ग्राह्याः । तथा चामरः "वर्णाः स्युर्ब्राह्मणादयः, विप्रक्षत्रियविट्शूद्राः" इति ।

(२) वानप्रस्थः । "वैखानसो वानप्रस्थ" इति विश्वः ।

(३) यद्यपि निरतिशयसुखादिरूपे मोक्षे कस्यापि नानभिमतत्वं सम्भवति विशेषतो ब्राह्मणानां, "ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय चे" त्यादिश्रीभागवतादिप्रामाण्यात्, तथाऽपि प्रकृतशास्त्राधिकारिताऽवच्छेदककोटौ मोक्षानभिमतत्वाभ्युपगमादित्थमुक्तिः ।

(४) "त्रिवर्गो धर्मकामार्थैरि"त्यमरः ।

(५) वात्स्यायनमुनिः । "मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपी"ति मेदिनी ।

तद्धेतुत्वेऽप्युपायान्तरापेक्षत्वात्(१)संप्रयोगपराधीनः कामः, सम्प्रयोगश्चोपायमपेक्षते, उपायपरिज्ञानं च कामशास्त्राद्, न धर्मार्थशास्त्राभ्याम्। वक्ष्यति च प्रयोजनवाक्यम्—"संप्रयोगपराधीनत्वात्स्त्रीपुंसयोरुपायमपेक्षते" अधि. १। अ. २। प्र. २। सू. २२। "सा चोपायप्रतिपत्तिः (२)कामसूत्रादिति" अधि. १। अ. २। प्र. २। सू. २३। तत्रोपायोऽभिधेयः, तत्प्रकाशनं कामशास्त्रेण क्रियमाणं प्रयोजनम्, अन्यथा कथं प्रतिपत्तिः शास्त्राद्? अनधीतशास्त्राणां तु तच्छास्त्रोपायपरिज्ञानं स्वतोऽसम्भवात् परोपदेशात्स्यात्, परोपदेशश्चेत्कथं न शास्त्राभ्युपगमः, तथा चेदमुपायपरिज्ञानं तद्ध घुणाक्षरकल्पं; सम्यक्करणीयवर्जनीयापरिज्ञानात्, ततश्चोपायबाहुल्यात्तैर्नागरिकैरनागरिका नागरिकाः क्रियन्ते, तथा चोक्तम्—

'यदविज्ञातशास्त्रेण कदा चित्साधितं भवेत्।
न चैतद् दहु मन्तव्यं घुणोत्कीर्णमिवाक्षरम्'॥ इति।

यदपि कामशास्त्रविदां केषां चिद् व्यवहाराकौशलम्, तत्तेषामेव दोषो न शास्त्रस्य, प्रतिपत्तिदोषाच्च शास्त्रानर्थक्यं सर्वत्र तुल्यम्, न हि चिकित्साऽऽद्यर्थेषु शास्त्रेषु सर्वे तद्विदः पथ्याहारादिकं सेवन्ते, तस्मात्तदर्थिनो ये भक्तिश्रद्धाऽन्वितास्तेऽपि शास्त्रप्रयोजनहेतवः।

तत्र देवतानमस्कारपूर्वकं शास्त्रप्रणयनमविघ्नितप्रसरं भवतीत्याह—

धर्मार्थकामेभ्यो नमः॥ १॥

अर्थशब्दस्याजाद्यदन्तत्वेऽपि न पूर्वनिपातः, धर्मस्या(३)भ्यर्हितत्वाद्, वक्ष्यति च—"(४)पूर्वः पूर्वो गरीयान्" अधि. १। अ. २। प्र. २। सू. १४। इति॥ १॥

---

(१) स्त्रीपुंसयोर्विशेषसामान्यकामहेतुः सम्बन्धविशेषः, स च रताख्याभ्यन्तरसम्भोगसमागमाख्यबाह्यसम्भोगप्रभेदाभ्यां सम्भोगापरपर्यायायतनसम्प्रयोगनामा विशेषकामहेतुः, स्त्रीपुंसान्योन्यसाक्षात्काररूपाङ्गसम्प्रयोगनामा सामान्यकामहेतुश्चेति द्विप्रकारः सम्प्रयोगः।

(२) सूत्रलक्षणं च—"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च। सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण" इत्यभियुक्तोक्तमूह्यम्।

(३) वासुदेवार्जुनाभ्यां वुन्। ४। ३। ९८। इत्यत्र पूर्वनिपातितवासुदेवपदादभ्यर्हिततराजाद्यदन्तस्य पूर्वनिपात, इत्यर्थकत्वा "दजाद्यदन्तम्। २। २। ३३। इतिसूत्रस्येति भावः।

(४) "एषां समवाय" इत्यादिः।

अन्यदेवतासद्भावेऽपि किमिति तेभ्यो नम इत्याह—

शास्त्रे प्रकृतत्वात् ॥ २ ॥

'अधिकृतानधिकृतयोरधिकृते प्रतिपत्तिर्बलीयसी'ति न्यायात् । यथा च पुरुषार्थत्वेन कामोऽस्मिञ्शास्त्रेऽधिकृतस्तथा तद्द्वारेण धर्मार्थावपि, एतदुपदिष्टोपायपूर्वकं प्रवर्तमानस्य त्रिवर्गसिद्धेः, तथा च वक्ष्यति—"अन्योन्यानुबद्धं त्रिवर्गं सेवेत(१)", अधि. १ । अ. २ । प्र. २ । सू. १ । तथा, "सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः संबन्धः पक्षवृद्धिरनुपस्कृता रतिश्च" अधि. ३ । अ. १ । प्र० १ । सू. १ । इति । तेषां चाधिकारात्तदधिष्ठात्र्योऽपि देवता अधिकृताः, उपचारात्तच्छब्दवाच्याः, अन्यथा धर्मादीनां वक्ष्यमाणलक्षणानामदेवताऽऽत्मकत्वान्नमस्कारो नोपपद्येत, अधिष्ठातृदेवताऽस्तित्वं चागमात्, तथा हि—'पुरूरवाः शक्रदर्शनार्थमितः स्वर्गं गतो मूर्तिमतो धर्मादीन्द्रष्टोपागतस्य धर्ममेवेतरावनादृत्य प्रदक्षिणीचकार, ततोऽसौ ताभ्यां तिरस्कारामर्षिताभ्यामभिशप्तः, ततोऽस्य कामाभिशापादुर्वशीविरहोत्पत्तिरभूत्, तस्यां च कथं चिदुपशान्तायामर्थाभिशापादतिवृद्धलोभश्चातुर्वर्ण्यस्यार्थमशेषमाहृतवान्, ततोऽर्थापहाराद्यज्ञादिक्रियाविरहोद्विग्नैर्ब्राह्मणैर्दर्भपाणिभिर्हतो ननाशे' त्यैतिहासिकाः ॥ २ ॥

तत्समयावबोधकेभ्यश्चाचार्येभ्यः ॥ ३ ॥

तेषां धर्मादीनां समयस्तत्त्वम्, अवबोधयन्तीत्यवबोधकाः, तत्समयावबोधका इति षष्ठीसमासप्रतिषेधस्यानित्यत्वं(२), 'तत्प्रयोजको हेतुश्च' पा. १ । ४ । ५५ । इति निदर्शनाद्, ये तत्समयं प्रतिपादयितुं तच्छास्त्रं प्रणीतवन्तस्तेभ्यो नमः, नान्येभ्य इत्यर्थः ॥ ३ ॥

कुत इत्यत आह—

तत्संबन्धात् ॥ ४ ॥

तेषामिह शास्त्रे सम्बन्धादित्यर्थः । तत्प्रणीतशास्त्रसंक्षेपेण हि शास्त्रस्य प्रणयनात् ॥ ४ ॥

'प्रजापतिर्हि' इत्यादिनाऽऽगमविशुद्ध्यर्थं गुरुपूर्वक्रमलक्षणं स-

(१) सूत्रैकदेशोऽयम् । "शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत अधि० १ । अ० २ । प्र० २ । सू० १ इत्यस्य ।

(२) चिन्त्यमेतद्, वस्तुतस्तु शास्त्रानित्यत्वकल्पनाऽपेक्षयेदृशस्थले शेषषष्ठीसमासोक्तिरेव कैयटीया ज्यायसी ।

न्बन्धमाह—

प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य साधनमध्यायानां शतसहस्रेणाग्रे प्रोवाच ॥ ५ ॥

प्रजापतिर्हीति। हिशब्दो यस्मादित्यर्थे। अविपरीतोऽयमागमो गुरुपरम्परयाऽन्वाख्यायते यतः स्थितिनिबन्धनमिति। प्रजानां तिस्रोऽवस्थाः सर्गस्थितिप्रलयलक्षणाः, तत्र सर्गादूर्ध्व प्रबन्धेनावस्थानं स्थितिः, सा हि द्विविधा, शुभा, चाशुभा च, त्रिवर्गोऽपि द्विविधः, उपादेयोऽनुपादेयश्च, तत्र पूर्वो धर्मोऽर्थः काम इति, द्वितीयोऽप्यधर्मोऽनर्थोद्वेष इति, तत्र धर्मादमुत्र शुभा गतिः, अधर्मादशुभा, अर्थादिहैव शरीरपरिभोगो धर्मप्रवर्तन च, अनर्थात्क्लिष्टजीवनम् अधर्मप्रवर्तनं च, कामात्सुखं, प्रजोत्पत्तिश्च, द्वेषान्नोभयं तस्य च निःसुखस्याप्रजस्य तृणस्येव स्थितिः, इत्येवं स्थितेस्त्रिवर्गो निबन्धनम्, तस्योपेयानुपेयस्य प्राप्तिपरिहारौ नोपायं विनेति तदुपायशासनत्वाच्छास्त्रमप्युपचारात्स्थितिनिबन्धनम्। शतसहस्रेणेति। लक्षेण। अग्रे प्रोवाचेति। तदानीं शास्त्रान्तराभावादिदमेवाग्र्यमिति। श्रुतिरपि सर्वजनविषयेति तामेव हृदि स्थितामनुसंचिन्त्य साधारणभूतं स्मार्तशास्त्रं प्रकर्षेणोवाच ॥ ५ ॥

तस्यैकदेशं स्वायंभुवो मनुर्धर्माधिकारिकं पृथक्चकार ॥ ६ ॥

तस्येति। प्रजापतिप्रोक्तस्यैकदेशाश्रयः, तत्र यत्र धर्मोऽधिकृतस्तन्मनुः पृथक्चकार' यत्रार्थस्तं बृहस्पतिः, यत्र कामस्तन्नन्दीति, "स्वायंभुव" इति वैवस्वत(१)निवृत्त्यर्थम्। धर्माधिकारिकमिति। धर्मप्रस्तावो यत्रास्ति तद् धर्मशास्त्रमित्यर्थः ॥ ६ ॥

बृहस्पतिरर्थाधिकारिकम् ॥ ७ ॥

अर्थाधिकारिकमिति। अर्थशास्त्रं चकारेत्यर्थः। द्वयोरप्यनयोरप्रस्तुतत्वान्नाध्यायसंख्या दर्शिता ॥ ७ ॥

महादेवानुचरश्च नन्दी सहस्रेणाध्यायानां पृथक्कामसूत्रं प्रोवाच ॥८॥

महादेवेति। महादेवस्य पश्चाच्चरति यः; नान्योऽयं नन्दिनामा कश्चित्, तथा हि श्रूयते—"दिव्यं वर्षसहस्रमुमया सह सुरतसुखमनुभवति महादेवे वासगृहद्वारगतो नन्दी कामसूत्रं प्रोवाचे" ति। अत्राध्यायसंख्यानमुक्तं शास्त्रस्य प्रस्तुतत्वात् ॥ ८ ॥

(१) तथा च वर्तमानवैवस्वतमन्वन्तराव्यवहितपूर्ववर्तिमन्वन्तरे मानवशास्त्रप्रकाशः सूचितः।

**तदेव तु पञ्चभिरध्यायशतैरौद्दालकिः श्वेतकेतुः संचिक्षेप ॥ ९ ॥**

तदेव त्विति । नन्दिप्रोक्तं, तस्यैकदेशम् । तुशब्दो विशेषणार्थः । औद्दालकिरित्युद्दालकस्यापत्यं यः श्वेतकेतुः, तथा हि, परदाराभिगमनं लोके प्रागासीद्, यथोच्यते—

'पक्वान्नमिव राजेन्द्र ! सर्वसाधारणाः स्त्रियः ।
तस्मात्तासु न कुप्येत न रज्येत रमेत च' ॥ इति ।

इयमौद्दालकिना व्यवस्था निवर्तिता, तथा चोक्तम्—

'मद्यपानान्निवृत्तिश्च ब्राह्मणानां गुरोः सुतात् ।
परस्त्रीभ्यश्च लोकानामृषेरौद्दालकेरपि ॥
ततः पितुरनुज्ञानाद्गम्यागम्यव्यवस्थया ।
श्वेतुकेतुस्तपोनिष्ठः सुखं शास्त्रं निबद्धवान्' ॥ इति ॥ ९ ॥

**तदेव तु पुनरध्यर्धेनाध्यायशतेन साधारणसांप्रयोगिककन्यासंप्रयुक्तकभार्याऽधिकारिकपारदारिकवैशिकौपानिषदिकैः सप्तभिरधिकरणैर्बाभ्रव्यः पाञ्चालः संचिक्षेप ॥ १० ॥**

तदेव त्विति । यदेवौद्दालकिना संक्षिप्तम् ; पुनरर्थतो ग्रन्थतश्च संचिक्षेप, पूर्वत्र परदाराभिगमनं सामान्येन प्रतिषिद्धम् , इह तु विशेषेणेत्येवं पारदारिकमत्रोक्तम् , अध्यर्धेन पञ्चाशदधिकेनाध्यायशतेन, तत्रोत्तरेषामधिकरणानामस्य साधारणत्वात्साधारणम् , संप्रयोगः प्रयोजनमस्येति सांप्रयोगिकम् , कन्यायाः संप्रयुक्तं संप्रयोगो यस्मिन्निति कन्यासंप्रयुक्तकम् , भार्याऽधिकारिणो यस्मिन्नस्तीति भार्याऽधिकारिकम् , तथा पारदारिकम् , वेशो वेश्यावृत्तं तत्प्रयोजनमस्येति वैशिकम् , तथौपनिषदिकम् , उपनिषद्रहस्यं साधारणाद्युपादानं शास्त्रशरीरख्यापनार्थम् , एतावन्तोऽर्थाः शास्त्र इति । आचार्योऽपि तथैव स्वशास्त्रमतः संचिक्षेप । सप्तभिरिति नियमार्थम् । अधिक्रियन्ते प्रकरणार्था येष्वित्यधिकरणानि, बाभ्रव्यो बभ्रोरपत्यं यः पाञ्चालः । 'मधुबभ्र्वोः—, ।४।१।१०६ इति यञ् ॥ १० ॥

**तस्य षष्ठं वैशिकमधिकरणं पाटलिपुत्रिकाणां गणिकानां नियोगाद्दत्तकः पृथक्चकार ॥ ११ ॥**

तस्येति । बाभ्रव्यसंक्षिप्तस्य । षष्ठमितीयमेवानुपूर्वी नान्येति प्रदर्शनार्थम् अन्यथा पाठादेव संख्या लब्धा, तां चानुपूर्वीं वर्णयिष्या-

(१) मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । ४ । १ । १०६ ।

मः । पाटलिपुत्रिकाणामिति । मगधेषु पाटलिपुत्रं नाम नगरं, तत्र भवा इति । 'रोपधेतोः प्राचाम्' । ४ । २ । १०६ ।इति वुञ् । नियोगादिति । अन्यतमो माथुरो ब्राह्मणः पाटलिपुत्रे वसतिं चकार, तस्योत्तरे वयसि पुत्रो जातः, तस्य जातमात्रस्य माता मृता, पिताऽपि तन्नान्यस्यै तं पुत्रत्वेन दत्त्वा कालेन लोकान्तरं गतः, ब्राह्मण्यपि ममायं दत्तकः पुत्र इत्यनुगतार्थमेव नाम चक्रे स च तया संवर्धितोऽचिरेणैव कालेन सर्वा विद्याः कलाश्चाधीतवान् व्याख्यानशीलत्वाद्दत्तकाचार्य इति प्रतीतिमुपागतः, एकदा च तस्य चेतस्येवमभवत्, लोकयात्रा परा ज्ञेयाऽस्ति, सा प्रायशो वेश्यासु स्थितेति ततो वेश्याजनं परिचयपूर्वकं प्रत्यहमुपागम्य तथा तामधिविवेद यथा स एवोपदेशस्य ग्रहणायास्य प्रार्थनीयोऽभूत्, ततोऽसौ वीरसेनाप्रमुखेण गणिकाजनेनाभिहितः, "अस्माकं पुरुषरञ्जनमुपदिश्यतामिति" तन्नियोगात्पृथक्चकारेत्ययमाम्नायः । अन्यस्तु शास्त्राभिगमयुक्तां युक्तिमाह—यत्र गर्भयात्रायां दत्तकनामा तत्पदावधूतेन प्रतिशयितेन त्र्यक्षेण शप्तः स्त्री बभूव, पुनश्च कालेन लब्धवरः पुरुषोऽभूत्, तेनोभयरसज्ञेन पृथक्कृतमिति, यदि बाभ्रव्योक्तमेव पृथक्कृतं किम पूर्वं स्वसूत्रेषु दर्शितं येनोभयरसज्ञता कल्प्यते, यदि चायमर्थः शास्त्रकृतोऽप्यभिमतः स्यात्तदानीं 'नियोगादुभयरसज्ञो दत्तकः' इत्येवमभिदध्यात् ॥ ११ ॥

तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं पृथक्प्रोवाच ॥१२॥ सुवर्णनाभः सांप्रयोगिकम् ॥ १३ ॥ घोटकमुखः कन्यासंप्रयुक्तकम् ॥ १४ ॥ गोनर्दीयो भार्याऽधिकारिकम् ॥ १५ ॥ गोणिकापुत्रः पारदारिकम् ॥ १६ ॥ कुचुमार औपनिषदिकम् ॥ १७ ॥

दत्तकेन वैशिकं पृथक्कृतमित्येतत्प्रसङ्गाच्चारायणादयोऽपि पृथक्प्रकर्षेणोचुः, प्रकर्षश्च यत्तेषु स्वमतप्रकाशनम् , तच्च स्थानस्थानेषु स्वशास्त्रेषु दर्शयिष्यति ॥ १२—१७ ॥

एवमित्यादिना स्वशास्त्रस्य प्रयोजनमाह—

एवं बहुभिराचार्यैस्तच्छास्त्रं खण्डशः प्रणीतमुत्सन्नकल्पमभूत् ॥१८॥

तच्छास्त्रं बाभ्रव्योक्तम् । खण्डश इति खण्डं खण्डं कृत्वोत्सन्नकल्पमीषदुत्सन्नमिव क्व चिद् दृश्यमानत्वात् । नन्द्यादिप्रणीतमुत्सन्नमेवेत्यर्थोक्तम् ॥ १८ ॥

तत्र दत्तकादिभिः प्रणीतानां शास्त्रावयवानामेकदेशत्वाद, महदिति च बाभ्रवीयस्य दुरध्येयत्वात्, संक्षिप्य सर्वमर्थमल्पेन ग्रन्थेन कामसूत्रमिदं प्रणीतम् ॥ १९ ॥

तत्रेति । शास्त्रप्रस्थापने । शास्त्रावयवानामित्यवयवभूतानाम्, एकदेशार्थत्वान्न कामाङ्गीभूताशेषवस्तुपरिज्ञानम् । बाभ्रवीयस्येति । बाभ्रव्यप्रोक्तस्य सम्पूर्णशास्त्रस्याप्रयोजनमाह—तस्य सम्पूर्णस्यापि महदिति कृत्वा दुःखेनाध्ययनम् । तत्सप्तभिरधिकरणैः सप्त सहस्राणि संक्षिप्य; सर्वमल्पेन ग्रन्थेनेति सम्पूर्णतां स्वध्येयतां च दर्शयति । इदमिति बुद्धिस्थमाह । प्रणीतमिति समाप्तिमाशंसते ॥ १९ ॥

तस्येत्यादिना स्वशास्त्रस्यार्थावयवानाचष्टे—

तस्यायं(१) प्रकरणाधिकरणसमुद्देशः—

शास्त्रसङ्ग्रहः ॥ २० ॥ त्रिवर्गप्रतिपत्तिः ॥ २१ ॥ विद्यासमुद्देशः ॥ २२ ॥ नागरिकवृत्तम् ॥ २३ ॥ नायकसहायदूतीकर्मविमर्शः ॥ २४ ॥

इति साधारणं प्रथममधिकरणम् । प्रकरणानि पञ्च ।

प्रमाणकालभावेभ्यो रतावस्थापनम् ॥ २५ ॥ प्रीतिविशेषाः ॥ २६ ॥ आलिङ्गनविचाराः ॥ २७ ॥ चुम्बनविकल्पाः ॥ २८ ॥ नखरदनजातयः ॥ २९ ॥ दशनच्छेद्यविधयः ॥ ३० ॥ देश्या उपचाराः ॥ ३१ ॥ संवेशनप्रकाराः ॥ ३२ ॥ चित्ररतानि ॥ ३३ ॥ प्रहणनयोगाः ॥ ३४ ॥ तद्युक्ताश्च सीत्कृतोपक्रमाः ॥ ३५ ॥ पुरुषायितम् ॥ ३६ ॥ पुरुषोपसृप्तानि ॥ ३७ ॥ औप-

(१) इयता प्रबन्धेन प्रकृतशास्त्रस्य समूलकतां संसूच्य, सम्प्रति तत्प्रतिपाद्यार्थनिरूपयितुकामेनोद्देशलक्षणपरीक्षाविधाभिस्त्रैविध्यं शास्त्रप्रवृत्तेरालोच्य, मुनिना क्रमायातमुद्देशमादौ विधायोपक्रम्यते शास्त्रमिदं प्रतिपादयितुम् ।

तदुपक्रमवाक्यं चैतत् "तस्यायमि"त्यादि । सूत्रत्वं त्वस्य न भाति, उद्देशलक्षणपरीक्षाऽन्यतमासम्बन्धित्वाद्, अत एव तत्तत्प्रकरणादिसमाप्तिबोधकवाक्यानामपि न तत्त्वं, स्पष्टावगत्याद्यर्थमेव निबन्द्धृणामारम्भावसानेषु तज्जातीयलेखोपलम्भाद्, यथा—"वृद्धिरादैजि"त्यादिवाक्यानां सूत्रात्मकशास्त्रघटकत्वेऽपि न तत्त्वं; किन्तु तथात्वमेवेति ।

रिष्टिकम् ॥ ३८ ॥ रतारम्भावसानिकम् ॥ ३९ ॥ रतविशेषाः ॥ ४० ॥ प्रणयकलहः ॥ ४१ ॥

इति साम्प्रयोगिकं द्वितीयमधिकरणम् । अध्याया-
दश । प्रकरणानि सप्तदश ।

वरणविधानम् ॥ ४२ ॥ सम्बन्धनिर्णयः ॥ ४३ ॥ कन्याविस्रम्भणम् ॥ ४४ ॥ बालाया उपक्रमाः ॥ ४५ ॥ इङ्गिताकारसूचनम् ॥ ४६ ॥ एकपुरुषाभियोगः ॥ ४७ ॥ प्रयोज्यस्योपावर्तनम् ॥ ४८ ॥ अभियोगतश्च कन्यायाः प्रतिपत्तिः ॥ ४९ ॥ विवाहयोगः ॥ ५० ॥

इति कन्यासम्प्रयुक्तकं तृतीयमधिकरणम् । अध्यायाः
पञ्च । प्रकरणानि नव ।

एकचारिणीवृत्तम् ॥ ५१ ॥ प्रवासचर्या ॥ ५२ ॥ सपत्नीषु ज्येष्ठावृत्तम् ॥ ५३ ॥ कनिष्ठावृत्तम् ॥ ५४ ॥ पुनर्भूवृत्तम् ॥ ५५ ॥ दुर्भगावृत्तम् ॥ ५६ ॥ आन्तःपुरिकम् ॥ ५७ ॥ पुरुषस्य बह्वीषु प्रतिपत्तिः ॥ ५८ ॥

इति भार्याऽधिकारिकं चतुर्थमधिकरणम् । अध्यायौ
द्वौ । प्रकरणान्यष्टौ ।

स्त्रीपुरुषशीलावस्थापनम् ॥ ५९ ॥ व्यावर्तनकारणानि ॥ ६० ॥ स्त्रीषु सिद्धाः पुरुषाः ॥ ६१ ॥ अयत्नसाध्या योषितः ॥ ६२ ॥ परिचयकारणानि ॥ ६३ ॥ अभियोगाः ॥ ६४ ॥ भावपरीक्षा ॥ ६५ ॥ दूतीकर्माणि ॥ ६६ ॥ ईश्वरकामितम् ॥ ६७ ॥ आन्तःपुरिकं दाररक्षितकम् ॥ ६८ ॥

इति पारदारिकं पञ्चममधिकरणम् । अध्यायाः
षट् । प्रकरणानि दश ।

गम्यचिन्ता ॥ ६९ ॥ गमनकारणानि ॥ ७० ॥ उपावर्तनविधिः ॥ ७१ ॥ कान्ताऽनुवर्तनम् ॥ ७२ ॥ अर्थागमोपायाः

॥ ७३ ॥ विरक्तलिङ्गानि ॥ ७४ ॥ विरक्तप्रतिपत्तिः ॥ ७५ ॥ निष्कासनप्रकाराः ॥ ७६ ॥ विशीर्णप्रतिसन्धानम् ॥ ७७ ॥ लाभविशेषः ॥ ७८ ॥ अर्थानर्थानुबन्धसंशयविचारः ॥ ७९ ॥ वेश्याविशेषाश्च ॥ ८० ॥

इति वैशिकं षष्ठमधिकरणम् । अध्यायाः षट् । प्रकरणानि द्वादश ।

सुभगङ्करणम् ॥ ८१ ॥ वशीकरणम् ॥ ८२ ॥ वृष्याश्च योगाः ॥ ८३ ॥ नष्टरागप्रत्यानयनम् ॥ ८४ ॥ वृद्धिविधयः ॥ ८५ ॥ चित्राश्च योगाः ॥ ८६ ॥

इत्यौपनिषदिकं सप्तममधिकरणम् । अध्यायौ द्वौ । प्रकरणानि षट् ।

एवं षट्त्रिंशदध्यायाः । चतुःषष्टिः प्रकरणानि । अधिकरणानि सप्त । सपादं श्लोकसहस्रम् ।

इति शास्त्रसङ्ग्रहः ।

अयमिति वक्ष्यमाणो ग्रन्थः । प्रक्रियन्ते प्रस्तूयन्ते येष्वर्था इति प्रकरणानि तेषामधिकरणानां च समुद्देशः संक्षेपेणाभिधानम् । शास्त्रस्य संग्रहः, त्रिवर्गप्रतिपत्तिः, इत्यादय उक्तार्थाः तत्साहचर्याद् ग्रन्थभागा अपि तत्समाख्याः, यथा— कंस(१)बधं काव्यमिति, शास्त्रं चेदं तन्त्रमावापश्चेति द्विधा स्थितम् , तत्र तन्त्र्यते जन्यते रतिर्येन तत्तन्त्रमालिङ्गनादि, तदुपदिश्यते येन तदपि तन्त्रं सांप्रयोगिकमधिकरणम् , समन्तादावाप्यन्ते स्त्रियः पुरुषाश्च येन स आवापः समागमोपाय इत्यर्थः, सयेनोपदिश्यते तदप्यावापः कन्यासंप्रयुक्तकाद्यधिकरणचतुष्टयम् , तत्र तन्त्रावापानुष्ठानं न साधारणानुष्ठानं विनेति प्राक्साधारणमुच्यते, औपनिषदिकं तु तन्त्रावापाभ्यामसिद्धे व्याप्रियत इत्यन्ते वक्ष्यति, तदुभयमपि तन्त्रावापान्तर्गतमेव तदङ्गत्वात् , तत्र साधारणे शास्त्रसंग्रहप्रकरणमादावुक्तम् , तत्र शास्त्रस्य संगृह्यमाणत्वात् ॥ २०—८६ ॥

षट्त्रिंशदित्यादिना स्वशास्त्रस्यावयवसमुदायाभ्यां संख्यानमाह— तत्राध्यायसंख्यानं पूर्वशास्त्रेभ्य इदं स्तोकमिति दर्शनार्थम् , प्रकर-

---

( १ ) षष्ठीतत्पुरुषतात्पर्येणेदम् ।

णाधिकरणसंख्यानमन्यनिरपेक्षार्थम्, श्लोकसंख्यानमहीनाधिकत्वज्ञापनार्थम्।

उत्तरग्रन्थसन्धानायाह—

संक्षेपमिममुक्त्वाऽस्य विस्तरोऽतः प्रवक्ष्यते।
इष्टं हि विदुषां लोके समासव्यासभाषणम् ॥ ८७ ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकणे
शास्त्रसंग्रहः प्रथमोऽध्यायः प्रथमं प्रकरणम्।

संक्षेपमिति। अस्येति शास्त्रस्य। विस्तरोऽतः प्रवक्ष्यते संक्षेपादूर्ध्वम्। किमर्थमेवं शास्त्रविन्यास इत्यत आह—इष्टं हीति। लोके ये शास्त्रेऽधिकृतास्ते विद्वांसः, तेषां संक्षेपविस्तराभ्यां शास्त्रस्य मनसि धारणमिष्टम्, प्रज्ञातप्रकरणार्थक्रमत्वादसंमोहो यथाऽभिलषितप्रकरणार्थप्रत्यवमर्शश्च स्याद् ॥ ८७ ॥

इति शास्त्रसंग्रहः प्रथमं प्रकरणम् ॥ १ ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलायां साधारणे
प्रथमेऽधिकरणे शास्त्रसङ्ग्रहः प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः।

त्रिवर्गप्रतिपत्तिफलं शास्त्रम्, तस्मिन्नप्रतिपत्तौ विप्रतिपत्तौ वा तदुपायपर्य्येषणमपि युक्तम्, तस्माच्छास्त्रसंग्रहादनन्तरं त्रिवर्गप्रतिपत्तिरुच्यत इति प्रकरणसम्बन्धः। उद्देशापेक्षया च सम्बन्धित्वे कथमुद्देश इति चिन्त्यम्, प्रतिपत्तिस्त्रिविधा-अनुष्ठान,मवबोधः, संप्रतिपत्ति,श्चेति। तत्र प्राधान्यादनुष्ठानमधिकृत्याह—

शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत ॥ १ ॥

शतायुरिति। शतमायुरस्येति शतायुः, शतशब्दः सामान्यवाच्यपि वर्षगतसंख्यानमाह, वृत्तौ तथाऽर्थस्य विवक्षितत्वात्, कालविभागार्थं वैतदपरिच्छिन्नायुषो विभागसम्भवात् पुरुष इति प्राधान्यख्यापनार्थम्, स्त्रीणां तु पुरुषाधीना त्रिवर्गसेवेत्यस्वातन्त्र्यम्। विभज्य वक्ष्यमाणेन न्यायेन। अन्योन्यानुबद्धमिति। धर्मादीनामन्यतमं द्वाभ्यामेकेन वाऽनुबद्धम्। तद्यथा-प्रजाऽर्थिनो धर्मपत्न्यामनभिप्रेताया-

मृतावभिगमनं धर्मोऽर्थानुबद्धः, अप्रजार्थिनोऽभिप्रेतायां पत्न्यामभिगमनं धर्मः कामानुबद्धः, अपरिणीतस्य सवर्णादनभिप्रेतकन्यालाभोऽर्थो धर्मानुबद्धः, परिणीतस्यासमवर्णादभिप्रेतकन्यालाभोऽर्थः कामानुबद्धः, धर्मपत्न्यामभिप्रेतायामृतौ कामो धर्मानुबद्धः, परिणीतस्य निष्किञ्चनस्याधमवर्णायामर्थवत्यामभिप्रेतायामधिगतायां कामोऽर्थानुबद्धः, इत्येकानुबद्धाः । अपरिणीतस्य सवर्णायामनन्यपूर्वायामभिप्रेतायां यथाविधि संयोगो धर्मोऽर्थकामानुबद्धः, तस्यैवाभिप्रेतसवर्णकन्यालाभोऽर्थो धर्मकामानुबद्धः, तस्यैवार्थरूपवत्यां परस्परोत्कण्ठयोद्वाहितायां कामो धर्मार्थानुबद्ध, इति द्व्यनुबद्धाः । परस्परस्यानुपघातकमिति । यत्रानुबन्धो नास्ति तत्रैकमितरयोरनुपघातकम्, एकानुबन्धे चान्यस्यानुपघातकं सेवेत । अत्रोदाहरणं वक्ष्यामः ॥ ४ ॥

वयोद्वारेण कालविभागमाह—

बाल्ये विद्याग्रहणादीनर्थान् ॥ २ ॥

बाल्य इति । वयोविभागस्तन्त्रान्तर उक्तः—

'आ षोडशाद्भवेद् बालो यावत्क्षीरानुवर्त्तकः ।
मध्यमः सप्ततिं यावत्परतो वृद्ध उच्यते' ॥ इति ।

विद्याग्रहणमादिर्येषामर्थानां तान्सेवेतेति ॥ २ ॥

एवम्—

कामं च यौवने ॥ ३ ॥

कामं यौवने तदोचितत्वात् ॥ ३ ॥

स्थाविरे धर्मं मोक्षं च ॥ ४ ॥

स्थाविरे धर्ममोक्षावननुभूतविषयत्वाद्, मोक्षग्रहणं परमतापेक्षम्, ज्ञानवादिनां चतुर्वर्गः पुरुषार्थः, अस्मिन्नेव काले तैरप्याध्यात्मिकं चिन्त्यमिति ।

ननु त्रिवर्गस्य नियतकालत्वादन्योन्यानुबन्धो नास्ति, ततश्चासेवनप्रसङ्ग इति ? नायं नियमः, अनुबद्धत्वाभावे निरनुबद्धत्वमप्युक्तम्, अथ वा यथाकालमहन्यहनि सेवा प्रतिषेधपरत्वाद्धर्मादिनियमस्य, यथाकालं तु धर्मादिषु सेव्यमानेषु यद्यदाऽनुषङ्गादितरानुबन्धो नास्ति ततश्च भवतु न दोषाय ॥ ४ ॥

अनित्यत्वादायुषो यथोपपादं वा सेवेत ॥ ५ ॥

अनित्यत्वादिति । वर्षशतादर्वाग्विनाशदर्शनात् । यथोपपादमिति । यद्यदोपपद्यते तत् तदा सेवेत बाल्येऽर्थं धर्ममपि, यौवने कामं धर्मा-

र्थावपि, स्थाविरे धर्मम् अर्थकामानुष्ठानसामर्थ्यं चेत्तावपीति । अन्यथैकसेवायामसमग्रः पुरुषार्थः स्यात् । सेवेतेति पुनर्वचनं पूर्वस्मात्पक्षात्पक्षान्तराद्दरार्थम् ॥ ५ ॥

अस्मिन्पक्षे विद्याग्रहणाद्यर्थस्य सेवायाः कालत्रयेऽपि संभवान्नियमयति—

ब्रह्मचर्यमेव त्वा विद्याग्रहणात् ॥ ६ ॥

यावद्विद्या न गृह्यते तावत्कामं न सेवेत; अन्यथा ह्यधर्मस्तद्ग्रहणविघाततः; विद्याऽर्थलाभाभावश्च, भूम्याद्यर्जने तु न नियमः,

अन्ये तु विद्याग्रहणवर्जं प्रायेण भूम्याद्यर्जनं न संभवति; अतस्त्रयस्त्रिंशदब्दाश्चत्वारश्च मासा इति प्रत्येकं वयो विभज्य योजयन्ति, अस्मिन्विभागे षोडशवर्षादूर्ध्वं कामसम्भवाद्, बाल्येऽपि धर्मार्थकामान्सेवेतेत्युक्तमनुष्ठानम् ॥ ६ ॥

अवबोधस्वरूपं; यतश्च परिज्ञातं तदुभयमप्याह—अलौकिकत्वादित्यादिना ।

अलौकिकत्वाददृष्टार्थत्वादप्रवृत्तानां यज्ञादीनां शास्त्रात्प्रवर्तनम्; लौकिकत्वाद् दृष्टार्थत्वाच्च प्रवृत्तेभ्यश्च मांसभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः ॥ ७ ॥

तत्र लोके रूपादिवदविदितस्वरूपत्वादलौकिका यज्ञादयः ।

ननु विशिष्टद्रव्यगुणकर्मात्मकत्वाद्विदितस्वरूपाः कथमलौकिकाः ? इत्यत आह—अदृष्टार्थत्वादिति, तेषामनन्तरं फलस्यादर्शनात् । येऽदृष्टफलाः सन्तोऽलौकिका न ते प्रेक्षावद्भिरदृष्टसामर्थ्यौषधिवत्प्रवर्त्यन्त इत्यप्रवृत्ताः, आदिशब्दात्तपश्चरणादयः, तेषामप्रवृत्तानां शास्त्रात्प्रवर्त्तनं धर्म इति; अयं प्रवृत्तिरूपो धर्मः । लौकिकत्वाद् दृष्टार्थत्वादिति। ये दृष्टतृप्त्यादिफलाः सन्तो लौकिकास्ते तदर्थिभिर्मृगादिमांसभक्षणवत्प्रवर्त्यन्ते; तस्मात्प्रवृत्तेभ्यश्च मांसभक्षणादिभ्य आदिशब्दात्सत्त्वाभिद्रोहपरस्वादानादिभ्यः शास्त्रादेव निवारणं प्रतिषेधनमिति; अयं निवृत्तिरूपः। कथमिव शास्त्रं प्रमाणमिति चेदुत्तरत्र वक्ष्यति ॥ ७ ॥

तं श्रुतेर्धर्मज्ञसमवायाच्च प्रतिपद्येत ॥ ८ ॥

तमिति। उक्तस्वरूपं धर्मम् । श्रुतेरिति । स्मृत्यनुगताद्वेदाद्, योऽधिकृतः शास्त्रे, अनधिकृतो वा धर्मज्ञसमवायात्=स्मृत्यर्थतत्त्वज्ञसंसर्गादित्यर्थः. प्रतिपद्येत=अवबुध्येत ॥ ८ ॥

विद्याभूमिहिरण्यपशुधान्यभाण्डोपस्करमित्रादीनामर्जनमर्जितस्य विवर्धनमर्थः ॥ ९ ॥

विद्याः=आन्वीक्षिक्यादयः । भूमिः=कृष्टा कृष्या वा । हिरण्यं=सुवर्णादि, पशुः=हस्त्यश्वादिः, धान्यं=पूर्वमध्यावरवापः,=भाण्डोपस्करं=गृहोपकरणं लोहकाष्ठमृद्विदलचर्ममयम्, मित्रं=सहपांशुक्रीडितादि, आदिशब्दाद्वस्त्राभरणादयः । अर्जनं द्विविधम्–निष्पन्नानां हस्त्यादीनां स्वीकरणम्; अनिष्पन्नानां च धान्यादीनां निष्पादनम् । अर्जितस्येत्येकवचनमेकैकस्य द्रव्यस्यार्जनवर्धनयोरर्थतत्त्वे द्वाविति दर्शनार्थम्, अन्यथा समुदायस्यैवार्जनं बर्धनं चार्थः स्यात् । वर्धनमुपायः । भूम्यादिरर्जितावर्जितश्चार्था इति वक्तव्ये; अर्जनवर्धनग्रहणं शास्त्रव्यापारदर्शनार्थम्, तयोः शास्त्रेणोपदिश्यमानत्वात् ॥ ९ ॥

तमध्यक्षप्रचाराद्वार्तासमयविद्भ्यो वणिग्भ्यश्चेति ॥ १० ॥

तमिति । अर्जनवर्धनस्वरूपम् । अध्यक्षाः प्रचरन्त्यनेनेत्यध्यक्षप्रचारः=शास्त्रम् ; तस्माच्छास्त्रे योऽधिकृतः, इतरश्च वार्तासमयविद्भ्यः कृषिपाशुपाल्यवाणिज्यादितत्त्वविद्भ्यः, वणिग्भ्य इत्युपलक्षणार्थम्, कर्षकेभ्यो गवादिपोषकेभ्यश्च प्रतिपद्येतेति ॥ १० ॥

एवम्

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाऽधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः ॥ ११ ॥

त्वगिति कामेन्द्रियम्, कामो द्विविधः–सामान्यो; विशेषश्च, तत्र सामान्यमाह--आत्मसंयुक्तेन मनसेति। आत्मा समवायिकारणम्: सुखदुःखेच्छाद्वेषप्रयत्नादिगुणानां तत्र समवायात्, तत्र यदाऽस्य प्रयत्नगुण उत्पद्यते तदाऽयं मनसा संयुज्यते; मन इन्द्रियेण; इत्यनेन क्रमेणाधिष्ठितानाम् । स्वेषु स्वेष्विति । यथाक्रमं शब्दस्पर्शरूपरसगन्धेषु । आनुकूल्यत इति । यदाऽऽत्मनः शब्दादीनां बुद्धीन्द्रियाणामानुलोम्येन या प्रवृत्तिः, इच्छोपगृहीता श्रोत्रादिबुद्धिरित्यर्थः, सा विषयोपभोगस्वभावात् काम इत्युपचर्यते, आत्मा हि तद्द्वारेण विषयं भुञ्जानः सुखमनुभवति यत्तत्सुखं प्रधानं कामः, तस्य निबन्धनमिच्छोपगृहीता प्रवृत्तिः, साऽपि काम इत्युच्यते, तस्माद्धेतुफलभेदात्सामान्यकामो द्विविधः । प्रातिकूल्यतः प्रवृत्तिस्तु दुःखहेतुत्वाद् द्वेष इत्यर्थोक्तम् ॥ ११ ॥

विशेषकामो द्विविधः–प्रधानम्; अप्रधानं च, तदुभयमपि दर्शयन्नाह–

स्पर्शविशेषविषये त्वस्याभिमानिकसुखानुविद्धा फलवत्यर्थप्रतीतिः प्राधान्यात्कामः ॥ १२ ॥

स्पर्शविशेषविषये त्विति । वाक्पाणिपादपायूपस्थानि=कर्मेन्द्रियाणि; तेषां वचनादानविहरणोत्सर्गानन्दकर्मनिष्पादनात्, तत्र स्त्रीपुंसयोर्यदधो व्यञ्जनं संबाधकादि तन्मात्रस्वभावं तत्त्वगिन्द्रियमेव; तस्य कश्चिदेव प्रदेशविशेष उपस्थेन्द्रियमुच्यते, यो विसृष्टयवस्थायामानन्दजं कर्म जनयति, तस्य व्यञ्जनस्य योऽन्तर्गतः स्पर्शः स स्पर्शविशेषः; तस्मिन्विषये प्रतीतिरसावर्थप्रतीतिस्त्वगिन्द्रियबुद्धिः, अस्याः संप्रयोगेच्छालक्षणः कामिताऽऽख्यो भावः कारणम् । अस्येति । स्त्र्यात्मनः; पुरुषात्मनश्च, तत्र स्त्र्यात्मनः पुरुषव्यञ्जनस्पर्शविशेषविषये स्त्रीव्यञ्जनत्वगिन्द्रियप्रतीतिः; पुरुषात्मनश्च स्त्रीव्यञ्जनस्पर्शविशेषविषये पुरुषव्यञ्जनत्वगिन्द्रियप्रतीतिरित्यर्थः । विशेषदेशोपग्रहणात्पुरुषस्योरुकक्षादिस्पर्शनविषये; स्त्रियाश्चापद्रव्यस्पर्शविषये प्रतीतिर्निरस्ता, तस्या अप्रधानत्वात्, एवंविधा प्रतीतिः सामान्यकाम एव, कथं विशेषत्वमिति चेद् ? आह–फलवतीति । तस्यां प्रतीतौ प्रबन्धेनोत्पद्यमानायां शुक्रक्षरणेन तत्तुल्यकालमेव चानन्दाख्यं फलं सुखमित्युक्तम्, तेन युक्ता शुक्रस्पर्शविशेषविषये विषयप्रीतिरपरा भवति, तस्याश्च पूर्विकैव प्रतीतिरफला कारणम्, अतो विषयभेदात्स्वरूपभेदाच्च द्विधा प्रतीतिः । अर्थप्रतीतिरिति । अर्थग्रहणात्स्वप्नव्यञ्जनस्पर्शार्थस्यालीकत्वात्फलवत्यपि न कामः, तस्या अप्रधानत्वात्। यद्येवं वियोनावयोनौ वाऽनभिप्रेतेऽर्थप्रतीतिरेवंविधाऽप्यस्तीत्यत आह—आभिमानिकसुखानुविद्धेति । आभिमानिकं चुम्बनादिसुखं वक्ष्यति । चुम्बननखदशनच्छेद्यादिषु हि तत्र तत्र स्थानेषु प्रयुज्यमानेषु स्त्रीपुंसयो रागः संकल्पवशात्सुखमित्यभिमन्यते, तेन सुखेनानुविद्धेत्याक्षिप्तसंस्कारेऽर्थप्रतीतिः प्राधान्यात्कामः, तेन वियोनावयोनौ वाऽनभिप्रेतस्त्रीपुंसयोः फलवत्यर्थप्रतीतिर्न कामः, आभिमानिकसुखाभावात्, तस्मात्स्प्रष्टव्यविशेषविषयो विशेषः कामः ॥ १२ ॥

तं कामसूत्रान्नागरिकजनसमवायाच्च प्रतिपद्येत ॥ १३ ॥

तमिति । उक्तस्वरूपं सामान्यं विशेषं च, प्रधानमप्रधानं च । कामसूत्रादस्मादेव, शास्त्रेऽधिकृतो यः, इतरश्च नागरिकसमवायात्कामव्यवहारज्ञसंपर्कात्प्रतिपद्येतेति ॥ १३ ॥

एवं धर्मादीनि युगपत्सेवितुमधिगन्तुं वा न संभवन्तीति गौरवलाघवमपि बुध्येतेत्याह—

तेषां समवाये पूर्वः पूर्वो गरीयान् ॥ १४ ॥

तेषामपि समवाये संनिपाते, तदुपायसंनिधानात् पूर्वः पूर्व इति कामादर्थो गरीयान्, कामस्यार्थसाध्यत्वात्, ततोऽपि धर्मः अर्थस्य धर्मसाध्यत्वात् ॥ १४ ॥

नायं सर्वविधिविषयक्रम इत्यत आह—

अर्थश्च राज्ञः ॥ १५ ॥

अर्थस्तु राज्ञो गरीयान् इति ॥ १५ ॥

तन्मूलकत्वाल्लोकयात्रायाः ॥ १६ ॥

तन्मूलकत्वादिति । वर्णाश्रमाचारलक्षणा लोकयात्रा, सा मा भूदन्यथेति तस्याः पालनं राज्ञो धर्मः, तच्च प्रभुशक्तौ सत्याम्, प्रभुशक्तिश्च कोषदण्डबलम्, ते चार्थत इति तन्मूला लोकयात्रा ॥ १६ ॥

वेश्यायाश्च ॥ १७ ॥

इति त्रिवर्गप्रतिपत्तिः ।

वेश्यायाश्चार्थो गरीयान्, अर्थनिबन्धनत्वात्तज्जीविकायाः । वेश्या हि कामातुरब्राह्मणाभिप्रेतनागरिकविषयौ धर्मकामावुपनतौ त्यक्त्वा पश्चाद्विध्यत इत्यनिष्टेऽप्ययमर्थद इति प्रवर्तत इति ॥ १७ ॥

त्रिवर्गप्रतिपत्तिरनुष्ठानावबोधलक्षणोक्तेत्यर्थः ।

इदानीं विप्रतिपत्तिपूर्विकां संप्रतिपत्तिं दर्शयन्नाह—

धर्मस्यालौकिकत्वात्तदभिधायकं शास्त्रं युक्तम् ॥ १८ ॥

धर्मस्येत्यादि । कामसूत्र एव तद्विप्रतिपत्तिं दर्शयति—अलौकिकत्वादिति, यथोक्तं प्राक्, अभिधायकं ज्ञापकं शास्त्रम् ॥ १८ ॥

उपायपूर्वकत्वादर्थसिद्धेः ॥ १९ ॥

अर्थसिद्धेरिति । अर्जनवर्धनाख्या चार्थसिद्धिः ॥ १९ ॥

उपायप्रतिपत्तिः शास्त्रात् ॥ २० ॥

अन्यथोपायं विना प्रवर्तमानस्यार्थोऽपि न स्यात्, तस्योपायश्च ॥ २० ॥

तत्र धर्मार्थमर्थार्थं च शास्त्रं युक्तम्, कामार्थं त्वयुक्तमित्याह—

तिर्यग्योनिष्वपि तु स्वयं प्रवृत्तत्वात्कामस्य नित्यत्वाच्च न शास्त्रेण कृत्यमस्तीत्याचार्याः ॥ २१ ॥

तिर्यग्योनिष्वपीति । गवादिष्वपि तमोबहुलेषु शास्त्रोपदेशं विना कामः प्रवर्तमानो दृश्यते, किं पुनर्मनुष्येषु रजोबहुलेषु न प्रवर्ततेति, तथा चोक्तम्—

'विनोपदेशं सिद्धो हि कामोऽनाख्यातशिक्षितः ।

स्वकान्तारमणोपाये को गुरुर्मृगपक्षिणामिति ॥

नित्यत्वाच्चेति । आत्मनि द्रव्यपदार्थे सदैवेच्छाद्वेषादयो गुणाः स्थिताः, ततश्च नित्यः कामः । तथा चोक्तम्—

'मुमुक्षवोऽपि सज्यन्ति विरागाद्रागपूर्वकात् ।
विषयेच्छाऽनुवर्त्तिन्यो निसर्गात्प्राणिनां धियः' ॥

तस्मात्प्रवर्तमानेन शास्त्रेण न कार्यं; तन्निवर्तनं तु युक्तम् । आचार्याः=धर्मार्थमोक्षवादिनः ॥ २१ ॥

अत्र संप्रतिपत्तिमाह—

सम्प्रयोगपराधीनत्वात्स्त्रीपुंसयोरुपायमपेक्षते ॥ २२ ॥

सम्प्रयोगपराधीनत्वादिति । विशेषः सामान्यो वा कामः सम्प्रयोगपराधीनः, सम्प्रयोगश्च द्विविधः-आयतनसम्प्रयोगोऽङ्गसम्प्रयोगश्च । तत्रायतनं कामस्य स्त्र्यधिष्ठानम् , अङ्गानि च माल्यादीनि । तथा चोक्तम्—

'सुखं कामस्तदङ्गानि भूषणालेपनस्रजः ।
तथोपवनहर्म्यञ्च वल्लकीमदिराऽऽदयः ॥
अस्यायतनमुद्दामरूपयौवनविभ्रमाः ।
ललनाश्चातुदाक्षिण्याश्चाकृष्टजनमानसाः' ॥ इति ।

तत्रायतने यः सम्प्रयोगः स आयतनसम्प्रयोगः, स च द्विविधः वाह्य आभ्यन्तरश्च, तत्र यो रहसि स आभ्यन्तरो रताख्यः, स विशेषकामस्य निमित्तम् , वाह्यः समागमलक्षणो रतस्य, यश्च बुद्धीन्द्रियाणां यथास्वमङ्गैः सम्प्रयोगः सोऽङ्गसम्प्रयोग इति इन्द्रियार्थसंनिकर्षलक्षणः स च सामान्यकामस्य निमित्तम् ; अनयोश्च कामयोर्यथास्वं पूर्वोक्तमेवेच्छा कारणम् तत्पूर्वकत्वात् , तदभावेऽभावात् । तत्राद्यः सम्प्रयोगः समागमलक्षणः, स स्त्रीपुंसयोरन्यतरानिच्छया रक्षणाल्लज्जया भयाद्वा परतन्त्रायां न घटत इत्यत्रायमुपायमपेक्षते; रताख्यश्च पाश्चात्यश्चतुःषष्टिप्रयोगानभिज्ञयोः कथं स्यादिति तमुपायम् ; द्वितीयोऽपि सम्प्रयोगो नित्यनैमित्तिकनागरिकवृत्तं विना न भवतीत्युपायापेक्षा २२॥

सा चोपायप्रतिपत्तिः कामसूत्रादिति वात्स्यायनः ॥ २३ ॥

उपायपरिज्ञानं च कामसूत्रात् , तेनोपदिश्यमानत्वात् । वात्स्यायन-इति स्वगोत्रनिमित्ता समाख्या, मल्लनाग इति च सांस्कारिकी ॥ २३ ॥

गवादिषु कथमिति चेत्तदाह—

तिर्यग्योनिषु पुनरनावृतत्वात्स्त्रीजातेश्च ऋतौ यावदर्थं प्रवृत्तेरबुद्धिपूर्वकत्वाच्च प्रवृत्तीनामनुपायः प्रत्यक्षः ॥ २४ ॥

पुनःशब्दो विशेषणार्थः । अनावृतत्वादिति । रक्षणाद्यावरणाभावात् स्त्रीजातिः स्वतन्त्रा; किं तत्रोपायेनेत्यनुपायः प्रत्यय इति सम्बन्धः । प्रत्ययशब्देनोभयरूपोऽपि सम्प्रयोग उक्तः; तस्य कामोत्पत्तौ निमित्तत्वात्, तत्रावरणाभावादाचार्योक्तोपायशून्यः समागम इत्यर्थः । ऋतौ यावदर्थमिति । ऋतुकाल एव ते तिर्यञ्चः सम्प्रयुज्यन्ते, मनुष्यास्तु प्रजाऽर्थमृतौ, स्त्रीरमणार्थं चानृतावपीत्यसमानम्, तथा चोक्तम्—'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' इति, तत्रापि यावदर्थं-यावदेव तृप्तिलक्षणोऽर्थो निष्पद्यते तावदेव सम्प्रयुज्यन्ते; न तु द्वितीयं-सम्प्रयोगमपेक्षन्ते-किमस्य तृप्तिरभून्न वा? इति, तस्मादसमानार्थत्वादनुपायप्रत्यय आभ्यन्तरसम्प्रयोगः, तत्र समानार्थतालक्षणं प्रेम स्त्रीरक्षणोपायो नास्तीति, मनुष्येष्वेवमिति चेद्? अत एवास्योपदेशः, अन्यथा तथा समानार्थत्वादनुपायः, तत्पत्न्याः पुरुषान्तरगमने न कश्चित्पुरुषार्थोऽस्य स्यात्, तथा चोक्तम्—

'भजते संभृतप्रेमा परं चेदस्य कामिनी ।
नष्टे धर्मे हते वृत्ते सुखं दूरे हतं कुलम्' ॥

तस्मात्समानार्थताजन्यमेव प्रेम स्त्रीरक्षणोपायः, यच्च स्त्रीरक्षणार्थमनुप्रोक्तमसुकुमारत्वसाधनार्थं कुट्टनादि गृहकर्म तदुपायोद्वेगजननादनुपाय एव, तथा चोक्तम्—

'कर्माण्यसुकुमाराणि रक्षणार्थेऽवदन्मनुः ।
तासां स्रज इवोद्दामगजालानोपसंहिताः ॥
असति प्रेम्णि तत्सर्वमित्याचार्या व्यवस्थिताः ।
समानार्थतया तच्च न शास्त्रेणोपदिश्यते ॥ इति,

अबुद्धिपूर्वकत्वादिति । धर्मोऽर्थः पुत्राः सम्बन्धः पक्षवृद्धिः स्यादित्येवं बुद्धिपूर्वं न प्रवर्तन्ते; केवलं पशुधर्ममात्रेणेत्यनुपायप्रत्यय आभ्यन्तरसंप्रयोगः; अनुबन्धोपायरहितत्वात्, तस्माद् दैवरक्ताः किंशुका इति किं-तिर्यग्योनिषु शास्त्रप्रणयनेन, अनुकूलेषु वा पुरुषेषु, इतरत्र तु विपर्ययेण स उपायप्रत्यय इति युक्तं शास्त्रप्रणयनम् ॥ २४ ॥

धर्मे विप्रतिपत्तिमाह—

न धर्मांश्चरेत् ॥ २५ ॥

॥ २५ ॥

एष्यत्फलत्वात् ॥ २६ ॥

एष्यत्फलत्वादिति । यज्ञादयो नैहलौकिकाः जन्मान्तरफला उक्ताः,

हस्तगतद्रव्यत्यागे न प्रेक्षावान्समीहते किं त्विहैव कृष्यादिफलं निष्पाद्योपभुङ्क्ते न परम्परामपेक्षते ॥ २६ ॥

सांशयिकत्वाच्च ॥ २७ ॥

सांशयिकत्वाच्च भविष्यतः फलस्येति । उपस्कारतस्तपश्चर्याक्लेशादर्थक्षयाच्च निष्पादितेऽपि यज्ञादौ ततः किं स्वर्गादिफलं स्यान्न वेति ? सन्दिग्धम्, कारणानां कार्योत्पादननियमादर्शनात्(१) सन्दिग्धे च कोऽसंशयितार्थत्यागेन प्रवर्तत इति हेतुद्वयम् ॥ २७ ॥

तत्र प्रथमस्य लोकप्रसिद्धिमाह--

को ह्यबालिशो हस्तगतं परगतं कुर्यात् ॥ २८ ॥

को हीति । अबालिशः=प्रेक्षावान् यथा कश्चित्स्वहस्तगतं द्रव्यं परहस्तीकृतं कार्यकाले स्वयं गत्वा साध्यं हारितं भक्षितं वाऽनेन स्यादिति न विप्रकृष्टं करोति, तथा जन्मान्तरे भोक्ष्येऽहमिति यज्ञादिषु नियोज्य; विप्रकृष्टं कः कुर्याद् नैतत्स्याद् ॥ २८ ॥

इह द्रव्यं साध्यफलं तावन्मात्रकं तावत्कालं वाऽमुत्र विपरीतमित्याह--

वरमद्य कपोतः श्वो मयूरात् ॥ २९ ॥

वरमद्येति । यथा पक्षिमांसार्थिनो महतः श्वो मयूरलाभादद्य कपोतलाभोऽपि गरीयांस्तद्वदिहापीति ॥ २९ ॥

द्वितीयस्य लोकप्रसिद्धिमाह--

वरं सांशयिकान्निष्कादसांशयिकः कार्षापणइति लौकायतिकाः ॥ ३० ॥

वरमिति । गृहाण कार्षापणं, नो चेदेष्यति मेऽद्य हेमशतं ततो निष्कं दास्यामीति, तत्र प्रत्युपस्थितकार्यस्यासंदिग्धं स्वल्पोऽपि कार्षापणो गरीयान् संदिग्धनिष्कात् । लौकायतिका इति लोकायतमधीयते ये (२) उक्थादिपाठाट्ठक्प्रत्ययः ॥ ३० ॥

तत्र सम्प्रतिपत्तिमाह—

शास्त्रस्यानभिशङ्क्यत्वादभिचारानुव्याहारयोश्च क्वचित्फलदर्शनाद्, नक्षत्रचन्द्रसूर्यताराग्रहचक्रस्य लोकार्थं बुद्धिपूर्वकमिव प्रवृ-

(१) अज्ञातहेतुताकसामग्रीघटककिञ्चिद्धेत्वभावदशायामस्ति गोग्यतेदृशव्यभिचारप्रतिपत्तेः ।

(२) क्रतूक्थादिसूत्रान्ताट्ठक् । ४ । २ । ६० । इतिसूत्रेण ।

त्तेर्दर्शनाद्, वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः, हस्तगतस्य च बीजस्य भविष्यतः सस्यस्यार्थे त्यागदर्शनात्, चरेद्धर्मानिति वात्स्यायनः ॥ ३१ ॥

शास्त्रस्येति। धर्मस्यालौकिकत्वात्तदभिधायकं शास्त्रं युक्तम्, तच्छास्त्रं पौरुषेयमपौरुषेयं च, तत्र पूर्वमभिशङ्कनीयं-"किमिदं सत्यं मिथ्या वे"ति पुरुषा हि रागादिभिरविद्यया वोपप्लुता वितथमपि ब्रुवन्ति, अपौरुषेयं च वेदाख्यं पुरुषसम्बन्धाभावाददुष्टमनभिशङ्कनीयम्, यथोक्तम्--

'दोषाः सन्ति न सन्तीति पौरुषेयस्य युज्यते ।
वेदे कर्तुरभावात्तु दोषशङ्कैव नास्ति नः ॥ इति,

अपौरुषेयत्वसाधनमन्य(१)त्रोक्तमिति नेहोपन्यस्तं ग्रन्थगौरवभयात्, तस्मादनभिशङ्क्यत्वात् तच्चोदितेऽर्थे न संशयीतेति चरेद् धर्मानिति सम्बन्धः, तेन संशयितत्वादित्येतदसिद्धम् अभिचारः=हिंसाऽऽत्मकं कर्म, अनुव्याहारः=शान्तिकपौष्टिकं, तयोश्चोदितयोः, अभिचरञ्श्येनेन यजेते'-त्यादिना यत्र प्रयुज्यते तत्र हिंसाशान्तिपुष्टिफलदर्शनाच्छेषस्याप्यग्निहोत्रादेः स्वर्गादि फलं भविष्यतीति चरेद्धर्मान् न ह्यपौरुषेयत्वेनाभिन्नयोर्वितथावितथत्वभेदो युज्यते वितथत्वे चेतरस्यापि वितथत्वप्रसङ्गाद्, अदृष्टसाधनमाह-नक्षत्रेति । नक्षत्राण्यश्विन्यादीनि चन्द्रसूर्यौ प्रसिद्धौ ताराग्रहा अङ्गारकादयः पञ्च तेषां चक्रमिव चक्रं संनिवेशविशेषो द्वादशराशिविभक्तं तस्य; लोकार्थं नात्मार्थम्, बुद्धिपूर्वकमिवेति । बुद्धिपूर्वकस्येव, यथा कश्चित्पुरुषो बुद्धिपूर्वं प्रवर्तते तद्वदेवैते सूर्यादयो नक्षत्रेण युज्यमाना अन्यथाऽन्यथा प्रवर्तमाना दृश्यन्ते न च तथैवेतीवार्थः, तथा ह्येषां न 'लोकस्येदं करिष्यामः'इति प्रवृत्तिः, सा च शास्त्रान्तरे बहुप्रकारोक्ता, दर्शनादितिवचनात्प्रत्यक्षप्रमाणसिद्धेति दर्शयति, तस्यां च प्रवृत्तौ लोकस्य शुभाशुभात्मकं फलं द्विविधम्—साधारणमसाधारणं च, तत्र साधारणं सुभिक्षदुर्भिक्षादि तच्च ग्रहचारे द्रष्टव्यम्, असाधारणं तु प्रतिसत्त्वं प्रतिनियतं लाभालाभसुखदुःखादि, तच्च जातके द्रष्टव्यम्, सैव द्विधा प्रवृत्तिः कारणान्तरमदृष्टं गमयति, तच्च लोकस्य शुभाशुभात्कर्मणः; अन्यथैषामेकरूपाणां कारणान्तरनिरपेक्षाणां सदाप्रवृत्तिरप्रवृत्तिर्वा स्यात्, कालान्नियम इति चेत् ? सोऽपि कारणनिरपेक्षः

(१) वाचा विरूपानित्ययेति श्रुतिः । अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवेति स्मृतिश्च ।

सर्वदा स्यात्, तस्मादस्ति तत्प्रवर्तकमदृष्टमिति चरेद्‌ धर्मान्, उक्तं च--

'नक्षत्रग्रहपञ्जरमहर्निशं लोककर्मविक्षिप्तम् ।
भ्रमति शुभाशुभमखिलं प्रकाशयत् पूर्वजन्मकृतम् ॥ इति,

वर्णाश्रमेति । वर्णाः=ब्राह्मणादयः, आश्रमाः=ब्रह्मचर्यगार्हस्थ्यादयः, तेषामाचारः स्वधर्मः तस्य स्थितिर्व्यवस्था सैव लक्षणं यस्या लोकयात्रायाः, सा लौकायतिकैर्मा भूदव्यवस्थायां मात्स्यो न्याय इति दृष्टार्थं-वर्णिता, 'संवरणमात्रं हि त्रयी लोकयात्राविद' इति; तां च लोकविश्वासनार्थमाचरद्भिः कथं नाचरितो धर्मः, दृष्टार्थश्च यद्यदृष्टार्थोऽपि स्यात्को विरोधः, एतेन 'न धर्मांश्चरेद्' इति प्रतिज्ञाया अभ्युपगमबाधां दर्शयति, यच्चोक्तम्-"एष्यत्फलत्वा"दिति तद्‌ दृष्टेऽप्यस्तीति दर्शयन्नाह-हस्तगतस्येति । तुल्ये भविष्यत्फलत्वे सति; नैकत्र प्रवृत्तिरन्यत्र निषेध इति युक्तियुक्तम्, न कदा चित्तत्र दृष्टमिति चेत् ? कथं तर्हि लोकवैचित्र्यम्, न हि सर्वत्र समानाद्‌ दृष्टात्कारणादैश्वर्यादिफललाभः, नापि स्वाभाविकं कर्म; सदा सिद्ध्यसिद्धिप्रसङ्गात् ॥ ३१ ॥

अर्थविप्रतिपत्तिमाह—

नार्थांश्चरेत् ॥ ३२ ॥

नार्थानिति । उपायात्किलार्थसिद्धिः, उपायानुष्ठानं च यत्नस्तन्नानुतिष्ठेदित्यर्थः ॥ ३२ ॥

प्रयत्नतोऽपि ह्येतेऽनुष्ठीयमाना नैव कदा चित्स्युः ॥ ३३ ॥

न चान्वयव्यतिरेकानुविधानादर्थसिद्धेः, यदाह- प्रयत्नत इति । प्रयत्नेनावर्ज्यमाना नैव कदा चित्स्युरित्यर्थोक्तम्, यदा स्युस्तदा कालसंनिधानादिति मन्यन्ते; अनुष्ठीयमानाः प्रयत्नेनेत्यर्थः ॥ ३३ ॥

अननुष्ठीयमाना अपि यदृच्छया भवेयुः ॥ ३४ ॥

यदृच्छयेति । एवमेव स्युः, अकस्मान्निधानादिदर्शनात् ; तस्मादुपायपरिज्ञानार्थकम् ॥ ३४ ॥

किंकृतं तर्ह्येतद्‌ ? इत्याह—

तत्सर्वं कालकारितमिति ॥ ३५ ॥

तत्सर्वमिति । अर्थस्य भवनमभवनं, लोकस्येष्टमनिष्टं कालकारितमिति; कालो नाम द्रव्यपदार्थो नित्यः तेन कारितमिति-प्रयोजकव्यापारेण पुरुषस्य परायत्ततामाह ॥ ३५ ॥

तदेव दर्शयन्नाह—

काल एव हि पुरुषानर्थानर्थयोर्जयपराजययोः सुखदुःखयोश्च स्थापयति ॥ ३६ ॥

कालएवेति। हेयोपादेयाः षट्पदार्था लाभालाभा(१)दयः; तेषु काल एव प्रवर्तयति, न त्यागोपादानार्थं स्वयं यत्नमातिष्ठेदित्यर्थः ॥ ३६ ॥

लोकप्रसिद्धिमाह—

**कालेन बलिरिन्द्रः कृतः, कालेन व्यवरोपितः काल एव पुनरप्येनं कर्तेति कालकारणिकाः ॥ ३७ ॥**

कालेनेति । इन्द्रः कृतः, हेयप्रकृतिकोऽप्यसुरत्वादनर्होऽपि शक्रपदे प्रेरितः स्थापितः । व्यवरोपित इति । परिवर्तमानेन तस्मात्पदादपनीय पाताले नियोजितः । पुनरप्येनं कर्तेति । विपरिवर्तिष्यमाणः प्रेरयन्निन्द्रं करिष्यतीत्यर्थः, तथा चाहुः—

'कालः पचति भूतानि कालः संहरति प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ इति,

कालकारणिका ये कालकारणमधीयते, ऐश्वरकारणिका अप्येवमेव द्रष्टव्याः, तुल्ययोगक्षेमत्वात् ॥ ३७ ॥

अत्र संप्रतिपत्तिमाह—

**पुरुषकारपूर्वकत्वात्सर्वप्रवृत्तीनामुपायः प्रत्ययः ॥ ३८ ॥**

पुरुषकारपूर्वकत्वादिति । कालादुपायतो वाऽर्थसिद्धौ तदर्थिनो याः प्रवृत्तयस्ताः सर्वाः पुरुषकारपूर्विका दृष्टाः, उभयत्रापि पुरुषकारस्य व्याप्रियमाणत्वात् पुरुषकारश्चोपायं विना नार्थं साधयतीत्युपायः प्रत्ययः, कारणमर्थसिद्धेरित्यर्थः, यथैव हि पुरुषकारोऽर्थसिद्धौ कालमपेक्षते तथा हि शक्तिदेशसाधनान्युपायाः, तेषु सर्वेष्वसत्सु कालस्याकिंचित्करत्वाद् असति काले तेषामसामर्थ्यात् तस्माच्छक्तिदेशकालसाधनानि परस्परापेक्षाणि कार्यस्य साधकानीति नान्य एवोपायः, तत्र शक्त्यादिषु पुरुषकारार्थसिद्धेरनुगुणेषु त्ववश्यमेव सिद्धिः ॥ ३८ ॥

कदा चित्स्याद्यादृच्छिकी कस्य चिदर्थसिद्धिः साऽपि यादृच्छिकमेवोपायमाश्रित्य; तदाह—

**अवश्यंभाविनोऽप्यर्थस्योपायपूर्वकत्वादेव न निष्कर्मणो भद्रमस्तीति वात्स्यायनः ॥ ३९ ॥**

अवश्यमिति । यतश्चैवं तस्मान्निष्कर्मण उपायानुष्ठानरहितस्य भद्रं कल्याणम् पूर्वजन्मकृतं कर्म निष्फलं प्रसज्येतेति चेद् ? न–परस्परापेक्षमुभयं भवतीति द्रष्टव्यम् । यथोक्तम्–'दैवं मानुषं कर्म लोकं पालयति' एतेन दैवमात्रप्रवादोऽपि प्रत्युक्तः ॥ ३९ ॥

(१) जननिधनकीर्त्यकीर्त्तय आदिपदग्राह्याः ।

प्रत्यक्षं कामविप्रतिपत्तिमाह—

न कामांश्चरेत् ॥ ४० ॥

न कामानिति ॥ ४० ॥

धर्मार्थयोः प्रधानयोरेवमन्येषां च सतां प्रत्यनीकत्वादनर्थजनसंसर्गमसद्व्यवसायमशौचमनायतिं चैते पुरुषस्य जनयन्ति ॥४१॥

प्रधानयोरिति। ताभ्यां कामोत्पत्तेः, प्रत्यनीकत्वादिति। कामासक्ततया धर्मस्यानाचरणाद्, धर्मविलोमाचरणाच्च, अर्थस्यानर्जनाद्; अर्जितस्य 'मद्यनटनर्तकीनटीपारितोषिकासद्व्ययाद्विरोधवर्ती कामः। सतामिति। ज्ञानवृद्धास्तपोवृद्धाः सन्तः कामासक्तिं त्यजन्ति तेषां च प्रत्यनीकवर्तिनोऽनर्थजनकनटनर्तकगायनादयस्तैः सम्पर्कं जनयन्ति, असद्व्यवसायमशोभनव्यवसायं निशीथाभिसरणप्राकारलङ्घनादिकम्, अशौचं=यथोक्तशौचाकरणम्, अनायतिमप्रभावं कामगर्दभ इति ॥ ४१ ॥

तथा प्रमादं लाघवमप्रत्ययमग्राह्यतां च ॥ ४२ ॥

तथा प्रमादं शरीरोपघातं परदारादिगमनादौ; लाघवं तारल्यं सहसा प्रवर्तनाद्; अप्रत्ययमविश्वासमसत्संगमाद्, अग्राह्यतां हेयतामपूज्यवृत्तित्वात् ॥ ४२ ॥

बहवश्च कामवशगाः सगणा एव विनष्टाः श्रूयन्ते ॥ ४३ ॥

बहवोऽनेके कामायत्ता विनष्टा इति सम्बन्धः, सगणा न केवलं सेवितारः, तत्परिवारा अपीत्यर्थः ॥ ४३ ॥

तथा च दृढीकरणार्थमाख्यानकम्—

यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश ॥ ४४ ॥

दाण्डक्य इति संज्ञा, भोज इति भोजवंशजः, अभिमन्यमानोऽभिगच्छन्, स हि मृगयां गतो भार्गवकन्यामाश्रमपदे दृष्ट्वा जातरागो रथमारोप्य जहार, ततो भार्गवः समित्कुशानादायागत्य तामपश्यन्नभिध्याय; च यथावृत्तं राजानमभिशशाप, ततोऽसौ सबन्धुराष्ट्रः पांसुवर्षेणावष्टब्धो ननाश, तत्स्थानमद्यापि दण्डकारण्यमिति गीयते ॥ ४४ ॥

देवराजश्चाहल्यामतिबलश्च कीचको द्रौपदीं रावणश्च सीतामपरे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टा इत्यर्थचिन्तकाः ॥ ४५ ॥

देवराज इन्द्रोऽहल्यामभिमन्यमान इत्येव, स हि गौतमाश्रमे तद्भा-

र्यामहल्यां चकमे, ततः समित्कुशानादायागते गौतमे तद्भार्याऽहल्या शक्रं गर्भस्थमकरोत् ; तदैवोपनिमन्त्रणेन गौतमः सभार्य एवाश्रमान्तरं गतः, ततस्तेन योगचक्षुषा समुपलब्धेनेन्द्रागमनेनास्मै समुपस्थापितमासनत्रयं दृष्ट्वा चासौ "किमेतद्भार्याद्वितीयस्य ममे"ति जाताशङ्को ध्यानेन यथावृत्तमालोक्य रोषात् "सहस्रभगो भवे"ति शशाप, ततोऽसौ देवराजोऽपि कामाद्विनाशप्रख्यां तादृशीमवस्थामाससाद, यस्याद्यापि कलङ्को"ऽहल्यायै जार" इति नास्तमेति। अतिबलः नागसहस्रबलत्वात्, सोऽपि कामाद् द्रौपदीमभिलषन्भीमसेनेन हत इति प्रतीतमेतद्, विनश्यन्तो दृश्यन्तइत्यत्र प्रत्यक्षं प्रमाणं; किं तत्र पूर्ववृत्तोदाहरणेनेति मन्यन्ते॥४५॥

अत्र संप्रतिपत्तिमाह—

शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामाः ॥ ४६ ॥

आहारसधर्माण इति । आहारतुल्याः, यथाऽऽहारोऽजीर्णादिदोषं जनयन्नपि प्रतिदिने शरीरस्थितये सेव्यते, तथा कामोऽपि, अन्यथा रागोद्रेकादुन्मादादिदोषेण न शरीरस्थितिरिति ॥ ४६ ॥

फलभूताश्च धर्मार्थयोः ॥ ४७ ॥

फलभूताश्च धर्मार्थयोरिति । सुखार्थं धर्मार्थयोः सेवा, तदसेवायां तौ बन्ध्यभूतौ केवलमायासफलौ स्याताम् , तथा चोक्तम्—

'धर्ममूलः स्मृतः स्वर्गस्तत्रापि परमाः स्त्रियः ।
गृहस्थधर्मो दुर्वारो नराणां धर्मयत्नजः ॥
हिताश्चापत्यसंतानैः स्त्रियस्त्विह परत्र च ।
परं सम्प्रत्ययो भोगप्रकर्षार्थाय वै स्त्रियः' ॥ इति ॥ ४७ ॥

यद्येवं तर्हि दोषप्रसङ्गः ? इत्यत आह—

बोद्धव्यं तु दोषेष्विव, न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न हि मृगाः सन्तीति यवा नोप्यन्त इति वात्स्यायनः ॥ ४८ ॥

बोद्धव्यमिति । अजीर्णादिदोषेष्विव बोद्धव्यम् । प्रतिविधानमिति शेषः । इदमाह—यत्र क्व चन दोषप्राप्तिरवश्यं सेव्यश्च कामस्तं दोष प्रतिविधानेन सेवेतेति, अयं च न्यायो लोकेष्वप्यस्तीति दर्शयति-न हीत्यादिना, तथा चोक्तम्—

'तृणानामिव हि व्यर्थं नृणां जन्म सुखद्विषाम् ।
दोषास्तु परिहर्तव्या इत्याचार्यैः स्थिरीकृतम् ॥ इति ॥ ४८ ॥

अनुष्ठानलक्षणायाः प्रतिपत्तेः फलमाह—

भवन्ति चात्र श्लोकाः—

एवमर्थं च कामं च धर्मं चोपाचरन्नरः ।
इहामुत्र च निःशल्यमत्यन्तं सुखमश्नुते ॥ ४९ ॥

एवमिति । यथोक्तेन न्यायेन प्रतिष्ठापिताचरणमर्थं प्रागाचरेत्, ततोऽधिगतार्थः कामं धर्मं च । इहामुत्र चेति । इह लोके परलोके च, निःशल्यं सुखमश्नुत इति । अनुतापाभावात् "समग्रो मे पुरुषार्थ" इति मनःप्रीतिमवाप्नोतीत्यर्थः । त्रिवर्गं ह्यसेवमानश्च तावदिह लोके; नैहिकं-सुखमवाप्तमिति विप्रतीकारं दुरन्तं; कामानुबन्धनाद्, नापि परलोके; न मया मूढेन प्राक्कृतमवदातं कर्मेति धर्मानुषक्तत्वात्, नास्तिका निरीहकाः सुखद्विषस्त्वेकाङ्गविकलत्वात्सशल्यमवाप्नुवन्तीति मन्यते ॥ ४९ ॥

'परस्परस्यानुपघातकमन्योन्यानुबद्धम्' इत्युक्तम्, तस्यैव संग्रहः श्लोकद्वयेन—

किं स्यात्परत्रेत्याशङ्का कार्ये यस्मिन्न जायते ।
न चार्थघ्नं सुखं चेति शिष्टास्तत्र व्यवस्थिताः ॥ ५० ॥

किं स्यादिति । उपघातः पूर्वेणोत्तरस्य, उत्तरेण वा पूर्वस्य । तत्र यस्मिन्कार्येऽर्थोऽपि साधयिष्यते यस्तत्र किं स्यादपायोऽनपायो वेत्याशङ्का नास्ति, धर्माबाधनाद्, यच्च सुखं नार्थं हन्ति तस्मिन्नर्थे सुखे च शिष्टास्त्रिवर्गविदः स्थिता अनुष्ठातुम्, पूर्वबाधके तु न स्थिताः, यस्तु दानेन धर्मोऽर्थं बाधते, ब्रह्मचर्येण च विद्याग्रहणमर्थः कामं, तस्मिन्नुत्तरबाधके स्थिता इत्यर्थोक्तम्,

तथा चाहुः—

'अपि नाम त्रिवर्गेऽस्मिन्सेवेतोत्तरबाधकम् ।
पूर्वस्य तु प्रधानत्वान्न सेव्यः पूर्वबाधकः ॥ इति ॥ ५० ॥

त्रिवर्गसाधकं यत्स्याद्द्वयोर्वैकस्य वा पुनः ।
कार्यं तदपि कुर्वीत न त्वेकार्थं द्विबाधकम् ॥ ५१ ॥

त्रिवर्गसाधकमिति । धर्मादीनां यदन्यतमं कार्यमनुष्ठेयमात्मन इतरयोस्तु साधकं तत्कुर्वीत, अयमुत्तमः पक्षो ह्यनुबन्धेऽन्तर्भूतः । द्वयोर्वैकस्येति । त्रयाणां यद् द्वयोरात्मन इतरस्य च साधकं तदपि कुर्वीतेति, अयं मध्यमः पक्ष एकानुबन्धेऽन्तर्भूतः, एतदुभयमपि प्रागुदाहृतम् । यदेकस्यात्मन एव साधकं तदपि कुर्वीतेति । अयं जघन्यो निरनुबन्धेऽन्तर्भूतः । तद्यथा—पञ्चानां महायज्ञानां प्रवर्तनं धर्मो निरनुबन्धः ।

भूम्याद्यर्जनमर्थो निरनुबन्धः, परिचारिकायामभिप्रेतायां कामो निरनुबन्धः । अस्मिन्पक्षे परस्परस्यानुपघातकं प्रदर्शयन्नाह—न त्वेकार्थं-द्विबाधकमिति । एक आत्मैवार्थः प्रयोजनं यस्य तदेकार्थं द्वयोर्बाधकं न कुर्याद्, अतिदानेन धर्मोऽर्थं बाधते कामं च बाधते, तपसा चात्यन्तसेवितेन कामं बाधित्वा शरीरक्षयादर्थमुपहन्ति, तथाऽर्थस्तावदात्यन्तिकउपादीयमानः पुरूरवस इव धर्मकामौ बाधते, कामस्तूत्तमवर्णासु दाण्डक्यस्येवान्यत्र वाऽत्यासेवित उभयं बाधते, यदेकस्य साधकमन्यस्य बाधकं तत्पूर्वोत्तरबाधापेक्षया कुर्यात्, तच्च यथोक्तं प्रागिति ।

इति त्रिवर्गप्रतिपत्तिर्द्वितीयं प्रकरणम् ॥ २ ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलायां साधारणे प्रथमेऽधिकरणे त्रिवर्गप्रतिपत्तिर्द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

एवं प्रतिपन्नत्रिवर्गस्य कामसिद्धौ प्रथम उपायो यद्विद्याग्रहणम्, अगृहीतविद्यस्यानन्तरव्यापारासंभवादिति विद्यासमुद्देश उच्यते । समुद्देशश्च संक्षेपाभिधानम्, निर्देशश्च शास्त्रान्तरादुपदेशाच्चापेक्षणीयः ।

यथा च तासां ग्रहणं तथा दर्शयन्नाह—

**धर्मार्थाङ्गविद्याकालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत ॥ १ ॥**

धर्मेत्यादि । तत्र धर्मविद्या श्रुतिः स्मृतिश्च, अर्थविद्या वार्ताशास्त्रं, तयोरङ्गविद्या दण्डनीतिः, योगक्षेमसाधनाद्, आन्वीक्षिकी तु तत्त्वनिश्चयहेतुत्वात्, तासां प्रधानानां यथास्वमध्ययनकालाननुपरोधयन्नहापयन्, अन्तराऽन्तरा कामसूत्रमिदमेव, तदङ्गविद्याश्च गीतादिका अधीयीत पाठश्रवणाभ्याम् ॥ १ ॥

**प्राग्यौवनात्स्त्री ॥ २ ॥**

प्रागिति । प्राग्यौवनात्स्त्री कामसूत्रं तदङ्गविद्याश्चाधीयीत पितुर्गृह एव, तरुण्याः परिणीतत्वादस्वतन्त्रायाः कुतोऽध्ययनम् । 'युवतिः' इति पाठान्तरम्, तत्र स्त्रीपर्यायो द्रष्टव्यः ॥ २ ॥

**प्रत्ता च पत्युरभिप्रायात् ॥ ३ ॥**

प्रत्ता चेति । प्रकर्षेण दत्ता, निष्ठायामेव 'अच उपसर्गात्तः' ७।४।४७।

इति तत्त्वम् , ऊढेत्यर्थः, त्रिविधं दानम् , मनसा वाचा कर्मणा चेति । पत्युरभिप्रायादिति । यदा पत्याऽनुज्ञाता तदाऽधीयीत, अन्यथा स्वैरिणीत्याशङ्कनीया स्यात् ॥ ३ ॥

योषितां शास्त्रग्रहणस्याभावादनर्थकमिह शास्त्रे स्त्रीशासनमित्याचार्याः ॥ ४ ॥

शास्त्रग्रहणस्याभावादिति । तासां शास्त्रानधिकारात्, शास्त्रं ग्रहीतुमसमर्थत्वाच्च । इहेति । कामशास्त्रे स्त्रियमुद्दिश्य शासनम्, इदं कार्यमिदं नेत्येवंरूपम् उपदेष्टुमनर्थकम् इत्याचार्या मन्यन्ते ॥ ४ ॥

प्रयोगग्रहणं त्वासाम् , प्रयोगस्य च शास्त्रपूर्वकत्वादिति वात्स्यायनः ॥ ५ ॥

प्रयोगग्रहणमिति । प्रयुज्यत इति प्रयोगोऽर्थस्तद्ग्रहणमासां, तद्विज्ञेभ्यो मा भूच्छास्त्रग्रहणं, स च योषिदुपयोगीति शास्त्रेणानावेदितः कथमन्यैरुपदिश्यते तस्मान्नानर्थकं स्त्रीशासनम् ॥ ५ ॥

तत्र केवलमिहैव; सर्वत्र हि लोके कति चिदेव शास्त्रज्ञाः सर्वजनविषयश्च प्रयोगः ॥ ६ ॥

तत्र केवलमिहैवेति । तत्प्रयोगग्रहणं, केवलमिहैवास्मिन्नेव कामशास्त्रे । सर्वत्र हीति । हिशब्दो हेतौ । सर्वेषु व्याकरणज्योतिःशास्त्रादिषु दृश्यते, तदेव दर्शयति-लोक इत्यादिना । कति चिदेव शास्त्रज्ञाये तद्ग्रहणसमर्थाः, तेभ्यः समर्थैरसमर्थैश्च प्रयोगो गृह्यत इति सर्वजनविषयः, प्रयोगग्रहणं च शास्त्रग्रहणात्प्रधानम्, गृहीतशास्त्रस्य प्रयोगज्ञानफलत्वात् ॥ ६ ॥

प्रयोगस्य च दूरस्थमपि शास्त्रमेव हेतुः ॥ ७ ॥

प्रयोगस्य चेति । गृहीतशास्त्रस्य दूरस्थमपीति । शास्त्रज्ञजनाधारत्वाद् विप्रकृष्टमपि शास्त्रं पारम्पर्येण हेतुः, एकः शास्त्रज्ञः प्रयोगं गृह्णाति, ततोऽन्यः; ततोऽन्य इति ॥ ७॥

अत्र दृष्टान्तमाह—

अस्ति व्याकरणमित्यवैयाकरणा अपि याज्ञिका ऊहं क्रतुषु प्रयुञ्जते ॥ ८ ॥

अस्तीति । शब्देनाचोदितार्थस्य युक्त्या विमृश्यावस्थापनमूहः, स च प्रातिपदिकलिङ्गवचनान्तरोपायेन व्याकरण उक्तः, तद्व्याकरणमस्ति यतोऽयमूहः पारम्पर्याश्रयादित्यवैयाकरणा अपि याज्ञिकास्तं

क्रतुषु प्रयुञ्जते, तद्यथा—'आग्नेयमष्टाकपालं पुरोडाशं निर्वपेद्' इति प्रकृतिप्रयोगः, 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति विकृतिप्रयोगः, अत्र सूर्यमुद्दिश्योहो, निर्वपेदिति लिङ्गात्, सौर्यं चरुं निर्वपेदाग्नेयवदिति ॥ ८ ॥

अस्ति ज्यौतिषमिति पुण्याहेषु कर्म कुर्वते ॥ ९ ॥

पुण्याहेष्विति । अस्ति ज्यौतिषमित्यज्यौतिषिका अपि कुतश्चिदुपलभ्य शस्तदिनेषु कर्म कुर्वते, तत्र शास्त्रमेव हेतुः ॥ ९ ॥

तथाऽश्वारोहा गजारोहाश्चाश्वान्गजांश्चानाधिगतशास्त्रा अपि विनयन्ते ॥ १० ॥

तथेति । अनधिगतशास्त्रा इति । हस्त्यश्ववैद्यकाद् हस्त्यादिशिक्षाऽऽम्यधीत्याप्ताम्नायात्, पोषणदमनादिकं कर्म कुर्वत इत्येव, तत्रापि शास्त्रमेव हेतुः ॥ १० ॥

न शास्त्र एवायं न्यायो यद् दूरस्थमपि हेतुः, किं तु लोकेऽपीत्याह—

तथाऽस्ति राजेति दूरस्था अपि जनपदा न मर्यादामतिवर्तन्ते, तद्वदेतत् ॥ ११ ॥

अस्ति राजेति । दूरस्था अदृष्टराजकाः, "अस्ति व्यवस्थापको यतऽयं व्यवस्थे" ति तद्भयान्न मर्यादामतिक्रामन्ति, तद्वदेतदिति दार्ष्टान्तिके योजनीयम् ॥ ११ ॥

अथ वाऽस्त्येव शास्त्रग्रहणं कासां चिदित्याह—

सन्त्यपि खलु शास्त्रप्रहतबुद्धयो गणिका राजपुत्र्यो महामात्रदुहितरश्च ॥ १२ ॥

सन्त्यपीति । शास्त्रेण प्रहता खिन्ना बुद्धिर्यासामिति । महामात्रेति । महती मात्रा येषामिति सामन्ता महासामन्ता वा, हस्तिशिक्षायां वा तल्लक्षणमनुसर्तव्यम् ॥ १२ ॥

तस्माद्वैश्वासिकाज्जनाद्रहसि प्रयोगाञ्छास्त्रमेकदेशं वा स्त्री गृह्णीयात् ॥ १३ ॥

तस्मादिति । यस्मात्प्रयोगग्रहणं शास्त्रग्रहणं चोभयं तस्माद्, वैश्वासिकाद्विश्वासार्हाल्, लज्जानिवृत्त्यर्थम् , प्रयोगान् ; ये शास्त्रग्रहणासमर्था दुर्मेधसः, शास्त्रं तद्ग्रहणसमर्था मेधाविनी, शास्त्रैकदेशं वा संप्रयोगाङ्गं या मध्यमेधाविनी सा गृह्णीयात् ॥ १३ ॥

अभ्यासप्रयोज्यांश्च चातुःषष्टिकान्योगान्कन्या रहस्येकाकिन्यभ्यसेत् ॥ १४ ॥

अभ्यासेति। अभ्यासेन प्रयोक्तुं ये शक्यन्ते बाडबकभ्रमरकादयः, चातुःषष्टिकांश्चतुःषष्टिभवान्। कन्येति। तदानीमभ्यस्तं यौवने प्रयुज्यते। रहसीति लज्जानिवृत्त्यर्थम्। एकाकिन्याचार्यनिरपेक्षा ॥ १४ ॥

कः पुनर्वैश्वासिक इत्याह—

आचार्यास्तु कन्यानां प्रवृत्तपुरुषसंप्रयोगा सहसंप्रवृद्धा धात्रेयिका, तथाभूता वा निरत्ययसम्भाषणा सखी, सवयाश्च मातृष्वसा, विस्रब्धा तत्स्थानीया वृद्धदासी, पूर्वसंसृष्टा वा भिक्षुकी, स्वसा च विश्वाससंप्रयोगात् ॥ १५ ॥

आचार्यास्त्विति। तुशब्दो विशेषणार्थः, पुरुषाणां स्वातन्त्र्यात्सुलभा उपदेष्टारः, तत्र प्रवृत्तपुरुषसंप्रयोगा पुरा चानुभूतरसत्वादभिज्ञा धात्रेयिका, धात्र्या अपत्यं सा हि सह संप्रवृद्धत्वाद्विश्वास्येत्येकाऽऽचार्या, तथाभूता चेति। प्रवृत्तपुरुषसंप्रयोगा सखी वा निर्दोषसंभाषणत्वाद्विश्वास्येति द्वितीया, सवयाश्चेति। तुल्यवयाः प्रीतिविश्वासयोरास्पदं;-चशब्दात्तथाभूतेति निवर्तते मातृष्वसा मातुर्भगिनीति तृतीया, विस्रब्धेति। विश्वस्ता तत्स्थानीया मातृष्वसृतुल्या मातृभगिनीत्वेन गृहीता वृद्धदासी विदितबहुवृत्तान्तेति चतुर्थी, पूर्वसंसृष्टा पूर्वं यया सह प्रीतिरुत्पन्ना सा विश्वास्या भिक्षुकी भिक्षणशीला या का चित्सा देशहिण्डनात् कुशलेति पञ्चमी, स्वसा च ज्येष्ठा भगिनी, विश्वाससंप्रयोगादिति। यदा तत्समक्षं विश्वासात्पुरुषान्तरेण संप्रयुक्ता स्याद्, अन्यथा स्वसा स्वसारमपि नेर्ष्यया शिक्षयतीति षष्ठी।

इत्युक्तं ग्रहणं कामसूत्रे तदङ्गविद्यासु च, तासामङ्गविद्यानामयमुद्देशः-शास्त्रान्तरे चतुःषष्टिर्मूलकला उक्ताः-तत्र कर्माश्रया चतुर्विंशतिः—

तद्यथा—१गीतम् २नृत्यम् ३वाद्यम् ४कौशललिपिज्ञानम् ५वचनं चोदारम् ६चित्रविधिः ७पुस्तकर्म ८पत्रच्छेद्यम् ९माल्यविधिः १०गन्धयुक्त्यास्वाद्यविधानम् ११रत्नपरीक्षा १२सीवनम् १३रङ्गपरिज्ञानम् १४उपकरणक्रिया १५मानविधिः १६आजीवज्ञानम् १७तिर्यग्योनिचिकित्सितम् १८मायाकृतपाषण्डसमयज्ञानम् १९क्रीडाकौशलम् २०लोकज्ञानम् २१वैचक्षण्यम् २२संवाहनम् २३शरीरसंस्कारः २४विशेषकौशलं चेति।

द्यूताश्रया विंशतिः-तत्र निर्जीवाः पञ्चदश, तद्यथा-२५आयुःप्राप्तिः २६अक्षविधानम् २७रूपसंख्या २८क्रियामार्गणम् २९बीजग्रहणम्

३०नयज्ञानम्, ३१करणादानम्, ३२चित्राचित्रविधिः ३३गूढराशिः ३४तुल्याभिहारः ३५क्षिप्रग्रहणम् ३६अनुप्रातिलेखस्मृतिः ३७अग्निक्रमः ३८छलव्यामोहनम् ३९ग्रहदानं चेति । सजीवाः पञ्च, तद्यथा—४०उपस्थानविधिः ४१युद्धम्, ४२रुतम् ४३गतम्, ४४नृत्तं चेति ।

शयनोपचारिकाः षोडश, तद्यथा-४५पुरुषस्य भावग्रहणम्, ४६स्वरागप्रकाशनम् ४७प्रत्यङ्गदानम्, ४८नखदन्तयोर्विचारौ ४९नीवीस्रंसनम् ५०गुह्यस्य संस्पर्शनानुलोम्यम् ५१परमार्थकौशलम् ५२हर्षणम् ५३समानार्थताकृतार्थता ५४अनुप्रोत्साहनम् ५५मृदुक्रोधप्रवर्तनम् ५६सम्यक्क्रोधनिवर्तनम् ५७क्रुद्धप्रसादनम् ५८सुप्तपरित्यागः ५९चरमस्वापविधिः ६०गुह्यगूहनमिति ।

चतस्र उत्तरकलाः, तद्यथा–६१साश्रुपातं रमणाय शापदानम् ६२स्वशपथक्रिया ६३प्रस्थितानुगमनम् ६४पुनःपुनर्निरीक्षणं चेति चतुःषष्टिर्मूलकलाः । आस्वेव निविष्टानामवान्तरकलानामष्टादशाधिकानि पञ्चशतान्युक्तानि, तत्र कर्मद्यूताश्रयाः प्रायश आबालं गच्छन्ति, ता एवान्यथा विभज्य चतुःषष्टिरत्रोक्ता, यास्तु शयनोपचारिका उत्तरकलाश्च, ताः प्रायशस्तन्त्रस्याङ्गतां प्रतिपद्यन्त इति पाञ्चालिक्यामेव चतुःषष्ट्यामवान्तरकला वेदितव्याः, ताश्च यथाप्रस्तावं वक्ष्यन्ते ।

तन्त्रावापौपयिकीं चतुःषष्टिमाह—

गीतम्[१], वाद्यम्[२], नृत्यम्[३], आलेख्यम्[४], विशेषकच्छेद्यम्[५], तण्डुलकुसुमबलिविकाराः[६], पुष्पास्तरणम्[७], दशनवसनाङ्गरागः[८], मणिभूमिकाकर्म[९], शयनरचनम्[१०], उदकवाद्यम्[११], उदकाघातः[१२], चित्राश्च योगाः[१३], माल्यग्रथनविकल्पाः[१४], शेखरकापीडयोजनम्[१५], नेपथ्यप्रयोगाः[१६], कर्णपत्रभङ्गाः[१७], गन्धयुक्तिः[१८], भूषणयोजनम्[१९], ऐन्द्रजालाः[२०], कौचुमाराश्च योगाः[२१], हस्तलाघवम्[२२], विचित्रशाकयूषभक्ष्यविकारक्रिया[२३], पानकरसरागासवयोजनं[२४], सूचीवानकर्माणि[२५], सूत्रक्रीडा[२६], वीणाडमरुकवाद्यानि[२७], प्रहेलिका[२८], प्रतिमाला[२९], दुर्वाचकयोगाः[३०], पुस्तकवाचनम्[३१], नाटकाख्यायिकादर्शनम्[३२], काव्यसमस्यापूरणम्[३३], पट्टिकावेत्रवानविकल्पाः[३४], तक्षकर्माणि[३५], तक्षणम्[३६], वास्तुविद्या[३७], रूप्यरत्नपरीक्षा[३८], धातुवादः[३९], मणिरागाकरज्ञानम्[४०], वृक्षायुर्वेदयोगाः[४१] मेषकुक्कुटलावकयुद्धविधिः[४२]; शुकसारिकाप्रलापनम्[४३], उत्सादने सं-

वाहने केशमर्दने च [44]कौशलम्, [45]अक्षरमुष्टिकाकथनम्, [46]म्लेच्छितविकल्पाः, [47]देशभाषाविज्ञानम्, [48]पुष्पशकटिका, [49]निमित्तज्ञानम्, [50]यन्त्रमातृका, [51]धारणमातृका [52]संपाठ्यम्, [53]मानसी काव्यक्रिया, [54]अभिधानकोषः, [55]छन्दोज्ञानम्, [56]क्रियाकल्पः, [57]छलितकयोगाः, [58]वस्त्रगोपनानि, [59]द्यूतविशेषः, [60]आकर्षक्रीडा, [61]बालक्रीडनकानि, [62]वैनयिकीनां [63]वैजयिकीनां [64]व्यायामिकीनां च विद्यानां ज्ञानम्, इति चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः ॥ १६ ॥

गीतमित्यादि । १गीत२वाद्य३नृत्या४लेख्यानि चत्वारि प्रायः स्वशास्त्रविहितप्रपञ्चानि तथाऽपि संक्षेपतः कथ्यन्ते—

'स्वरगं पदगं चैव तथा लयगमेव च ।
चेतोऽवधानगं चैव गेयं ज्ञेयं चतुर्विधम् ॥
घनं च विततं वाद्यं ततं सुषिरमेव च ।
कांस्यपुष्करतन्त्रीभिर्वेणुना च यथाक्रमम् ॥
करणान्यङ्गहाराश्च विभावो भाव एव च ।
अनुभावो रसाश्चेति संक्षेपान्नृत्यसङ्ग्रहः' ॥

तद् द्विविधम्—नाट्यमनाट्यं चेति, तथोक्तम्—

'स्वर्गे वा मर्त्यलोके वा पाताले वा निवासिनाम् ।
कृतानुकरणं नाट्यमनाट्यं नर्तकाश्रितमिति' ॥

तन्त्रान्तरे तु नृत्यभेदज्ञापनार्थमेव पृथङ् नाट्यकलोक्तेति विज्ञेयम् । आलेख्यमिति ।

'रूपभेदाः प्रमाणानि भावलावण्ययोजनम् ।
सादृश्यं वर्णिका भङ्ग इति चित्रं षडङ्गमिति ॥'

एतानि परानुरागजननान्यात्मविनोदार्थानि च । ५विशेषकच्छेद्यमिति । विशेषकस्तिलको यो ललाटे दीयते, तस्य भूर्जादिपत्रमयस्यानेकप्रकारं छेदनमेव च्छेद्यम्, पत्रच्छेद्यमिति वक्तव्यम्, वक्ष्यति च—'पत्रच्छेद्यानि नानाऽभिप्रायाकृतीनि प्रेषयेद्' इति; सत्यम् ? विशेषकग्रहणमादरार्थम्, विलासिनीनामतिप्रियत्वात् । ६तण्डुलकुसुमवलिविकारा इति । अखण्डतण्डुलैर्नानावर्णैः सरस्वतीभवने कामदेवभवने वा मणिकुट्टिमेषु भक्तिविकाराः, तथा कुसुमैर्नानावर्णैर्ग्रथितैः शिवलिङ्गादिपूजाऽर्थं भक्तिविकाराः, अत्र ग्रथनम् माल्यग्रथन एवान्तर्भूतम् । भक्तिविशेषेणावस्थापनं कलाऽन्तरम् । ७पुष्पास्तरणमिति । यन्नानावर्णैः पुष्पैः सूचीवानादिबद्धैरास्तीर्यते तत्तद्वासगृहोपस्थानमण्डपादिषु; यस्य पुष्पशयन-

मित्यपरा संज्ञा । ८दशनवसनाङ्गराग इति । रागशब्दः प्रत्येकं योज्यते, तत्राङ्गरागोऽङ्गमार्ष्टिः कुङ्कुमादिना, रञ्जनविधिरिति वक्तव्ये दशनादिग्रहणमादरार्थं; विलासिनीनां दशनादिसंस्कारस्यात्यन्ताभीष्टत्वाद् इति । ९मणिभूमिकाकर्मेति । मणिभूमिका कृतकुट्टिमा भूमिः, ग्रीष्मे शयनापानकार्थं तस्या मरकतादिभेदेन करणम् । १०शयनरचनमिति । शयनीयस्य कालापेक्षया रक्तविरक्तमध्यस्थाभिप्रायादाहारपरिणतिवशाच्च रचनम् । ११उदकवाद्यमिति । उदके मुरजादिवद्वाद्यम् १२उदकाघात इति । हस्तयन्त्रमुक्तैरुदकैस्ताडनं; तदुभयं जलक्रीडाऽङ्गम् १३चित्राश्च योगा इति । नानाप्रकारदौर्भाग्यैकेन्द्रियपलितीकरणादयः, ईर्ष्यया पराभिसन्धानार्थाः; तानौपनिषदिके वक्ष्यति, एते च कौचुमारयोगेषु नान्तर्भवन्तीति पृथगुक्ताः; कुचुमारेण तेषामनुक्तत्वात् । १४माल्यग्रथनविकल्पा इति । माल्यानां पुष्पमालाऽऽदीनां देवतापूजनार्थानां नेपथ्यार्थानां ग्रथनविकल्पाः । १५शेखरकापीडयोजनमिति । ग्रथनविकल्प एवायं किं तु योजनं कलाऽन्तरं, तत्र शेखरकस्य शिखास्थानेऽवलम्बनन्यासेन परिधापनाद्, आपीडस्य च मण्डलाकारेण ग्रथितस्य काञ्चिकायोगेन परिधापनाद् नानावर्णैः पुष्पैर्विरचनं योजनम्, पुनर्विरचनवचनमादरार्थम्, तदुभयं नागरकस्य प्रधानं नेपथ्याङ्गम् । १६नेपथ्यप्रयोगा इति । देशकालापेक्षया वस्त्रमाल्याभरणादिभिः शोभाऽर्थं शरीरस्य मण्डनाकाराः १७कर्णपत्त्रभङ्गा इति । दन्तशङ्खादिभिः कर्णपत्त्रविशेषा नेपथ्यार्थाः । १८गन्धयुक्तिरिति । स्वशास्त्रविहितप्रपञ्चा प्रतीतप्रयोजनैव । १९भूषणयोजनमिति । अलङ्कारयोगः; स द्विविधः-संयोज्योऽसंयोज्यश्च तत्र संयोज्यस्य कण्ठिकेन्द्रच्छन्दादेर्मणिमुक्ताप्रबालादिभिर्योजनम्, असंयोज्यस्य कटककुण्डलादेर्विरचनं योजनम्, तदुभयं नेपथ्याङ्गं न तु शरीरे भूषणयोजनं तस्य नेपथ्यप्रयोगा इत्यनेनैव सिद्धत्वात् । २०ऐन्द्रजाला इति । इन्द्रजालादिशास्त्रप्रभवा योगाः सैन्यदेवालयादिदर्शनादहंभावविस्मापनार्थाः । २१कौचुमारा इति । कुचुमारस्यैते सुभगंकरणादयः, उपायान्तरासिद्धसाधनार्थाः । २२हस्तलाघवमिति । सर्वकर्मसु लघुहस्तता कालातिपातनिरासार्थं द्रव्यहानिषु वा लाघवं क्रीडाऽर्थं विस्मापनार्थं च । २३विचित्रशाकयूषभक्ष्यविकारक्रिया २४पानकरसरागासवयोजनमिति । चतुर्विध आहारः-भोज्यं भक्ष्यं लेह्यं पेयमिति, तत्र भोज्यम्—भक्तव्यञ्जनादि; तत्र व्यञ्जनरन्धनं प्रायशो न सुज्ञानमिति व्यञ्जनाग्रगस्य शाकस्योपादानेन दर्शयति, तत्र शाकं दशविधम्, यथोक्तम्—

'मूलपत्रकरीराग्रफलकाण्डप्ररूढकम् ।
त्वक्पुष्पं कण्टकं चेति शाकं दशविधं स्मृतम्' ॥

भक्ष्यं खण्डखाद्यादि, पेयं द्विविधम्–अग्निनिष्पाद्यमितरच्च, तत्र पूर्वं यूषाख्यं; तच्च द्विविधम्–मुद्गादिनिर्व्यूहकृतं मांसनिर्व्यूहकृतं च, एवं नानाप्रकाराणां क्रिया पाकविधानेन निष्पादनं, यदनग्निनिष्पादनं पेयं तद् द्विविधम्-सन्धानकृतमितरच्च, तत्राद्यं–द्रावितमद्रावितं च; तत्र यद् गुडतिन्तिडिकाऽऽदि जलेन संयोज्य क्रियते तद् द्रावितं पानकाख्यम्, यद् द्रावकौषधेन तालमोचाफलानि संयोज्य निष्पाद्यते तदद्रावितं रसाख्यम्, आसवग्रहणेन सन्धानमुपलक्षयति; तन्मृदुमध्यतीक्ष्णसन्धानयोजनात्तथाविधमेव निष्पाद्यते, रागग्रहणं लेह्यं सूचयति, तस्य त्रैविध्यात्, तथा चोक्तम्—

'रागो रागविधानज्ञैर्लेह्यश्चूर्णो द्रवः स्मृतः ।
लवणाम्लकटुस्वाद ईषन्मधुरसंयुत' ॥ इति,

एतच्चतुर्विधमास्वाद्यकलायां प्रपञ्चितं शरीरस्थित्यर्थं, योगविभागोऽग्निजानग्निजकर्मदर्शनार्थः, तत्र पाकेन शाकादिक्रिया, विना पाकेन पानकादियोजनम् अन्यथा ह्यास्वाद्यविधिरित्युक्तं स्यात् तस्मात्कर्मभेदादास्वाद्यविधानं द्विविधं तद्वशादेकाऽपि कला द्विधाकृत्योक्ता । २५सूचीवानकर्माणीति । सूच्या यत्सन्धानकरणं तत्सूचीवानं त्रिविधं–सीवनम्, ऊतनम्, विरचनम्, तत्राद्यं कञ्चुकादीनाम्, द्वितीयं त्रुटितवस्त्राणाम्, तृतीयं कुथास्तरणादीनाम्, इयं प्रतीतार्थैव । २६सूत्रक्रीडेति । नालिकासञ्चारनालादिसूत्राणामन्यथाऽन्यथा दर्शनं छित्त्वा दग्ध्वा च पुनरच्छित्वाऽदग्ध्वा दर्शनं; तच्चाङ्गुलिन्यासाद् बकुलादिदर्शनम् इत्येवंप्रकारा क्रीडाऽर्थैव । २७वीणाडमरुकवाद्यानीति । वादित्रान्तर्गतत्वेऽपि तन्त्रीवाद्यं प्रधानं तत्रापि वीणावाद्यम्, डमरुकवाद्यमावश्यकार्थम् बालोपक्रमहेतुत्वाद् दुर्विज्ञेयत्वाच्च ततो ह्यक्षराणि स्पष्टान्युच्चार्यमाणानि श्रूयन्ते । २८प्रहेलिकेति । लोकप्रतीता, क्रीडाऽर्था वादार्था च २९प्रतिमालेति । यस्या अन्त्याक्षरिकेति प्रतीतिः सा क्रीडाऽर्था वादार्था च, यथोक्तम्–

'प्रतिश्लोकं क्रमाद्यत्र सन्धायाक्षरमन्तिमम् ।
पठेतां श्लोकमन्योन्यं प्रतिमालेति सोच्यत' इति ॥

३०दुर्वाचकयोगा इति । शब्दतोऽर्थतश्च दुःखेनोच्यत इति दुर्वाचकं तस्य प्रयोगाः क्रीडाऽर्था वादार्थाश्च, यथा काव्यादर्शे—

'दंष्ट्राऽग्रद्ध्र्यां प्राग्यो द्राक्ष्मामक्ष्वन्तःस्थामुच्चिक्षेप ।
देवध्रुट्क्षिद्व्यृत्विक्स्तुत्यो युष्मान्सोऽव्यात्सर्पात्केतुः ॥ इति,

अस्यार्थः—द्रंष्ट्राऽग्रस्य ऋद्ध्या प्राक्पूर्वं द्राक्शीघ्रं क्ष्मां पृथ्वीमम्ब्वन्तःस्थां पातालस्थामुच्चिक्षेपोत्क्षिप्तवान्, देवान्द्रुह्यन्तीति देवद्रुहोऽसुरास्तान्क्षिणोतीति देवध्रुट्क्षित्, हिशब्दः पादपूरणे, ऋत्विग्भिः स्तुत्यः, सर्पानत्तीति सर्पाद्गरुडः स केतुर्ध्वजो यस्येति। ३०पुस्तकवाचनमिति। भरतादिकाव्यानां पुस्तकस्थानां शृङ्गारादिरसापेक्षया गीतितः स्वरेण वाचनम्, अनुरागजननार्थमात्मविनोदार्थं च। ३१नाटकाऽऽख्यायिकादर्शनमिति। काव्येषु गद्यपद्येषु नाटकस्य बहुप्रपञ्चत्वाद्, आख्यायिकायाश्च प्रधानगद्यत्वाद्दर्शनं परिज्ञानमिति; आदरार्थं विशेषाभिधानं काव्यदर्शनमिति नोक्तं, तत्र नाटके दश रूपकाणि; यथोक्तम्—

'नाटकमङ्को वीथी प्रकरणमीहामृगो डिमो भाणः।
व्यायोगसमवकारौ प्रहसनमिति नाटकविकल्पाः'॥

३२काव्यसमस्यापूरणमिति। समस्यते संक्षिप्यत इति समस्या 'ऋहलोर्ण्यत्' ३।१।१२४। इह सामान्यात् 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिर्न भवति, यद्वा 'कृत्यल्युटो बहुलम्' ३।३।११३। इत्यन्यप्रकृतेरपि यद् बहुलग्रहणात् काव्यस्य श्लोकस्य समस्या पाद इत्यर्थः, तस्याः पूरणं क्रीडाऽर्थं वादार्थं च, तद्यथा-काव्यादर्शे—'आश्वासञ् जनयतिराजमुख्यमध्ये' इत्ययं पाद उद्योगपर्वणि विष्णुयाने त्रिभिः पादैः संग्रथितव्य इति समस्या दत्ता, तत्र त्रयः पादाः—

'दौत्येन द्विरदपुरं गतस्य विष्णोर्बन्धार्थं प्रतिविहितस्य धार्तराष्ट्रैः।
रूपाणि त्रिजगति भूतिमन्ति रोषादाश्वासञ्जनयतिराजमुख्यमध्ये'॥

इत्यादि, अत्र विष्णोर्बन्धार्थं दुर्योधनादिभिर्मन्त्रः कृतः, त्रिषु लोकेषु सर्वभूतिमन्ति रूपाणि आशु शीघ्रमासन्बभूवुः, जनस्य सभागतस्य, यतीनां रामकर्णादीनां, राजमुख्यानां बाह्लीकप्रभृतीनां च मध्य इति; एताः प्रहेलिकाऽऽदयः षड् वचनकौशलान्तराः कला इह प्रायश उपयुज्यन्त इति संगृहीताः ३३पट्टिकावेत्रवानविकल्पा इति। वेत्रखण्डैर्ग्रथिता खट्वारूपा पट्टिका, पट्टिकाया वानविकल्पाः, खट्वाया आसनस्य च, वेत्रैर्वानविकल्पाः प्रतीतार्थाः। ३४तर्कुकर्माणीति। कुन्दकर्माण्यपद्रव्यार्थानि। ३५तक्षणमिति। वर्धकिकर्म शयनासनाद्यर्थम्। ३६वास्तुविद्येति। ग्रहकर्मोपयोगिनी। ३७रूप्यरत्नपरीक्षेति। रूप्यमाहतद्रव्यं दीनारादि, रत्नं वज्रमणिमुक्तादि, तेषां गुणदोषमूल्यादिभिः परीक्षा व्यवहाराङ्गम्। ३८धातुवाद इति। क्षेत्रवादः स हि मृत्प्रस्तररत्नधातूनां पातनशोधनमेलनादिज्ञानहेतुरर्थार्थः। ३९मणिरागाकरज्ञानमिति। स्फटिकमणीनां रञ्जनविज्ञानमर्थार्थं भूषणा-

र्थं च, पद्मरागादिमणीनामुत्पत्तिस्थानज्ञानमर्थार्थम् । ४०वृक्षायुर्वेदयोगा इति । रोपणपुष्टिचिकित्सावैचित्र्यकृते गृहोद्यानार्थः । ४१मेषकुक्कुटलावकयुद्धविधिरिति । सजीवद्यूतविधानमेतत्, तत्रोपस्थानादिभिश्च तुरङ्गैर्युद्धविधानं क्रीडाऽर्थं वादार्थं च । ४२शुकसारिकाप्रलापनमिति । शुकसारिका हि मनुष्यभाषया प्रलापिताः सुभाषितं पठन्ति, संदेशं च कथयन्ति । उत्सादने संवाहने केशमर्दने च ४३कौशलमिति । मर्दनं द्विविधम्–पादाभ्यां हस्ताभ्यां च, तत्र पादाभ्यां यन्मर्दनं तदुत्सादनमुच्यते, हस्ताभ्यां यच्छिरोऽभ्यङ्गकर्म तत्केशमर्दनम् । केशानां तत्र मृद्यमानत्वात्तैरेव तद्व्यपदेशः, शेषाङ्गेषु मर्दनं संवाहनम्, केशग्रहणमत्रादरार्थम्, तत्र कौशलं परराधनार्थम् । ४४अक्षरमुष्टिकाकथनमिति । अक्षराणां मुष्टिरिव मुष्टिका गुप्तिरिति, सा साभासा निराभासा च, तत्र साभासा=अक्षरमुद्रेत्युच्यते, तया कथनं गूढवस्तुमन्त्रणार्थं; ग्रन्थसंक्षेपार्थं च, तस्या आचार्यरविगुप्तेन चन्द्रप्रभाविजयकाव्ये प्रकरणं पृथगुक्तम्, यथोक्तम्—

'गहनप्रसन्नसर्वां कतिपयसूत्रामिमामनन्तमुखीम् ।
अनधीत्याक्षरमुद्रां वादसमुद्रे परिप्लवत' ॥ इति

तत्रेदमुदाहरणम्—

'मेवृमिकर्सिकतुवृधमकुम्मी मूधसबासुशकनिधकआव्याः ।
फाचैवैज्येआश्राभाआकामापौमा चैव' इति ॥

अस्या आर्याया अयमर्थः—प्रथमपादेन मेषादयो राशय उक्ताः, द्वितीयेन राशीनां लग्नात्प्रभृति मूर्तिधनसहजबान्धवसुतशत्रुकलत्रनिधनधर्मकर्मायव्यया इति विशेषसंज्ञाः, इतरार्धेन फाल्गुनादयो मासा इति, निराभासा भूतमुद्रेत्युच्यते तया कथनं गुह्यवस्तुमन्त्रणार्थं यथोक्तम्—

'मुष्टिः किसलयं चैव च्छटा चारी पताकिका ।
पताकाऽङ्कुशमुद्राश्च मुद्रा वर्गेषु सप्तसु ॥
अङ्गुल्यश्चाक्षराण्येषां स्वराश्चाङ्गुलिपर्वसु ।
संयोगादक्षरं युक्तं भूतमुद्रा प्रकीर्तिता' ॥ इति

एवमन्याऽपि काव्यसंज्ञाभूतमुद्रा द्रष्टव्या । ४५म्लेच्छितविकल्पा इति । यत्साधुशब्दोपनिबद्धमप्यक्षरव्यत्यासादस्पष्टार्थं तन्म्लेच्छितं गूढवस्तुमन्त्रार्थम्, तस्य विकल्पा बहवः पूर्वाचार्योक्ताः, तद्यथा कौटिलीयम्—

'दादेः क्षान्तस्य कादेश्च स्वरयोरुभयोरपि ।

बिन्दूष्मणोर्विपर्यासाद् दुर्बोधमिति संज्ञितम्' ॥
'अको खगौ घङौ चैव चटौ ञणौ तपौ नमौ।
यशौ रषौ लसौ चेति मूलदेवीयमुच्यते' ॥
'ग्रहनयनवसुसमेतं षडाननाख्यानि सागरा मुनयः।
ज्वलनाङ्गं तुकश्टङ्गं दुर्लिखितं गूढलेख्यमिदम्' इति ॥

एवंप्रकारा अन्येऽपि द्रष्टव्याः। ४६देशभाषाविज्ञानमिति । अप्रकाश्यवस्तुज्ञापनार्थं तद्देशीयैर्व्यवहारार्थं च। ४७पुष्पशकटिकेति । पुष्पाणि निमित्तीकृत्य शकटिका प्रणीता। ४८निमित्तज्ञानमिति । निमित्तं धर्मक्षमासंकेतमार्गणं, शुभाशुभदेशपरिज्ञानफलम्, तत्र च प्रष्टुरभिज्ञानार्थम्, "एवंरूपया स्त्रिया तव संप्रयोग" इति कामोपहसितप्राया आदेशाः, निमित्तज्ञानमिति सामान्येनोक्तम्। ४९यन्त्रमातृकेति । सजीवानां-निर्जीवानां यन्त्राणां यानोदकसङ्ग्रामार्थं घटना शास्त्रं विश्वकर्मप्रोक्तम्। ५०धारणमातृकेति। श्रुतस्य ग्रन्थस्य धारणाऽर्थं शास्त्रम्, यथोक्तम्—

'वस्तु कोषस्तथा द्रव्यं लक्षणं हेतुरेव च।
इत्येते धारणादेव्याः पञ्चाङ्गरुचिरं वपुः' ॥ इति

५१संपाठ्यमिति। संभूय पठनं क्रीडाऽर्थं वादार्थं च, तत्र पूर्वधारितमेको ग्रन्थं पठति, द्वितीयस्तमेवाश्रुतपूर्वं तेन सह तथैव पठति। ५२मानसीति। मनसि भवा चिन्ता दृश्यादृश्यविषयभेदाद् द्विधा तत्र कश्चिद् व्यञ्जनाक्षरैः पद्मोत्पलाद्याकृतिभिर्यथास्थितानुस्वारविसर्जनीययुतैः श्लोकमनुक्तार्थं लिखति, अन्यश्च मात्रासंधिसंयोगासंयोगच्छन्दोविन्यासादिभिरभ्यासादुन्नीताक्षरं पठति, इति दृश्यविषया, यदा तु तथैव तानि यथाक्रममाख्यातानि श्रुत्वा पूर्ववदुन्नीय पठति तदा दृश्यविषया न भवति, सा चाकाशमानसीत्युच्यते तदुभयं क्रीडाऽर्थं वादार्थं च। ५३काव्यक्रियेति। संस्कृतप्राकृतापभ्रंशकाव्यस्य करणं प्रतीतप्रयोजनम्। ५४अभिधानकोष इति। उत्पलमालाऽऽदिः। ५५छन्दोज्ञानमिति। पिङ्गलादिप्रणीतस्य च्छन्दसो ज्ञानम् । ५६क्रियाकल्प इति। काव्यकरणविधिः, काव्यालंकार इत्यर्थः, त्रितयमपि काव्यक्रियाऽङ्गं, परकाव्यावबोधार्थं च । ५७छलितकयोगा इति । परव्यामोहनार्थाः, यथोक्तम्—

यद्रूपमन्यरूपेण संप्रकाश्य हि वञ्चनम्।
देवेतरप्रयोगाभ्यां ज्ञेयं तच्छलितं यथा ॥
दिव्यं शूर्पणखा रूपमितरद्वायुनन्दनः।
छलितवानभिसृत्य श्रिया रामं च कीचकम् ॥ इति

५८वस्त्रगोपनानीति । वस्त्रेणाप्रकाश्यदेशस्य संवरणं यथा तद्धूयमानमपि तस्मान्नापैति. त्रुटितस्यात्रुटितस्येव परिधानम्. महतो वस्त्रस्य संवरणं नीविसंकोचादिनाऽल्पीकरणम् इति गोपनानि । ५९द्यूतविशेषा इति । निर्जीवद्यूतविधानमेतद्, यत्र ये प्राप्त्यादिभिः पञ्चदशभिरङ्गैर्मुष्टिक्षुल्लकादयो द्यूतविशेषाः प्रतीतार्थाः । ६०आकर्षक्रीडेति । पाशकक्रीडा, द्यूतविशेषत्वेऽपि पुनर्वचनमत्रादरार्थम्, सश्रृङ्गारत्वाद् दुर्विज्ञेयत्वाद्वा, अक्षहृदयापरिज्ञाने हि नलयुधिष्ठिरयोरपि पराजयात् । ६१बालक्रीडनकानीति । गृहकन्दुकपुत्रिकाऽऽदिभिर्यानि बालानां क्रीडनानि तानि बालोपक्रमार्थानि, एता एकषष्टिकला उक्ताः । ६२वैनयिकीनामिति । स्वपरविनयप्रयोजनाद्वैनयिक्यो विनयाऽऽचारशास्त्राणि, हस्त्यादिशिक्षा च । ६३वैजयिकीनामिति । विजयप्रयोजना वैजयिक्यः, दैव्यो मानुष्यश्च तत्र दैव्योऽपराजितादयो, मानुष्यो याः साङ्ग्रामिक्यः शस्त्रविद्याः । ६४व्यायामिकीनामिति । व्यायामप्रयोजना व्यायामिक्यो मृगयाऽऽद्याः, एतास्तिस्र आत्मोत्कर्षरक्षणार्थाः, जीवनार्थाः, इति चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयवयोगिन्योऽवयवभूता, तदभावे कामसूत्रस्याप्रवृत्तेः ॥ १६ ॥

पाञ्चालिकी च चतुःषष्टिरपरा ॥ १७ ॥

पाञ्चालिकी चेति । पञ्चालप्रभवा तत्प्रोक्तत्वाद्वा, चतुःषष्टिरङ्गविद्याः तद्भावे हि तस्याः प्रवृत्तेः ॥ १७ ॥

तस्याः प्रयोगानन्ववेत्य सांप्रयोगिके वक्ष्यामः ॥ १८ ॥

तस्या इति । पाञ्चालिक्याः, अन्ववेत्य यथायथं विषयमनुसृत्य; सांप्रयोगिकेऽधिकरणे प्रयोगान् वक्ष्यामः ॥ १८ ॥

कामस्य तदात्मकत्वात् ॥ १९ ॥

कामस्य तदात्मकत्वादिति । चतुःषष्टिस्वभावत्वात्, पूर्वस्यास्तु चतुःषष्टेस्तन्त्रान्तरे दृष्टप्रयोगत्वाद्, इह तदङ्गताप्रतिपत्त्यर्थमुद्देशमात्रमुक्तम् ॥ १९ ॥

कलाग्रहणे फलमाह—

आभिरभ्युच्छ्रिता वेश्या शीलरूपगुणान्विता ।
लभते गणिकाशब्दं स्थानं च जनसंसदि ॥ २० ॥

आभिरिति । कलाभिरभ्युच्छ्रिता जातोत्कर्षा, वेश्येति प्रायशो ग्रहणमस्या इति दर्शनार्थं शीलं सुस्वभावः, रूपं संस्थानं वर्णश्च, गुणा नायिकाया वैशिके वक्ष्यमाणाः, गणिकाशब्दमिति, वेश्येतिसामान्य-

शब्दवाच्याऽपि विशिष्टं गणिकाऽभिधानं लभत इत्यर्थः, एवंलक्षणत्वाद्गणिकायाः, स्थानं च जनसंसदीति । जनसभायामासनभूमिं लभते, न वेश्येत्यवगण्यते ॥ २० ॥

पूजिता सा सदा राज्ञा गुणवद्भिश्च संस्तुता ।
प्रार्थनीयाऽभिगम्या च लक्ष्यभूता च जायते ॥ २१ ॥

राज्ञा पूजिता क्षेत्रागारादिदानेन, गुणवद्भिः संस्तुता 'असाधारणमस्याः कलाकौशलमि'ति प्रशंसिता, प्रार्थनीया कलोपदेशार्थिनाम,-भिगमनार्हा विदग्धानां रतार्थिनां, लक्ष्यभूता निदर्शनभूता देवदत्तावत्॥२१॥

योगज्ञा राजपुत्री च महामात्रसुता तथा ।
सहस्रान्तःपुरमपि स्ववशे कुरुते पतिम् ॥ २२ ॥

योगज्ञा=गीतादिप्रयोगज्ञा, सहस्रान्तःपुरमिति प्रभूतदारोपलक्षणम्। स्ववशे=आत्मनो वशे ॥ २२ ॥

तथा पतिवियोगे च व्यसनं दारुणं गता ।
देशान्तरेऽपि विद्याभिः सा सुखेनैव जीवति ॥ २३ ॥

तथा पतिवियोगे पत्यौ प्रोषिते, तथा व्यसनं दारुणं वैधव्यलक्षणंगता, निर्वेदात्त्यक्तस्वदेशा; अन्यस्मिन्नपि देशे सुखेनैव जीवति, विद्योपदेशदानात् ॥ २३ ॥

पुरुषमधिकृत्याह—

नरः कलासु कुशलो वाचालश्चाटुकारकः ।
असंस्तुतोऽपि नारीणां चित्तमाश्वेव विन्दति ॥ २४ ॥

नर इति । वाचाल इति कलासंबन्धद्वारेणैव बहुभाषी नान्यथा, माभूदनागरकत्वप्रसङ्ग इति । चाटुकारकः=प्रियस्य कर्ता, कलाग्रहणेन हि तत्संस्कारवत्त्वाद् असंस्तुतोऽप्यपरिचितोऽपि चित्तं विन्दति गृह्णाति, आश्वेव न कालमपेक्षते ॥ २४ ॥

कलानां ग्रहणादेव सौभाग्यमुपजायते ।
देशकालौ त्ववेक्ष्यासां प्रयोगः सम्भवेन्न वा ॥ २५ ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकरणे विद्यासमुद्देशस्तृतीयोऽध्यायः, तृतीयं प्रकरणं च ॥ ३ ॥

ग्रहणादेवाभिजायते संप्रयोगात्स्त्रीपुंसयोः सौभाग्यम्, अर्थोऽनर्थप्रतीघातः कामो यशश्चेत्यर्थोक्तं, तत्रापि देशकालापेक्षा, अस्मिन्देशे ना-

गरकाः कलाकुशलाः घटानिबन्धनादिकामा वेति प्रयोगः, नागरकशून्यो वा देशः, गुणद्विषो वाऽत्र प्रतिवसन्ति, व्यसनकालो वा नागरकाणामिति न वा प्रयोगसंभवः, अन्यथा तत्परिज्ञानं दोषफलं स्यादिति॥२५॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलायां साधारणे प्रथमेऽधिकरणे विद्यासमुद्देशस्तृतीयोऽध्यायः, तृतीयं प्रकरणं च ॥ ३ ॥

## चतुर्थोऽध्यायः ।

शास्त्रकार एव प्रकरणसंबन्धमाह—

**गृहीतविद्यः प्रतिग्रहजयक्रयनिर्वेशाधिगतैरर्थैरन्वयागतैरुभयैर्वा गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्तेत ॥ १ ॥**

गृहीतविद्य इति । तस्य नागरकवृत्तवर्तने योग्यत्वाद् गृहीतविद्यस्याप्यसति पत्नीयोगे नागरकवृत्तस्यासंभवादाह-गार्हस्थ्यमिति । पत्नीसंयोगेऽपि यदि गार्हस्थ्यं गृहकर्म नागरकयोग्यं तन्नार्थं बिनेत्याह—अर्थैरिति । तेऽपि न विनोपायैरित्याह—प्रतिग्रहेति । तत्र ब्राह्मणः प्रतिग्रहेण तद्वृत्तित्वात्, क्षत्रियः शास्त्रजीवित्वाज्जयेन, वैश्यः क्रयेण वार्तोपलक्षणार्थेन, शूद्रः कारुकुशीलवादिः कृते कर्मणि यो निर्वेशो भृतिस्तेनार्जितैः गृहस्थकर्म प्राप्येति, न निष्किञ्चनस्यायं विधिः, अन्वयागतैरिति। पितृपितामहागतैः, अत्र पत्नीयोगादनन्तरमेव गार्हस्थ्याधिगमः, उभयैर्वेति । प्रतिग्रहाद्यागतैरन्वयागतैश्च, सत्स्वप्यन्वयागतेष्वपूर्वार्जनं कार्यमिति दर्शयति, नागरको विदग्धजनः, एतद्वृत्त्यपेक्षया वा भविष्यद्वृत्त्या नागरकस्तस्य वृत्तं वर्तेतेति सामान्यवृत्तिर्नागरकाविशिष्टा वृत्तिः कर्म वा भवति, चातुर्वर्ण्यं गृहस्थमधिकृत्येदं शास्त्रम्, अस्य चेदं प्रकरणं शरीरम्, तदाश्रितस्य हि सर्वशास्त्रानुष्ठानात् ॥ १ ॥

यत्र तस्य वृत्तं तत्र स्थितिमाह—

**नगरे पत्तने खर्वटे महति वा सज्जनाश्रये स्थानम् ॥ २ ॥**

नगर इति । नगरमष्टशतग्रामीमध्ये तद्व्यवहारस्थानम्, पत्तनं यत्र राजधानी स्थिता, खर्वटं द्विशतग्रामीमध्ये, महति वेति । चतुःशतग्रामीमध्ये, द्रोणमुखं नाम खर्वटान्महद्भवति, एषामन्यतमेऽवस्थानं युज्यते, कुत इत्याह-सज्जनाश्रय इति प्रतिपदं योज्यम् ॥ २ ॥

**यात्रावशाद्वा ॥ ३ ॥**

यात्रावशाद्वेति । यत्र वा स्याद्यापनं शरीरस्थितिर्ग्रामे तत्रावस्थानं, तन्निबन्धनत्वादितरवृत्तेः ॥ ३ ॥

तत्रापि गृहमन्तरेण न संभवतीत्याह—

तत्र भवनमासन्नोदकं वृक्षवाटिकावद्विभक्तकर्मकक्षं द्विवासगृहं कारयेत् ॥ ४ ॥

तत्रेति । नगरादीनामन्यतमे भवनं गृहं कारयेदिति संबन्धः, आसन्नोदकं नदीवाप्यादिसमीपे जलमर्कदर्थितं क्रीडाऽङ्गं च, वृक्षवाटकावदिति । यस्यां दिशि जलं तस्यां वृक्षवाटिकया गृहोद्यानेन युक्तम्, विभक्तकर्मकक्षमिति । कर्मार्थं कक्षा प्रकोष्ठकानि ता विभक्ता यस्य, उच्चावचे हि गृहकर्मणि क्रियमाणे गृहं भग्नं स्याद्, द्विवासगृहमिति । द्विधा वासगृहमिति । शयनार्थेन रत्यर्थेन च युक्तम्, एतावद्व वृत्तोपयोगिगृहविधानं, शेषं वास्तुविद्यायां द्रष्टव्यम् ॥ ४ ॥

तस्मिन्कारित आधेयानां न्यासमाह—

बाह्ये च वासगृहे सुश्लक्ष्णमुभयोपधानं मध्ये विनतं शुक्लोत्तरच्छदं शयनीयं स्यात्, प्रतिशय्यिका च ॥ ५ ॥

बाह्य इति । आभ्यन्तरं वासगृहमन्तर्दाराणां शयनार्थम्, बाह्ये च प्रकोष्ठे कृते रत्यर्थं शयनीयं स्यात्, सुश्लक्ष्णं खट्वाऽऽश्रयप्रतिपादिकाऽऽस्तरणतूलिकाऽऽदिभिः सुरभितं च,उभयोपधानं शिरश्चरणभागयोर्न्यस्तोपधानम्, मध्ये विनतमाक्रान्तम्, मृदुकमित्यर्थः, शुक्लोत्तरच्छदमिति। शुक्लस्य प्रच्छदपटस्य प्रत्यहं द्वित्रैर्वा दिवसैः,प्रक्षालनीयत्वादित्यवश्यं तदुपरि देयम् । प्रतिशय्यिका चेति । तस्य समीपे संप्रयोगार्थं तत्प्रतिच्छन्दिका किञ्चिन्न्यूनोत्सेधा यस्यामाशय्यिका स्यादित्येवं विधिरयमाचारवतां, वेश्याकामिनस्तु शयनीयपद उभयं निर्वर्तयन्ति, न तेषां प्रतिशय्यिका, तथा चोक्तम्—

'संप्रयुज्येत यत्रस्थो नायकः प्रियया सह ।
न तत्रोपहते विद्वाञ्छयीत शयने शुचिः" इति ॥ ५ ॥

तस्य शिरोभागे कूर्चस्थानम् ॥ ६ ॥

तस्येति । शयनीयस्य पश्चात्पार्श्वभागानां निकृष्टत्वाच्छिरोभाग एव कूर्चासनस्य देवताऽनुस्मरणार्थस्य स्थापनं स्याद्, यथोक्तम्—

'शयनीयशिरोभागे न्यस्तकूर्चे शुचिः शुभे ।
कृतेष्टदेवतायोगो यायाच्छयनमात्मवान्' ॥ ६ ॥

वेदिका च ॥ ७ ॥

वेदिका चेति । कुड्योपाश्रया शयनीयतुल्योत्सेधा हस्तमात्रविस्तारा कृतकुट्टिमा चतुष्किका स्यात् ॥ ७ ॥

तत्र रात्रिशेषमनुलेपनं माल्यं सिक्थकरण्डकं सौगन्धिकपुटिका मातुलुङ्गत्वचस्ताम्बूलानि च स्युः ॥ ८ ॥

तत्र=वेदिकायां, रात्रिशेषं रात्र्युपयुक्तशेषम्, अनुलेपनं चन्दनादिकं-प्रातरुपभोगार्थं स्यात्, माल्यं रात्रिशेषम्. सिक्थकरण्डकं=सिक्थकसंपुटिका, सौगन्धिकं सुगन्धद्रव्यनिर्वृत्तं स्वेदापनोदार्थं तस्य पुटिका तमालादिपत्रमयी मातुलुङ्गत्वचो मुखवैरस्यापनोदार्थं दुष्टमारुतनिवारणार्थं च, यथोक्तम्—

'सायं लीढ्वा कामी मध्वक्तं मातुलुङ्गदलकल्कम् ।
स्त्रीभुजपञ्जरसंस्थः खलेन न हि हेप्यते मरुता' ॥ इति

ताम्बूलानि च सज्जितानि रात्रिपरिभोगार्थं स्युः ॥ ८ ॥

भूमौ पतद्ग्रहः ॥ ९ ॥

भूमौ पतद्ग्रहः; न वेदिकायाम्. प्रक्रान्तत्वाद्ग्रयवच्छिद्यते, यत्रस्थेन वा नायकेनोपयुक्तताम्बूलादि निष्ठीवितं पतद् गृह्णाति सा भूमिः, तत्र स्याद् नान्यत्र, अभूमित्वात् ॥ ९ ॥

नागदन्तावसक्ता वीणा, चित्रफलकं, वर्तिकासमुद्गको, यः कश्चित्पुस्तकः, कुरण्टकमालाश्च ॥ १० ॥

वीणा निचोलावगुण्ठिता वादनार्था, चित्रफलकमालेख्यार्थम्, वर्तिकासमुद्गकश्चित्रकर्मोपयोगी, यः कश्चिदिति सामान्यनिर्देशेऽपि यत्तदानीं काव्यं भावितं तस्य पुस्तको वाचनार्थं स्यादित्यर्थादेवावगम्यते, कुरण्टकमालाश्चेति। तासां शोभामात्रफलानां सुरतसंमर्देनाप्यम्लायमानत्वात्, तद्धारणे च सौभाग्यश्रुतेर्विशेषाभिधानम्, एता वीणादयोऽनुपघातार्थं वासगृहभित्तिनिहितनागदन्तेष्वासज्य स्थापिता यथाप्रयोजनं चादातव्याः, अनुरूपस्थाननिवेशनमपि वैदग्ध्यजननमिति गम्यते ॥१०॥

नातिदूरे भूमौ वृत्तास्तरणं समस्तकम् ॥ ११ ॥

नातिदूरे शयनीयस्य, भूमौ; न पर्यङ्के वेत्रासने वा, तत्रस्थस्याशोभितत्वाद्, वृत्तास्तरणं लोके प्रतीतम्, समस्तकमुपरिन्यस्तमस्तकमासनार्थं स्यात्, कूर्चेषु तावत्कालिकमासनम् ॥ ११ ॥

आकर्षफलकं द्यूतफलकं च ॥ १२ ॥

आकर्षफलकं द्यूतफलकं च क्रीडाऽर्थं भूमौ कुड्योपाश्रितं स्यात्, काले च प्रसारयेत् ॥ १२ ॥

तस्य बहिः क्रीडाशकुनिपञ्जराणि ॥ १३ ॥

तस्येति । वासगृहस्य, नातिदूरे बहिस्तत्सविधागारके क्रीडाऽर्थं-यानि शकुनिपूर्णानि पञ्जराणि नागदन्तावसक्तानि स्युः, नाभ्यन्तरे पुरीषोत्सर्गादिदोषात् ॥ १३ ॥

एकान्ते च तर्कुतक्षणस्थानमन्यासां च क्रीडानाम् ॥ १४ ॥

एकान्त इति । एकदेशे यत्रासमये न पश्यति तत्र तर्कुकर्मणस्तक्ष-णस्य च स्थानम्, अन्यासां च क्रीडानां लज्जाहेतूनामेकान्ते स्थानम्॥१४॥

स्वास्तीर्णा प्रेङ्खादोला वृक्षवाटिकायां सप्रच्छाया, स्थण्डिल-पीठिका च सकुसुमेति भवनविन्यासः ॥ १५ ॥

स्वास्तीर्णेति । आतपपरिहारार्थमुपरि घनशाखाप्रतानत्वात्सुसं-छन्ना, प्रेङ्खादोला प्रेरणया या दोल्यते, सुखावहा वृक्षवाटिकायां क्रीडाऽर्थं-स्यात्, न गृहाभ्यन्तरे, चक्रदोला तु चक्रपरिभ्रमणेन सा प्रेङ्खेति निग-द्यते, सप्रच्छायेति, उपरिपुष्पलताऽवच्छिन्नत्वात्प्रकृष्टच्छायोपेता, स्थ-ण्डिलमयी पीठिका चेति कृतकुट्टिमा वेदिका, सकुसुमेति, लतानिपतत्कु-सुमावकीर्णा स्याद्, वृक्षवाटिकायामित्येव, लतामण्डपिकेत्यर्थः, तत्र पा-नकादिभिरवस्थानाद्, भवनविन्यास उत्थापनावस्थापनाभ्याम् ॥१५॥

तत्रस्थस्य वृत्तं द्विविधम् । नित्यं, नैमित्तिकं च, तत्र पूर्वमधिकृत्याह—

स प्रातरुत्थाय कृतनियतकृत्यः, गृहीतदन्तधावनः, मात्र-याऽनुलेपनं धूपं स्रजमिति गृहीत्वा, दत्त्वा सिक्थकमलक्तकञ्च,दृष्ट्वा-ऽऽदर्शे मुखम्, गृहीतमुखवासताम्बूलः, कार्याण्यनुतिष्ठेत् ॥ १६ ॥

स इति । नायकः शयनात्प्रातरुत्थायाभ्युदितत्त्वापरिहारार्थं कृतनि-यतकृत्यः कृतमूत्रपुरीषोत्सर्गः, गृहीतदन्तधावनो जग्धदन्तकाष्ठः, अत्रा-न्तरे यथास्वं सन्ध्यावन्दनादेर्धर्मस्यानुष्ठानमर्थप्राप्तम्, मात्रयेति । प्रभू-तानुलेपनादिग्रहणादनागरकः स्यात् कार्यानुष्ठाने प्रस्तुतत्वाद्, धूपम-गुर्वादिना, स्रजं शेखरकमापीडं वा, अलक्तकं विशिष्टरागार्थं दत्त्वेति, अर्थादोष्ठयोः, ईषदार्द्रयाऽलक्तकपिण्ड्या घृष्टौष्ठं ताम्बूलमुपयुज्य; सि-क्थकगुटिकया ताडयेदित्ययं क्रमः, आदर्शे मुखमवलोक्य, मङ्गलार्थं-प्रसाधनगुणदोषज्ञानार्थं च, गृहीतमुखवासताम्बूल इति । गन्धयुक्तिवि-हितां मुखवासगुटिकां कपोले निधाय पुनरुपयोगार्थं च ताम्बूलं हस्त-वर्तिकायां गृहीत्वेत्यर्थः, कार्याणि त्रिवर्गसाधनान्यनुतिष्ठेत् ॥ १६ ॥

अनुष्ठितेषु तेषु शरीरसंस्कारार्थमाह—

नित्यं स्नानं, द्वितीयकमुत्सादनं, तृतीयकः फेनकः, चतुर्थकमायुष्यम्, पञ्चमकं दशमकं वा प्रत्यायुष्यमित्यहीनम् ॥ १७ ॥

नित्यमिति। प्रत्यहं स्नानम्, ओजस्करत्वात्पवित्रत्वाच्च, द्वितीयकमिति। यस्मिन्दिने कृतमुत्सादनं तदनन्तरं दिनं प्रथमं, तस्माद् द्वितीयेऽह्नि शरीरदार्ढ्यार्थं स्यात्, एकान्तरितमित्यर्थः, तृतीयक इति। तृतीयेऽह्नि जङ्घयोः फेनको देयः स्याद्, द्विदिनान्तरित इत्यर्थः, अन्यथा ऊर्ध्वं जङ्घे कर्कशे स्याताम्, चतुर्थकमिति। त्रिः पक्षस्य च श्मश्रुनखरोमाणि वर्धयेदित्ययमागमः, अत्र केषां चिन्नागरकाणामुपायभेदात्कालभेदः, तत्रायुष्यं श्मश्रुकर्म क्षुरेण तच्चतुर्थेऽह्नि स्याद्, दिनत्रयान्तरितमित्यर्थः, कर्तर्या तु पञ्चमकमेव स्यात्, प्रत्यायुष्यमिति। यद् गुह्ये क्षुरेण कर्म तत्पञ्चमेऽहनि, यत्तु लोम्नामुत्पाटनेन तद्दशमे स्यादित्याह—दशमकं वेति। तत्र लोम्नां चिरेणोद्गमनात्, तथा चोक्तम्—

'आयुष्यं तच्चतुर्थेऽह्नि स्याद्यत्तु क्षुरकर्मणा।
प्रत्यायुष्यं यदुद्धाराल्लोम्नां तद्दशमेऽहनि' इति ॥

एवमर्थं च सामान्येन त्रिः पक्षस्यालङ्कारकर्मेति नोक्तम्, अहीनमिति। स्नानादिपञ्चकमविकलं स्यादित्यर्थः ॥ १७ ॥

सातत्याच्च संवृतकक्षास्वेदापनोदः ॥ १८ ॥

सातत्यादिति। सर्वदा कक्षां विवर्त्य स्थातव्यम्, यदा तु किञ्चित्कर्म कुर्वतस्संवृता स्यात्तदा संश्लेषान्नियतमस्यां स्वेदः, तं संततं कर्पटेनापनुदेद्, अन्यथा वैगन्ध्यमवैदग्ध्यं च जनयेत् ॥ १८ ॥

पूर्वाह्णापराह्णयोर्भोजनम् ॥ १९ ॥

पूर्वाह्णापराह्णयोरिति। दिनं रात्रिमष्टधा विभज्य पूर्वाह्णे त्रिभिर्भागैः कार्याण्यनुतिष्ठेत्, चतुर्थे स्नानादिकं कृत्वा भुञ्जीत, अपराह्णे च पश्चिमे भागे बलाधानार्थं पुनर्भुञ्जीतेत्याचार्याणां मतमनुक्तमपि ज्ञेयम्, मतान्तरोपन्यासात् ॥ १९ ॥

सायं चारायणस्य ॥ २० ॥

सायमिति। पूर्वाह्णे प्रदोषे च चारायणस्य मतम्, न तथाऽपराह्णे द्वितीयभोजनं बलमाधत्ते यथा रात्राविति, तथा चोक्तम्—

'अजीर्णे भोजनं यच्च यच्च जीर्णे न भुज्यते।
रात्रौ न भुज्यते यच्च तेन जीर्यन्ति मानवाः' ॥ २० ॥

भोजनानन्तरं शुकसारिकाप्रलापनव्यापाराः, लावककुक्कु-

टमेषयुद्धानि, तास्ताश्च कलाक्रीडाः, पीठमर्दविटविदूषकायत्ता-व्यापाराः, दिवाशय्या च ॥ २१ ॥

भोजनानन्तरमिति । पूर्वाह्णे भोजनानन्तरं शुकसारिकाप्रलापना-दयो दिवाशयनान्ता व्यापाराः स्युस्तेषामयमेव कालः, तास्ताश्चेति । या याः प्रहेलिकाप्रतिमालाऽऽदिभिः क्रीडा उक्ताः, पीठमर्दादीन्व(१)क्ष्य-ति, तेष्वायत्ता व्यापाराः संधिविग्रहादयः, दिवाशय्येति । दिवाश-यनमधर्मोऽपि ग्रीष्म एव क्षयकाले शरीरपुष्ट्यर्थमनुज्ञातं, शरीरस्य ध-र्मसाधनत्वात् ॥ २१ ॥

गृहीतप्रसाधनस्यापराह्णे गोष्ठीविचाराः ॥ २२ ॥

गृहीतप्रसाधनस्येति । प्रस्तुतव्यापारमुपसंहृत्य गृहीतवैहारिकवे-षस्यापराह्णेऽह्नश्चतुर्थभागे, गोष्ठीविहारा गोष्ठ्यां क्रीडा इति । एतद्दैव-सिकं वृत्तम् ॥ २२ ॥

रात्रिभवमाह—

प्रदोषे च संगीतकानि ॥ २३ ॥

प्रदोषे चेति । प्रतिष्ठितायां संध्यायां रजनीमुखे सङ्गीतकानि नृत्य-गीतवादित्रकाणि प्रकाराणि स्युः ॥ २३ ॥

तदन्ते च, प्रसाधिते वासगृहे संचारितसुरभिधूपे ससहाय-स्य शय्यायामभिसारिकाणां प्रतीक्षणं, दूतीनां प्रेषणं, स्वयं वा गमनम् ॥ २४ ॥

तदन्ते च सङ्गीतकान्ते, प्रसाधिते संमार्जनपुष्पप्रकरशयनरचना-ऽऽदिभिर्वासगृहे बाह्ये, संचारितो विस्तारितः सुरभिधूपो यत्रेति, वास-गृहं व्याप्य बहिरुपक्रान्त इत्यर्थः, ससहायस्येति । सहायान्वक्ष्य(२)ति, तेषामप्यत्र व्यापारात्, शय्यायामिति । शय्यासमीपे स्थितस्य, गौरवानुरागख्यापनार्थं न तावदध्यासीत शय्यां, स्वयं वा गमनं कदा चित्स्यादिति, आभिमुख्येन कान्तं सरन्तीत्यभिसारिकास्ता-सां कृतसङ्केतानां प्रतीक्षणं, दूतीनां संप्रेषणं; सङ्केतितकालाति-क्रमे तत्संप्रेषणेऽपि मानादनागमे स्वयं वा गमनं गौरवानुरागख्या-पनार्थम् ॥ २४ ॥

आगतानां च मनोहरैरालापैरुपचारैश्च ससहायस्योपक्रमा व-

(१,) अधि० १, अ० ४, प्र० ४, सू० ४४, ४५, ४६, ।
(२,) अधि० १, अ० ५, प्र० ५, सू० ३५, ३८, ।

षप्रमृष्टनेपथ्यानां दुर्दिनाभिसारिकाणां स्वयमेव पुनर्मण्डनम् , मित्रजनेन वा, परिचरणमित्याहोरात्रिकम् ॥ २५ ॥

मनोहरैरिति । "स्वागतम्, इदमासनमास्यताम् , साधु कृतं दयिते ! यदागताऽसि, त्वत्प्रतिबद्धजीवित एवास्मि, तत्किमिति कालोऽतिक्रमितः" इत्यादिभिरालापैः, उपक्रमाः प्रत्युद्गमादयः. ससहायस्येति । सहाया अपि तद्वचनमनुकुर्वन्तः स्वव्यापारेणोपक्रमेरन्, प्रमृष्टं विलुप्तं दुर्दिनाभिसारिका दुर्दिनकालेऽभिसरन्ति याः, स्वयमेव नान्येन, लक्ष्यभूतानां गौरवानुरागख्यापनार्थम् , पुनर्मण्डनं वर्षेणोत्पादितवैकृतत्वाद् आसन्नोपभोगकालत्वाच्च, मित्रजनेनात्मनिर्विशेषेण पुनर्मण्डनम्, मध्यवृत्तीनाम् , परिचरणं चेति संवाहनवीजनादिकं सर्वासामेव परिचारकैः कारयितव्यम् , एतद् बाह्यस्त्रीषु, नान्तर्दारेषु, आहोरात्रिकमहोरात्रभवम् , सांप्रयोगिकं च रात्रिभवं सांप्रयोगिके वक्ष्य(१)ति ॥२५॥

नैमित्तिकमाह—

घटानिबन्धनं, गोष्ठीसमवायः, समापानकम् , उद्यानगमनं, समस्याः क्रीडाश्च प्रवर्त्तयेत् ॥ २६ ॥

घटानिबन्धनमिति । देवानुद्दिश्य यात्रा घटा; नागरकाणां तत्र संघट्यमानत्वात्, तस्या निबन्धनं गणधर्मेण व्यवस्थापनम्, गोष्ठीसमवाय इति । गोष्ठ्यां नागरकाणां काव्यकलाविषयं समवायनं संप्रधारणं प्रज्ञाविवृद्धये, यदपराह्णे गोष्ठीविहार इति नित्यकर्मोक्तं तस्य क्रीडामात्रफलत्वादिदं विशिष्यते, समापानकमिति । संभूय समन्तात्पानमापानकमित्यर्थः, यन्नायिकया सहैकस्य मात्रया पानं तत्सरकाख्यं नित्यमेव स्यात्, उद्यानगमनमिति । बहिः स्वकारितेऽन्यकारिते वोद्याने गमनं वनविहार इत्यर्थः, गृहवाटिकागमनं तु नित्यमेव स्यात्, समस्याः क्रीडाश्चेति । समस्यन्ते समग्रीभवन्ति नागरका यासु ताः समस्याः, अधिकरणे ण्य(२)प्रत्ययः, पूर्ववत् संभूय क्रीडा इत्यर्थः, ता द्विविधा—माहिमान्यो देश्याश्च, एतत् पञ्चविधं कर्म नैमित्तिकं नायकः प्रवर्त्तयेत् ॥ २६ ॥

तत्र घटानिबन्धनमाह—

पक्षस्य मासस्य वा प्रज्ञातेऽहनि सरस्वत्या भवने नियुक्तानां नित्यं समाजः ॥ २७ ॥

---

(१,) अधि. २, द्वितीयादिषु नवस्वध्यायेषु ।

(२,) प्रसिद्धलक्ष्यानुरोधात्संज्ञापूर्वकविधेरनित्यतया णित्वप्रयुक्तवृद्ध्यभावः । कृत्यल्युटो बहुलम् ।३।३।११३। इत्यतोऽर्थान्तराभ्युपगमः ।

पक्षस्येति । पक्षस्य मासस्य वाऽतिक्रान्तस्यावसानिकेऽहनि, प्रज्ञात-इति । यद्दिनं यस्या देवताया लोकप्रसिद्धं तत् प्रज्ञातम्, यथा गणपतेश्चतुर्थी, सरस्वत्याः पञ्चमी, शिवस्याष्टमीत्यादि, तत्र देवतायाः संनिधानात्, सरस्वती च नागरकाणां विद्याकलास्वधिदेवता, तस्या आयतने पञ्चम्याम्, नियुक्तानामिति । नायकेन पूजोपचारकत्वे प्रतिपन्नं प्रतिमासं च ये नियुक्ता नागरकनटादयो नर्त्तितुं, तेषां समाजः, स्वव्यापारानुष्ठानेन मिलनं, यस्मिन् प्रवृत्ते नागरकाः सामाजिका भवन्ति, नित्यमिति । तत्र तत्राहनि ॥ २७ ॥

अन्येष्वहःसु धूपविलेपनघटा, तस्या निबन्धनमाह—

कुशीलवाश्चागन्तवः प्रेक्षणकमेषां दद्युः ॥ २८ ॥

कुशीलवाश्चेति । आगन्तवोऽन्यस्मादायतनाद् नटनर्तकाः, प्रेक्षणकमेषां प्रज्ञातेऽहन्यन्यत्र वाऽहनि दद्युर्दर्शयेयुः. नियुक्तास्तु भृतिप्रतिबद्धा यात्रायां कुशीलवत्वात् प्रज्ञात एव दर्शयन्ति, इदमुक्तं भवति—पूजोपचारकैः पात्रापात्रत्वमनपेक्ष्यैव प्रेक्षणमवश्यं ते दर्शयितव्या इति॥२८॥

द्वितीयेऽहनि तेभ्यः पूजा नियतं लभेरन् ॥ २९ ॥

द्वितीय इति । प्रथमेऽहनि प्रेक्षणकव्यग्रत्वात्, तृतीयादिष्वपि क्लिष्टदानं स्यात्, तेभ्य इति । नियुक्तेभ्यः पूजोपचारकेभ्यः, पूजा प्रेक्षणकफलम्, नियतमिति । एतावत् प्रेक्षणकमूल्यमागन्तूनामिति पूर्वकल्पितं प्राप्नुयुः, अनियतात् प्रेक्षणकाद् रागाद्वस्त्रादिदानलक्षणं प्रथमे वाऽह्नि रङ्गमध्ये नागरकेभ्यो लभेरन् ॥ २९ ॥

ततो यथाश्रद्धमेषां दर्शनमुत्सर्गो वा ॥ ३० ॥

तत उत्तरकालम्, यथाश्रद्धमिति । पुनर्द्रष्टुं यदि श्रद्धाऽस्ति पुनरागन्तूनां नृत्यतां दर्शनं, नो चेदुत्सर्गः प्रियालापैः संप्रेषणम् ॥ ३० ॥

यदा पुनः पुनर्दर्शनकौतुकं तदा दर्शनविशेषमाह—

व्यसनोत्सवेषु चैषां परस्परस्यैककार्यता ॥ ३१ ॥

व्यसनोत्सवेषु चैषामिति । आगन्तूनां कस्य चिद्व्याधौ शोके व्यसने वा तथा विवाहादावुत्सवे व्यग्रस्य यत्कर्म तन्नियुक्तेन कुशीलवेन प्रेक्षणकाविघातार्थं संपाद्यम्, नियुक्तानां वा कस्य चिद्व्यसनोत्सवे, तदाऽऽगन्तुनेति परस्परैककार्यता स्यात् ॥ ३१ ॥

आगन्तूनां च कृतसमवायानां पूजनमभ्युपपत्तिश्चेति गणधर्मः॥३२॥

कृतसमवायानामिति । ये नागरकपदेऽभिषिक्ता घटां द्रष्टुमन्यस्माद्रागतास्तेषां पूजोपचारकर्माल्यानुलेपनादिभिः पूजनम्, पारिषदना-

गरकैश्च यथापरिचयं माङ्गलिकम्, अभ्युपपत्तिश्चेति । व्यसने साहाय्यं-तत्प्रतीकारेण, गणधर्म इति । तत्रत्यानामागन्तूनां कुशीलवनागरकाणां-यथास्वं परिषद्धर्म उक्तः ॥ ३२ ॥

एतेन तं तं देवताविशेषमुद्दिश्य सम्भावितस्थितयो विविधाघटा व्याख्याताः ॥ ३३ ॥

एतेनेति । सरस्वतीघटाऽऽदिनिबन्धनेन, तं तमिति । यो यः सांनिध्याल्लोके दृष्टातिशयः, संभावितस्थितय इति । देशकालापेक्षया कृतव्यवस्थाः ॥ ३३ ॥

गोष्ठीसमवायमाह—

वेश्याभवने सभायामन्यतमस्योदवसिते वा समानविद्याबुद्धिशीलवित्तवयसां सह वेश्याभिरनुरूपैरालापैरासनबन्धो गोष्ठी॥३४॥

वेश्याभवन इति । सभायां=मण्डपे, अन्यतमस्य वा नागरकस्योदवसिते गृहे, एषु नागरकाणामविरुद्धं मिलनं समानविद्यादीनां सुखातिशयाद्, नासमानविद्यादीनाम्, बुद्धिः प्रज्ञा, अभिप्रायो वा, सह वेश्याभिरिति । स्त्रीप्रतिबद्धकलाप्रतिपत्त्यर्थमासां गोष्ठ्यामन्तर्भावः, अनुरूपैः=परस्परस्तुत्यनुरागपरिहासानुविद्धैः, आसनबन्धो=यथायथमासनेऽवस्थानम्, पक्षस्य मासस्य वा तद्योग्यतया प्रज्ञातेऽहनि स्यात्॥३४॥

तत्रैषां समवायमाह—

तत्र चैषां काव्यसमस्या कलासमस्या च ॥ ३५ ॥

काव्यसमस्यां कलासमस्या चेति । संभूय दर्शनं निरूपणं तत्समस्या चर्चेत्यर्थः, पूर्ववद्भावे (१)प्रत्ययः, 'अस गतिदीप्त्यादानेषु' इति गत्यर्थस्य ज्ञानार्थत्वाद्, भरतादिकाव्यस्य नृत्यादिकलाया वा चर्चा स्यात्, यत्तु काव्यसमस्यापूरणमित्युक्तं, तस्य भिन्नार्थत्वात् कलासमस्या चेत्यत्रान्तर्भावः ॥ ३५ ॥

तस्यामुज्ज्वला लोककान्ताः पूज्याः प्रीतिसमानाश्चाहारिताः॥३६॥

तस्यामिति । गोष्ठ्याम्, चर्चाऽवसाने प्रीतिवर्धनार्थं वस्त्रादिदानेन परस्परस्य कलापूजाः स्युः, उज्ज्वला=अग्रास्याः, लोककान्ताः=लोकमनोहराः, प्रीतिसमानाः=प्रीत्यनुरूपाः, आहारिताः=परिचारिकैरानायिताः ॥ ३६ ॥

समापानकमाह—

परस्परभवनेषु चापानकानि ॥ ३७ ॥

परस्परभवनेषु चेति । एकस्यैकदा भवनेऽन्यदाऽन्यस्य वा, पक्षस्य मासस्य वा तद्योग्यतया प्रज्ञातेऽहनि, आपानकानि=पानगोष्ठ्यः स्युः ॥ ३७ ॥

आपानकेषु विधिमाह—

तत्र मधुमैरेयासवान् विविधलवणफलहरितशाकतिक्तकटुकाम्लोपदंशान् वेश्याः पाययेयुरनुपिबेयुश्च ॥ ३८ ॥

तत्रेति । मधु=माध्वीकम्, मैरेयासवौ मद्यविशेषौ, तथा चोक्तम्—

'मेषशृङ्गीत्वक्क्वाथाभियुतो गुडप्रतीवापः, पिप्पलीमरिचसंभारस्त्रिफलायुक्तो मद्यो मैरेयः । कपित्थतुल्यफाणितपञ्चतौलिकप्रस्थमधुनश्चासवयोगः, सुराकल्कतण्डुलाभ्यां निष्पन्नो गुडस्तत्र निक्षिप्यते' इति । मद्यमिति वक्तव्ये विशेषोपादानं त्रैविध्यख्यापनार्थम्, तथा चोक्तम्—

'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा' ।

अत्र सुराशब्दः सामान्यवाची द्रष्टव्यः, एवं च विविधपानादापानकं भवति, विविधानि लवणतिक्तरसभूयिष्ठानि हरितकटुकानि च शिग्रुपर्णादीन्युपदंशो येषामिति; तान् वेश्याः पाययेयुरभ्यर्थनापुरःसरमनुपिबेयुश्च, आदौ पिबद्भिर्गौरवानुरागौ न प्रकाशितौ स्याताम्, अत्र सह पृथग्वेति देशप्रवृत्तिरपेक्षणीया ॥ ३८ ॥

एतेनोद्यानगमनं व्याख्यातम् ॥ ३९ ॥

एतेनेति । आपानकविधिना, उद्यानगतैरप्ययमेवापानकविधिः कार्यइत्यर्थः ॥ ३९ ॥

तत्रोद्यानगमने विशेषमाह—

पूर्वाह्ण एव स्वलंकृतास्तुरगाधिरूढा वेश्याभिः सह परिचारकानुगता गच्छेयुः, दैवसिकीं च यात्रां तत्रैवानुभूय कुक्कुटलावकमेषयुद्धद्यूतैः प्रेक्षाभिरनुकूलैश्च चेष्टितैः कालं गमयित्वाऽपराह्णे गृहीततदुद्यानोपभोगचिह्नास्तथैव प्रत्याव्रजेयुः ॥ ४० ॥

पूर्वाह्ण एवेति । तदा हि गतानां दैवसिकी यात्रा संपद्यते, स्वलंकृताः=गृहीतवैहारिकवेषाः, तुरगाधिरूढाः, तुरगाणां ललितयानत्वात्, वेश्याभिः सहेति । ता अपि पश्चादग्रतो वा तुरगमारोहयितव्याः, परिचारकाः, यथास्वं कर्मभिः परिचरन्ति ये तैरनुगताः, पक्षस्य मासस्य वा गमनयोग्यतया प्रज्ञातेऽहनि गच्छेयुः, दैवसिका यात्रां, प्रत्यहं क्रि-

(१) कृत्यप्रत्ययस्य बाहुलकत्वादिति भावः ।

यमाणां शरीरस्थितिं, तत्रैवोद्यानेऽनुभूय; कुक्कुटलावकमेषयुद्धद्यूतैः सजीवनिर्जीवैर्नटादिप्रेक्षाभिरनुकूलैश्च चेष्टितैर्यथास्वं वेश्याप्रतिबद्धैः केलिविशेषेण दिवसं गमयित्वा, अपराह्णे प्रशान्तवेलायाम्, तथैवेति। स्वलंकृतास्तुरगाधिरूढाः सह वेश्याभिः परिचारकानुगता इति। विशेषोऽत्र गृहीततदुद्यानोपभोगचिन्हा इति 'तदुद्यानमुपभुक्तमिति' यानि सूचयन्ति कुसुमस्तवककिसलयादीनि तानि गृहीतानि शिरःकर्णकण्ठेषु कृतानि यैरिति, प्रत्याव्रजेयुः=प्रतीपमागच्छेयुः ॥ ४० ॥

एतेन रचितोद्ग्राहोदकानां ग्रीष्मे जलक्रीडागमनं व्याख्यातम् ॥४१॥

एतेनेति। उद्यानगमनविधिना, तत्रापि गमनं दैवसिकयात्राऽनुभवनमागमनं च तुल्यं, किं तु गृहीततदुद्यानोपभोगचिन्हा इति; तेन तत्रैव प्रायशोऽन्तर्भूतमिति नैमित्तिकवर्गे पृथङ् नोक्तं, योऽत्र विशेषस्तमाह-रचितोद्ग्राहोदकानामिति। उद्ग्राहमविद्यमानकुल्याऽऽद्युदकं यस्य तोयस्थानस्य तदुद्ग्राहोदकं वापीदीर्घिकाऽऽदि, रचितमिति, स्वार्थिकण्यन्ताद्धेतुमण्ण्यन्तात् क्तप्रत्यये रूपम्; रच 'प्रतियत्ने' इत्यस्यादन्तत्वान्न वृद्धिः तीर्थविन्यासादिभिः रचितं कारितमुद्ग्राहोदकं यैर्नागरकैरिति, ग्रीष्म इति। अन्यदा तु पुनर्निमज्जनोदकवाद्यविधानादिप्रकारायाः क्रीडाया असंभवात् ॥ ४१ ॥

समस्याः, क्रीडा, आह—

यक्षरात्रिः, कौमुदीजागरः, सुवसन्तकः, सहकारभञ्जिका, ऽभ्यूषखादिका, बिसखादिका, नवपत्रिका, उदकक्ष्वेडिका, पाञ्चालानुयानम्, एकशाल्मली, (१)यवचतुर्थी, आलोलचतुर्थी, मदनोत्सवो, दमनभञ्जिका, होलाका, अशोकोत्तंसिका, पुष्पावचायिका, चूतलतिका, इक्षुभञ्जिका, कदम्बयुद्धानि, तास्ताश्च माहिमान्यो देश्याश्च क्रीडा जनेभ्यो विशिष्टमाचरेयुरिति संभूय क्रीडाः ॥ ४२ ॥

यक्षरात्रिरिति। सुखरा(२)त्रिर्यक्षाणां तत्र संनिधानात्; तत्र प्रायशो लोकस्य द्यूतक्रीडा, कौमुदीजागर इति। आश्वयुज्यां हि पौर्णमास्यां कौमुद्या ज्योत्स्नायाः प्रकर्षेण प्रवृत्तेः; तत्र दोलाद्यूतप्रायाः क्रीडाः, सुवसन्तक इति। सुव(३)सन्तो मदनोत्सवः, तत्र नृत्यगीतवाद्यप्रायाः क्रीडाः, एता माहिमान्यः क्रीडाः, देश्या आह—सहकारभञ्जि-

(१,) स्पृहयन्तीव्रतम् इति क० पु० अधिकम्।

(२,) कार्त्तिकामावस्यारात्रिः। (३,) माघशुक्लपञ्चमीदिनम्।

केति । सहकारफलानां भञ्जनं यत्र क्रीडायाम्, अभ्यूषखादिका, चणकादिफलानां विटपस्थानामग्नौ प्लोषितानां खादनं यत्रेत्येते द्वे क्व चित् क्व चिद् दृश्येते, बिसखादिका; बिसानां मृणालानां खादनं यत्र, सरःसमीपवासिनां, नव(१)पत्रिका प्रथमवर्षणेन प्ररूढनवपत्रासु वनस्थलीषु या क्रीडा सा; प्रायेणाटवीसमीपवासिनामाटविकानां च, उदकक्ष्वेडिकेति ।

'वंशनाडी स्मृता क्ष्वेडा सिंहनादश्च कथ्यते' इति ।

उदकपूर्णा क्ष्वेडा यस्यां क्रीडायां सा मध्यदेश्यानाम् ; यस्याः शृ(२)ङ्गक्रीडेति प्रसिद्धिः, पाञ्चालानुयानम् भिन्नालापचेष्टितैः पाञ्चा(३)लक्रीडा यथा मिथिलायाम्, एकशाल्मली एकमेव महान्तं कुसुमनिर्भरं शाल्मलिवृक्षमाश्रित्य; तत् कुसुमाभरणानां क्रीडा यथा वैदर्भाणां, यवचतुर्थी वैशाखशुक्लचतुर्थ्यां नायकानां परस्परं सुगन्धयवचूर्णप्रक्षेप इति पाश्चात्येषु प्रसिद्धा, आलोलचतुर्थी श्रावणशुक्लतृतीयायां हिन्दोलक्रीडा, मदनोत्सवो मदनप्रतिकृति(४)पूजनम् , दमनभञ्जिका परस्परं दमनकपुष्पावतंसन(५)म् , होलाका फाल्गुनपूर्णिमायां शृङ्गकादिमुक्तेन किंशुकादिकुसुमरागाम्भसा परस्परोक्षणम् ; मिथःपटवासप्रक्षेपश्च, अशोकोत्तंसिका अशोकपुष्पैः शिरोभूषणरच(६)ना, पुष्पावचायिका पुष्पावचयनक्रीडा, चूतलतिका चूतपल्लवावतंसनम्, इक्षुभञ्जिका इक्षुखण्डमण्डनम्, कदम्बयुद्धानि कदम्बकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य युद्धानि कदम्बग्रहणं सुकुमारप्रहरणसूचनार्थम् ; यष्टीष्टकाऽऽदियुक्तानि तु न कार्याणि यथा पौण्ड्राणां युद्धं क चित् क्व चिद् दृश्यते, तास्ताश्चेति । या या लोके प्रवृत्तपूर्वाः, माहिमान्य इति । महिमा महत्त्वं तद्विद्यते यासामिति 'संज्ञायां मन्माभ्याम् ।५।२।१३७। इतीनिप्रत्ययः, सर्वदेशव्यापिन्य इत्यर्थः, देशे भवा देश्याः प्रदेशिन्य इत्यर्थः, जनेभ्यो विशिष्टमिति । घटाऽऽद्यो नागरकाणामेव, समस्यास्तु साधारण्यः; तत्र जना नागरकाश्च क्रीडन्ति, तस्मात्तेभ्यो विशिष्टमाचरेयुः; नागरत्वद्योतनार्थम्, संभूय क्रीडा इति । आसु नागरकाणां द्रष्टव्यमपहाय संभूय क्रीडनात् ॥ ४२ ॥

**एकचारिणश्च विभवसामर्थ्याद्; गणिकाया नायिकायाश्च सखीभिर्नागरकैश्च सह चरितमेतेन व्याख्यातम् ॥ ४३ ॥**

---

(१) वृक्षोद्वाहक्रीडा । (२) 'होली' इति तद्देशप्रसिद्धं नाम ।
(३) पुत्तलिकाविवाहः । (४) चैत्रसितचतुर्दश्याम् । (५) चैत्रसितद्वादश्याम् ।
(६) चैत्रसिताष्टम्याम् । रचनेत्युपलक्षणमशोककलिकाऽऽस्वादस्यापि ।

नागरकाणामभावाद्दृष्टदोषाद्वा यः कश्चिदेक एव चरति तस्य स्वविभवानुरूपेण परिचारकैः सह यक्षरात्र्यादयः समस्ता एव स्युः, एतेनेति। स्थानगृहन्यासनित्यनैमित्तिकविधिना यथासंभवं गणिकाया नायिकायाश्च चरितं व्याख्यातम्, तत्र नागरकाणां स्थाने सख्यः, सखीनां स्थाने नागरका इति ॥ ४३ ॥

उपनागरकाणां लक्षणद्वारेण वृत्तमाह—

**अविभवस्तु शरीरमात्रो मल्लिकाफेनकषायमात्रपरिच्छदः पूज्याद्देशादागतः कलासु विचक्षणस्तदुपदेशेन गोष्ठ्यां वेशोचिते च वृत्ते साधयेदात्मानमिति पीठमर्दः ॥ ४४ ॥**

तुशब्दो विशेषणार्थः, यस्तु निष्किञ्चनो यथोक्तं नागरकवृत्तं वर्तितुमयोग्यः शरीरमात्रः पुत्रकलत्राद्यभावात् परिचारकद्वितीयो यथोत्पादितवित्ताभावाद्देशहिण्डनकः, मल्लिका दण्डासनिका, शरीरधारणात्पूर्वनागरकाचार्यैः संकेतिता 'मल मल्ल धारणे' इति धातुपाठात् सा तस्य पृष्ठत एवासनार्थं भ्राम्यते, प्रवृत्तविषयेच्छत्वाच्च जङ्घाघर्षणार्थं फेनकषायाविति, तन्मात्रं परिच्छदो विभवो यस्येति, पीठिकाऽऽद्यासनं तु नार्हति, पूज्याद्देशाच्छास्त्रकलाविदध्युषितात्, तत्रत्य एव देशदिदृक्षयाऽऽगतः, कलासु कुशलः स्वदेश एव गीतादिचतुःषष्टिं पाञ्चालिकीं चाधीतवान्, तदुपदेशेन=कलोपदेशेन, गोष्ठ्यां नागरकाणाम्, वेशोचिते=वेश्याजनोचिते वृत्ते, साधयेदात्मानमिति। आचार्यमात्मानन्निष्पादयेदित्यर्थः, स पीठमर्द उपदेशदानेऽधिकृतत्वान्मल्लिकाऽऽख्यं पीठं मृद्नातीति कृत्वा, एतेनाचार्यवृत्तमस्य वृत्तम् ॥ ४४ ॥

**भुक्तविभवस्तु गुणवान् सकलत्रो वेशे गोष्ठ्यां च बहुमतस्तदुपजीवी च विटः ॥ ४५ ॥**

यस्तु यौवने नागरकवृत्त्या परिभुक्तसर्वस्वोऽप्यनुपरतो विषयेभ्यः, सविभवस्तु नागरक एव स्यात्, तत्रत्यो नान्यस्माद्देशादागतः, भुक्तविभवस्त्वागन्तुकः, पीठमर्दात् स एव गुणवान्नायकगुणयुक्तः, प्राक्तस्य नागरकत्वात्, सकलत्रः सानुबन्धत्वान्न स्वदेशत्यागी, बहुमत इति। बहु मतं यस्य; विशेषपरिज्ञानात्, तदुपजीवी=वेश्यागोष्ठ्युपजीवी, वृत्तिमन्यामनिच्छन् वेश्याजनं नागरकजनं चोपजीवति, तदुपजीवितया तयोः सन्देशं परस्परं विटतीति विटः, 'विट शब्दे' इति धातुपाठात्, वक्ष्यति च—'विटः पुरोगां प्रीतिं कुर्याद्' इति, तेन तदुपजीविवृत्तमेवास्य वृत्तम् ॥४५॥

**एकदेशविद्यस्तु क्रीडनको विश्वास्यश्च विदूषको वैहासिको वा ॥४६॥**

यस्तु गीतादीनां प्रदेशज्ञः सोऽविभवो भुक्तविभवो वा शरीरमात्रः सकलत्रस्तत्रत्य आगन्तुको वा, पूर्ववृत्त्यसम्भवात्, क्रीडनको विश्वास्यश्च भवति, वेशे गोष्ठ्यां च विश्वास्यतामुपगम्य परिहासशीलवृत्त्या वर्तत इत्यर्थः, स च वेश्यां नागरकं वा क्व चित् प्रमाद्यन्तं लब्धप्रणयत्वादपवदत इति विदूषक, क्रीडनकत्वाच्च वेशे गोष्ठ्यां च त्रिविधेन हासेन चरतीति वैहासिकः, इत्युभयनामा ॥ ४६ ॥

एते वेश्यानां नागरकाणां च मन्त्रिणः सन्धिविग्रहनियुक्ताः॥४७॥

एते नागरकाणां पार्श्ववर्तित्वादुपनागरका मन्त्रिण, सन्धिविग्रहनियुक्ता इति । सामान्यवृत्ते सन्धिविग्रहयोर्ज्ञाने मन्त्रिणः कर्मणि सान्धिविग्रहिकाः, तथा हि-देशकालकार्यापेक्षया सन्धिविग्रहौ प्रधानगुणौ ज्ञानेनावधार्य; तत्कर्मसु प्रवर्तन्त इति ज्ञानकर्मरूपौ सन्धिविग्रहौ ॥४७॥

तैर्भिक्षुक्यः कलाविदग्धा मुण्डा वृषलयो वृद्धगणिकाश्च व्याख्याताः ॥ ४८ ॥

तैरिति । उभयात्मकैः, भिक्षुक्यः=भिक्षुकस्य भार्याः, मुण्डाः=मुण्डगुणयुक्ताः. वृषल्यः=बन्धक्यः, 'कलाविदग्धा' इति सर्वत्र योज्यम्, ता अपि सन्धिविग्रहयोर्ज्ञाने कर्मणि च नियोक्तव्याः, ताश्च सन्धिविग्रहार्थकुट्टनाच्चालनात् कुट्टन्य इत्युच्यन्ते ॥ ४८ ॥

यात्रावशाद्ग्रामवासिनो वृत्तमाह—

ग्रामवासी च सजातान्विचक्षणान्कौतूहलिकान्प्रोत्साह्य नागरकजनस्य वृत्तं वर्णयञ्छ्रद्धां च जनयंस्तदेवानुकुर्वीत, गोष्ठीश्च प्रवर्तयेत्, सङ्गत्या जनमनुरञ्जयेत्, कर्मसु च साहाय्येन चानुगृह्णीयाद्, उपकारयेच्चेति नागरकवृत्तम् ॥ ४९ ॥

ग्रामवासी चेति । सजातान्=समानजातीयान्, तत्रापि विचक्षणान्=प्राज्ञान्, कौतूहलिकान्=कौतुकवतः, प्रोत्साह्य कथमित्याह—वृत्तं वर्णयन्नगर इत्थं गोत्रपुत्राणां लोकमनोहारि चेष्टितं श्रूयते, भवतामपि युक्तं वैचक्षण्यानुरूपं जीवितफलं तदनुकर्तुमिति श्रद्धां च जनयन्; यात्रामपि तद्दर्शनेन गोष्ठीश्च प्रवर्तयेत्, तैः सह सङ्गत्या जनमनुरञ्जयेत्, सङ्गतिमैत्रीभ्यामित्यर्थः, साहाय्येनानुगृह्णीयात, यात्रोत्सवादिषु प्रवर्तमानमुपचारयँश्च परस्परमुपचरेत् ॥ ४९ ॥

तत्र चैषां काव्यसमस्याः कलासमस्याश्चेत्युक्तम, तत्रविशेषमाह—

भवन्ति चात्र श्लोकाः—

नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया ।

कथां गोष्ठीषु कथयँल्लोके बहुमतो भवेत् ॥ ५० ॥

नात्यन्तमिति । कश्चिदेव संस्कृतं वेत्ति देशभाषां च, कथां काव्यकलाविषयां चर्चाम् ॥ ५० ॥

या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी ।
परहिंसाऽऽत्मिका या च न तामवतरेद् बुधः ॥ ५१ ॥

या गोष्ठीति । यदा स्वयं गोष्ठीं न प्रवर्तयेत्तदाऽन्यप्रवर्तितां यायात्, तत्रापि या लोकविद्विष्टा=लोकस्यासंमता स्वैरविसर्पिणी=स्वातन्त्र्येण प्रवृत्ता निरङ्कुशेत्यर्थः परहिंसाऽऽत्मिका=परदूषणपरा, न तत्रावतरेद् बुधः, तत्र ह्यवतरणमबुधस्य दृश्यते ॥ ५१ ॥

लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यया ।
गोष्ठ्या सह चरन्विद्वाँल्लोके सिद्धिं नियच्छति ॥ ५२ ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकरणे नागरकवृत्तं चतुर्थोऽध्यायः ।

कया सह विचरेदित्याह—लोकचित्तेति । लोकचित्तानुरञ्जनं क्रीडा च फलं गोष्ठ्याः, सिद्धिं नियच्छति प्राप्नोति, लोकसिद्धो भवति, किं पुनः स्त्रीष्वित्यर्थः, स्वयं गोष्ठीप्रवर्तनेऽप्ययमेव विधिः ॥ ५२ ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां साधारणे प्रथमेऽधिकरणे नागरकवृत्तं चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।

गार्हस्थ्यमधिगम्येति ससहायस्योपक्रमा इति दूतानां संप्रेषणमित्युक्तम्, तत्र को नायकः? कया नायिकया गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्तेत? कैश्च सहायैः? किं च दूतस्य कर्मेति? तेषां विमर्शो निरूपणमिति नायकसहायदूतकर्मविमर्श उच्यते. नायक इति 'पुमान्स्त्रिया' ।१।२।६८। इत्येकशेषनिर्देशान्नायकयोरित्यर्थः, दूतकर्मेति । दूत्या दूतस्य चेत्यर्थः, तत्र बहु वक्तव्यत्वात्प्राङ् नायिका फलतोऽन्यकारणतश्च विमृश्यते—

कामश्चतुर्षु वर्णेषु सवर्णतः शास्त्रतश्चानन्यपूर्वायां प्रयुज्यमानः पुत्रीयो यशस्यो लौकिकश्च भवति ॥ १ ॥

कामश्चतुर्ष्विति । सवर्णत इति । यथा ब्राह्मणेन ब्राह्मण्याम्, यथा च शूद्रेण शूद्रायाम्, शास्त्रत इति । शास्त्रोक्तेन वरणादिना विवाहविधानेन, अनन्यपूर्वायां=भार्यात्वेनाधिगतायाम्, प्रयुज्यमानः=प्रवर्त्यमानः, पुत्री-

यः=औरसस्य पुत्रस्य निमित्तम् , 'पुत्राच्छ च' ।५।१।४०। इति छप्रत्ययः, यथोक्तम्—

'स्वक्षेत्रे संस्कृतायां तु सुतमुत्पादयेद् द्विजः ।
तमौरसं विजानीयात् पुत्रं प्राथमकल्पिकम्' ॥ इति ॥

तत्र स्वक्षेत्रं सवर्णः, यशस्यः=यशोनिमित्तम्, गोद्यचः-'।५।१।३९। इत्यादिना यत्, अत्र च यद्यपि कामो न संयोगस्तथाऽपि स्त्रीपुंसयोर्योगे कामशब्द उपचरितः, तत्पूर्वकत्वात्कामस्येति भवति तत्पर्यायः, लौकिकश्च लोके विदितः, तदबाह्य इत्यर्थः ॥ १ ॥

तद्विपरीत उत्तमवर्णासु परपरिगृहीतासु च प्रतिषिद्धः ॥२॥

उत्तमवर्णास्विति । क्षत्रियेण ब्राह्मण्याम् , वैश्येन ब्राह्मणीक्षत्रिययोः, शूद्रेण ब्राह्मणीक्षत्रियावैश्यास्वनन्यपूर्वास्वपि प्रयुज्यमानः परपरिगृहीतासु चान्योढासु सवर्णास्वपि कामो विपरीतः, न पुत्रीयः, न यशस्यः, न लौकिकश्च, एवंविधः प्रतिषिद्धः सुखार्थोऽपि न परपरिगृहीतासु, एकान्तेन धर्मविरोधित्वात् ॥ २ ॥

अवरवर्णास्वनिरवसितासु वेश्यासु पुनर्भूषु च न शिष्टो न प्रतिषिद्धः सुखार्थत्वात् ॥ ३ ॥

अवरवर्णास्विति । ब्राह्मणस्यावरवर्णाः क्षत्रियावैश्याशूद्राः, क्षत्रियस्य वैश्याशूद्रे, वैश्यस्य शूद्रा, शूद्र एकजातिः, तस्य स्वजात्यपेक्षयाऽवरवर्णाः; तत्रापि यद्यनिरवसिताः पात्रादबहिष्कृता इत्यर्थः, सन्त्येव हि काश्चित्क्षत्रियादयो याभिर्भुक्तं पात्रं न संस्कारमात्रेण शुद्ध्यति ता एवंविधा बाह्याः, तथा चोक्तम्—

'शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः' ॥ इति ।

तासु च बाह्यास्वपि, पुनर्भूष्विति । या अन्यपूर्वाः क्षतयोनयो विधवा इन्द्रियदौर्बल्यादन्यस्य पुनर्भवन्ति तासु स्त्रीकृतासु, वेश्यासु च सामान्यस्त्रीषु प्रयुज्यमानो न शिष्टो न विहितः, तत्र सवर्णामपरिगृह्य; तत्परिग्रहस्यानभिहितत्वात् , परिगृह्यापि न प्रतिषिद्धः, सुखार्थत्वात् , तदानीं सुखार्थैव प्रवृत्तिः; न पुत्रार्था, तत्रावरवर्णासूढासु ये पुत्रा न तेषामौरसत्वम् , पुत्रकार्याकरणात् , पुनर्भूषु वेश्यासु च पुत्राऽैव नास्तीति द्विविधं फलम् ॥ ३ ॥

तत्र नायिकास्तिस्रः कन्या पुनर्भूर्वेश्या च ॥ ४ ॥

तत्र=तस्मिन् फलविभागे; तिस्रो नायिकाः—कन्या, पुनर्भूः, वेश्या चेति । तत्र कन्या द्विविधा—पुत्रफला, सुखफला चेति, पूर्वा सवर्णा

श्रेष्ठा, द्वितीयाऽधमवर्णा न्यूना, तस्या अपि न्यूना पुनर्भूः, स्वीकारेऽप्यन्यपूर्वत्वात्, अस्या वृत्तं भार्याऽधिकारिके वक्ष्यति, या त्वक्षतयोनिः पुनरुह्यते सा कन्या एव, यथोक्तम्—

'पुनरक्षतयोनित्वादुह्यते या यथाविधि ।
सा पुनर्भूस्सुतस्तस्यां पौनर्भव उदाहृतः' ।

ततोऽपि वेश्या न्यूना सामान्यत्वात् ॥ ४ ॥

अन्यस्मात्कारणाद्विमर्शमाह—

अन्यकारणवशात्परपरिगृहीताऽपि पाक्षिकी चतुर्थीति गोणिकापुत्रः ॥ ५ ॥

अन्यकारणवशादिति । पुत्रात्सुखाच्च यदन्यत्कारणं तद्वशात्, पाक्षिकीति । यदा कारणान्तरं तदा तस्मिन्पक्षे भवतीति पाक्षिकी, अन्यदा तु नैवेति बाभ्रव्यमतमनुसृत्याह—गोणिकापुत्रोऽपि पारदारिकं पृथक् कामसूत्रं प्रोवाचेत्युक्तम् ॥ ५ ॥

तत्र विषयशुद्ध्यर्थमाह—

स यदा मन्यते स्वैरिणीयमन्यतोऽपि बहुशो व्यवसितचारित्रा तस्यां वेश्यायामिव गमनमुत्तमवर्णिन्यामपि न धर्मपीडां करिष्यति ॥ ६ ॥

स इति । नायकः, मन्यतेऽधिगच्छेत्स्वैरिणीयम्, स्वैरिणी=स्वतन्त्रा, तदेव दर्शयति—अन्यतोऽपीति । यथा मामभियुञ्जाना शीलं खण्डयति, तथाऽन्येष्वपि बहून् वारान्, व्यवसितचारित्रा=खण्डितशीला, ततश्च वेश्यातुल्या, वेश्यायामिव, 'पुनर्भ्वामिव' इत्यनाम्नायः पाठः, यत एकस्माद् द्वितीयं प्राप्ता पुनर्भूः, सा च न बहुशः खण्डितचारित्रेति न समानो दृष्टान्तः, उत्तमवर्णिन्यामिति । किमसवर्णाधमवर्णयोरेवं वर्ण्यते ? तत्रापि न दोषः, यथोक्तम्—

'जीवकार्मुकवस्त्रादीन् दद्यादात्मविशुद्धये ।
चतुर्णामपि वर्णानां नारीर्हत्वाऽव्यवस्थिताः ॥' इति ।

अस्यार्थः—ब्राह्मणीं स्वच्छन्दवृत्तिं हत्वा जीवश्चर्मपुटं ब्राह्मणाय दद्यात्, क्षत्रियां कार्मुकम्, वैश्यां वस्त्रम्, शूद्रामविमिति, यत्र हिंसाऽपि परिफल्गुदोषा तत्राभिगमनं न कस्यापि धर्मोपघाति स्यादित्याह—गमनमपि कारणवशात् क्रियमाणं न धर्मपीडां करिष्यति, अधर्मस्याभावात् ॥ ६ ॥

पुनर्भूरियं कथमित्याह—

पुनर्भूरियमन्यपूर्वाऽवरुद्धा नात्र शङ्काऽस्ति ॥ ७ ॥

अन्यः पूर्वो यस्याः सेयं क्षतयोनिरन्येनावरुद्धा सङ्गृहीता नात्र शङ्काऽस्ति, गमनेनाधर्मः स्यादिति, अनुत्तमवर्णिनीत्वात्, तत्र यद्यपि धर्मस्य पीडा नास्ति; आशङ्का च,तथाऽपि सुखं निमित्तीकृत्य; न प्रवर्तते, निषिद्धत्वात्, किन्तु वक्ष्यमाणमेव कारणं, तेन विषयविशुद्ध्यर्थमिदमादावुक्तम्, यथोक्तम्—

'विशुद्धिं विषयस्यादौ कारणानि च तत्त्वतः ।
प्रसमीक्ष्य प्रवर्तेत परस्त्रीषु न भावतः ॥' इति ॥ ७ ॥

कारणान्याह —

पतिं वा महान्तमीश्वरमस्मदमित्रसंसृष्टामियमवगृह्य; प्रभुत्वेन चरति, सा मया संसृष्टा स्नेहादेनं व्यावर्तयिष्यति ॥ ८ ॥

पतिं वा महान्तमिति । अस्मदमित्रेण जातसख्यं पतिं, तस्य शत्रोर्महत्त्वादैश्वर्याच्चापकारसमर्थम्, इयमिति । स्वैरिणी=पुनर्भूः, अवगृह्य; प्रभुत्वेन चरति=अवष्टभ्य स्वामिनं व्यवहरति,सा मया संसृष्टा; स्नेहात्संयोगात्प्रवृद्धस्नेहात्तस्मादेनं व्यावर्तयिष्यति, अस्मदमित्रादपकर्तुकामात् पतिं प्रभवन्ती निवर्तयिष्यति, ततश्च विशिष्टभावो मे भविष्यति; अन्यथा महान्तमीश्वरमाश्रितो मामेवाकृतपुरुषार्थं हनिष्यति ॥ ८ ॥

विरसं वा मयि शक्तमपकर्तुकामं च प्रकृतिमापादयिष्यति ॥९॥

विरसं वेति । कार्यवशान्मयि विरक्तं पतिं शक्तमप्रतिविधेयम्, अपकर्तुकामं "कदाऽहमस्यापकरिष्यामि"इति बद्धानुशयं, प्रकृतिमापादयिष्यति, प्रभवन्ती मया संसृष्टा पूर्वावस्थं स्वभावं नेष्यति ॥ ९ ॥

तया वा मित्रीकृतेन मित्रकार्यममित्रप्रतीघातमन्यद्वा दुष्प्रतिपादकं कार्यं साधयिष्यामि ॥ १० ॥

तया वेति । प्रभवन्त्या मया संसृष्टया मित्त्रीकृतेन तस्याः पत्या मित्त्रकार्यं तत्साध्यम्, मित्त्रकार्ये हि प्राणानपि त्यजेन्नरकमपि विशेद्, अमित्रप्रतीघातं स्वशरीरत्राणार्थम्, अन्यद्वा स्वकीयं दुष्प्रतिपादकं दुःसाधकं साधयिष्यामि ॥ १० ॥

संसृष्टो वाऽनया हत्वाऽस्याः पतिमस्मद्भाव्यं तदैश्वर्यमेवमधिगमिष्यामि ॥ ११ ॥

संसृष्टो वाऽनयेति । संप्रयोगादाहितस्नेहया कृतसंवित्को हत्वाऽस्याः पतिं द्विषन्तं तूष्णीं दण्डेनास्मद्भाव्यमैश्वर्यमपि तदा भाव्यम्, केवलमस्मत्कुलं हत्वाऽपि मत्तोऽपि वा हठादाच्छिद्यानेन प्रसह्य भुज्यते तत्प्राप्स्यामि, ततोऽस्याततायित्वाद्व्यापादनमपि नाधर्माय ॥ ११ ॥

निरत्ययं वाऽस्या गमनमर्थानुबद्धम्, अहं च निःसारत्वात्क्षीणवृत्त्युपायः सोऽहमनेनोपायेन तद्धनमतिमहदकृच्छ्रादधिगमिष्यामि ॥ १२ ॥

निरत्ययं रक्षाऽद्यभावान्निर्दोषम्, अन्यत्राप्येतद् द्रव्यम्, अर्थानुबद्धम्, आढ्यत्वादस्याः, अहं च निःसारत्वान्निर्द्रव्यत्वात्, क्षीणवृत्त्युपाय इति। वृत्तिर्जीविका तदुपायः कृत्यादिः स क्षीणो यस्येति, सोऽहं कुटुम्बभरणासमर्थोऽनेनोपायेनाभिगमनलक्षणेन तद्धनमतिमहद् धर्मादिसाधनमधिगमिष्यामि, स्वल्पाधिगमे तु नाधिगच्छेदिति मन्यते, अकृच्छ्रादिति। तया स्नेहाद्दीयमानम् अन्यथा दृष्टादृष्टदोषसाधनं स्यात्, तस्मात्कुटुम्बकार्थमकार्यमपि कार्यं स्यात्, तथा चोक्तम्—

'माता वृद्धा पिता चैव साध्वी भार्या सुतः शिशुः।
अप्यकार्यं शतं कृत्वा भर्तव्या मनुरब्रवीत्' ॥ १२ ॥

मर्मज्ञा वा मयि दृढमभिकामा सा मामनिच्छन्तं दोषविख्यापनेन दूषयिष्यति ॥ १३ ॥

मयि दृढमभिकामेति। आभिमुख्येन कामयत इत्यभिकामा, दृढं मयि जातरागेत्यर्थः, मामनिच्छन्त स्वतोऽन्यस्माद्वा दोषाद् दोषविषयख्यापनेन मर्मज्ञत्वाल्लोके दूषयिष्यति 'राज्यकामुकोऽयमि' ति येन मे विनाशः स्याद्, 'राजाऽपथ्यकारी' इति ॥ १३ ॥

असद्भूतं वा दोषं श्रद्धेयं दुष्परिहरं मयि क्षेप्स्यति, येन मे विनाशः स्यात् ॥ १४ ॥

असद्भूतं वेति। मया संप्रयुयुक्षुरयमिति मिथ्यैव दोषमुत्थाप्य; श्रद्धेयं कृतकमदनलेखेन जातप्रत्ययम्, एवं च दुष्परिहरं मयि क्षेप्स्यति समारोपयिष्यति, येन मे विनाशः स्यात् पारदारिक इति ॥ १४ ॥

आयतिमन्तं वा वश्यं पतिं मत्तो विभिद्य द्विषतः संग्राहयिष्यति, स्वयं वा तैः सह संसृज्येत ॥ १५ ॥

आयतीति। आयतिमन्तं प्रभावयुक्तं पतिं वश्यं यथोक्तकारिणं, मत्तो विभिद्य मत्तोऽनिच्छतोऽपि मित्त्रीभूतं विश्लेष्य, द्विषतः संग्राहयिष्यत्यस्मच्छत्रून् मैत्त्रीपूर्वं स्वीकारयिष्यति, ततश्च संगृहीतप्रभावा मां हनिष्यति, स्वयं वा तैः सह संसृज्येत समर्थैरस्मदुपघातार्थम् ॥ १५ ॥

मदवरोधानां वा दूषयिता पतिरस्यास्तदस्याहमपि
दारानेव दूषयन् प्रतिकरिष्यामि ॥ १६ ॥

मदवरोधानां वेति । अस्मत्परिगृहीतानां दाराणामभिगमनेन दूषयिता, ततश्चानुरूपप्रत्यपकारेण शत्रोरानृण्यं गन्तव्यम्' इति न्यायादस्यापि दारानेवाभिगमनेन दूषयन्, प्रतिकरिष्यामि=प्रतीकारङ्करिष्यामि ॥१६॥

राजनियोगाच्चान्तर्वर्तिनं शत्रुं वाऽस्य निर्हनिष्यामि ॥ १७ ॥

राजनियोगादिति । राज्ञाऽहमभ्यन्तरप्रचारं निरूपयितुं नियुक्तस्तमुपायान्तराभावादस्य विश्वस्तया संसृज्य निष्कासयिष्यामि, गुरुत्वात्स्वामिकार्यस्य ॥ १७ ॥

यामन्यां कामयिष्ये साऽस्या वशगा तामनेन संक्रमेणाधिगमिष्यामि ॥ १८ ॥

यामन्यामिति । प्रस्तुतनायिकाया अन्यां यां प्रकृष्टकारणवशात्कामयिष्ये, साऽस्या इति । प्रस्तुतनायिकायाः, वशगा=यथोक्तकारिणी, तामप्रस्तुतामुपायान्तराभावादनया संक्रामयमाणया प्राप्स्यामि ॥ १८ ॥

कन्यामलभ्यां वाऽऽत्माधीनामर्थरूपवतीं मयि संक्रामयिष्यति ॥१९॥

कन्यामिति । अलभ्यां मया निर्धनत्वादियोगाद्, आत्माधीनां तदायत्ताम्, अर्थरूपवतीं त्रिवर्गहेतुं मयि संक्रामयिष्यति माम्प्रापयिष्यति, सा वा संप्रयुज्यमानोभयं सङ्घटयतीति तामेव तावदधिगच्छामि, एवं च काञ्चित् सम्प्रयुज्य या स्त्री वस्तु सङ्घटयतीति ॥ १९ ॥

ममामित्रो वाऽस्याः पत्या सहैकीभावमुपगतस्तमनया रसेन योजयिष्यामीत्येवमादिभिः कारणैः परस्त्रियमपि प्रकुर्वीत ॥ २० ॥

ममामित्रो वा प्राणहरोऽस्याः पत्या सहैकीभावमुपगतः सहासनशयनपानभोजनादिभिः, प्राक् 'पतिममित्रसंसृष्टम्' इति संश्लेषमात्रमुक्तम्, तमनया संसृष्टया रसेन कालान्तरप्राणहारिणा विषेण योजयिष्यामि, तदेवमादिकारणं यदा मन्येतेति प्रवर्तते तदा प्रकुर्वीत, प्रपूर्वः करोतिरभिगमे वर्तत इति साहसिक्य आत्मनेपद(१)म् ॥ २० ॥

इति साहसिक्यं न केवलं रागादेवेति परपरिग्रहगमनकारणानि ॥२१॥

साहसिक्यं न रागेण केवलं विषयस्याशुद्धत्वात्प्रकुर्वीत, किं तु कारणैरित्यर्थः ॥ २१ ॥

एतैरेव कारणैर्महामात्रसम्बद्धा राजसम्बद्धा वा तत्रैकदेशचारिणी का चिदन्या वा कार्यसम्पादिनी विधवा पञ्चमीति चारायणः॥२२॥

(१) गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । १ । ३ । ३२ । इत्यनेन ।

एतैरिति। यथोक्तैः, विधवा पञ्चमीति संबन्धः। प्राग्जीवद्भर्तृकेति विशेषः, तत्रापि पत्युरभावात्, महामात्रस्य राज्ञो वा सङ्गाद्वा संबन्धाद्वा संबद्धा प्रतिबद्धा वा, तत्रैकदेशचारिणी तदीयकुटुम्बैकदेशसंबद्धा, अन्या वा का चिदन्यजनसंबद्धा कार्यसंपादिनी यज्जनसंबद्धा तत्कार्येषु व्याप्रियमाणा, आसु तिसृषु विधवा स्वैरिणी पुनर्भूर्वेति विषयं विमृश्य; पतिस्थाने राजानं महामात्रम् अन्यं वा नियोज्य: नायिकाप्रतिबद्धानि कारणानि योजयेत् ॥ २२ ॥

सैव प्रव्रजिता षष्ठीति सुवर्णनाभः ॥ २३ ॥

सैवेति। विधवा प्रव्रजिता राजमहामात्रयोरन्यस्य वा संबद्धा तत्कुलान्युपगच्छन्तीति नायिकाऽनुवृत्त्या गृहधर्मत्वात्तत्रापि पूर्ववत्कारणानि योजयेत् ॥ २३ ॥

गणिकाया दुहिता परिचारिका वाऽनन्यपूर्वा सप्तमीति घोटकमुखः २४

गणिकेति। गणिकाया दुहिता, अनन्यपूर्वा=पुरुषेणासंसृष्टा, परिचारिका वा चन्द्रापीडस्येव पत्त्रलेखा, तत्र पूर्वा वेश्याऽपि कन्या तासां वक्ष्यमाणपाणिग्रहणभेदाद्भिद्यते, द्वितीया कन्याऽप्यगृहीतपाणिर्नायकं परिचरन्तीति विशिष्यते ॥ २४ ॥

उत्क्रान्तबालभावा कुलयुवतिरुपचारान्यत्वादष्टमीति गोनर्दीयः॥२५॥

उत्क्रान्तबालभावा कुलयुवतिरिति। कुलकन्यैवोढा सती कालेनापक्रान्तबालभावा समुपारूढयौवना कुलयुवतिः, उपचारान्यत्वादिति। उपचारभेदात् सा हि न कन्यावदुपचर्यते, कन्यायामुपचारा अपरिस्फुटाविकल्पेन च प्रयुज्यन्ते, प्राप्तयौवनायास्तु परिस्फुटाः समुच्चयेन चेति॥२५॥

कार्यान्तराभावादेतासामपि पूर्वास्वेवोपलक्षणं तस्मादेता एव नायिका इति वात्स्यायनः ॥ २६ ॥

कार्यान्तराभावादिति। कन्याऽऽदिषु चतसृषु यत्कार्यमुक्तं तद्व्यतिरिक्तानां विधवाऽऽदीनां कार्याभावात्पूर्वास्वेवोपलक्षणमुपदर्शनम्, तत्रैव यथासंभवमुपलक्षयेदित्यर्थः, तत्र विधवा प्रव्रजिता वाऽन्यकारणवशात्परपरिग्रहे द्रष्टव्या, गणिकादुहिता परिचारिका च सुखकार्यत्वाद्वेश्यायाम्, कुलयुवतिः पुत्रकलत्रफलत्वात्कन्यायाम्, उपचारभेदात्तद्भेदे नायिकाऽतिसंप्रयोगात्, दृश्यते हि देशकालप्रकृतिसात्म्यभेदादेकस्यामुपचारबहुत्वम् ॥ २६ ॥

भिन्नत्वात्तृतीयाप्रकृतिः पञ्चमीत्येके ॥ २७ ॥

भिन्नेति। तृतीयाप्रकृतिः=नपुंसकः, स्त्रीत्वपुंस्त्वाभावाद्भिद्यते, तत्र

चौपरिग्रहिककर्मणा सुखलाभात्, तेन रूपव्यापारभेदात्पञ्चमीत्येके, अन्यथा सुखकार्यत्वाद्वेश्याविशेष एव ॥ २७ ॥

नायकविमर्शमाह—

एक एव तु सार्वलौकिको नायकः ॥ २८ ॥

एक एवेति । नायिकावद्भेदाभावादेक एव सार्वलौकिको नायकः कन्यापुनर्भूवेश्यासु प्रवर्तमानः सर्वलोकविदितः ॥ २८ ॥

प्रच्छन्नस्तु द्वितीयः विशेषलाभात् ॥ २९ ॥

प्रच्छन्नेति । स एव परपरिगृहीतासु सुखव्यतिरेकेण कार्यविशेषलाभाद् गुप्त्या च प्रवर्तमानः प्रच्छन्नो द्वितीयः ॥ २९ ॥

गुणद्वारेण स त्रिविध इत्याह—

उत्तममध्यमाधमतां तु गुणागुणतो विद्यात् ॥ ३० ॥

गुणागुणत इति । गुणसमुदायादुत्तमः, गुणपादद्वयाभावान्मध्यमः, पादत्रयाभावादधमः, सर्वगुणाभावादनायक इति ॥ ३० ॥

ताँस्तूभयोरपि गुणागुणान् वैशिके वक्ष्यामः ॥ ३१ ॥

उभयोरिति । नायकस्य नायिकायाश्च ॥ ३१ ॥

कन्याऽऽदीनां विशेषानभिधानात्पुनरगम्यतया विमर्शमाह—

अगम्यास्त्वेवैताः, कुष्ठिन्युन्मत्ता पतिता भिन्नरहस्या प्रकाशप्रार्थिनी गतप्राययौवनाऽतिश्वेताऽतिकृष्णा दुर्गन्धा संबन्धिनी सखी प्रव्राजिता संम्बन्धिसखिश्रोत्रियराजदाराश्च ॥ ३२ ॥

नायकस्य तु कन्याऽऽदिविधावगम्यात्वं सूचयति, तुशब्दो विशेषणार्थः, एवकारो नियमार्थः, सत्स्वपि कार्येष्वेता अगम्या इत्यर्थः, कुष्ठिनीति । जुगुप्सितव्याध्युपलक्षणार्थम्, उन्मत्ता यत्किञ्चनकारिणी न सुखावहा, पतिता स्वजात्यपेक्षया महापातकाचरणात् तत्सम्पर्कात्पतितः स्याद्, भिन्नरहस्या लोके रहस्यं प्रकाशयन्ती नायकं लज्जयति, प्रकाशप्रार्थिनी प्रकटं नायकमभिलषन्ती त्रपयत्यनर्थञ्च करोति, गतप्राययौवना तत्सेवायामायुस्तेजश्च हीयते, अतिश्वेता, अतिकृष्णा चाप्रशस्ता, कन्या पुनर्भूश्च ज्ञेया, निन्द्यत्वादन्या अपि यथासंभवं योज्या, दुर्गन्धा गुह्ये वक्त्रे च दुष्टगन्धा, संयोगे वैमुख्यं जनयति, सम्बन्धिनी भ्रातुरपत्यस्य भगिन्या वा सङ्गिनी या परिणयसम्बन्धबाह्येन सम्बद्धा, सखी भार्यावयस्या तदनुरोधात्, प्रव्रजिता क्व चिच्छासने गृहीतव्रता धर्मार्थयोर्वैलोम्यात्, सम्बन्धिसखिश्रोत्रियराजदाराश्चेति, विद्यासंबन्धेन राजसम्बन्धेन वा सम्बद्धाः सम्बन्धिनस्तेषां दाराः, आ-

चार्याणां शिष्यभार्य्या भ्रातृभार्या, इत्यादयोऽपि धर्मवैलोम्यात्, सखिदारा मित्त्रभार्या, अधर्मद्रोहादिभयात्, तथा चोक्तम्—

'रेतःसेकः स्वयोनिषु कुमारीष्वन्त्यजासु च ।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः' ॥

श्रोत्रियदारा ज्वलदग्निप्रख्याः, धर्मवैलोम्याद्, राजदाराश्च चतुराश्रमगुरुभार्याः, दृष्टादृष्टविरोधात्, इत्येतदाचार्याणां मतमनुक्तमपि ज्ञेयम्, अत्र च यथोक्तव्यतिरेकेण परपरिगृहीताः सर्वा एवागम्याः स्युरिति॥ ३२॥

बाभ्रव्यमतमाह—

दृष्टपञ्चपुरुषा नागम्या का चिदस्तीति बाभ्रवीयाः ॥ ३३ ॥

स्वपतिव्यतिरेकेण दृष्टाः पञ्च पुरुषाः पतित्वेन यया सा स्वैरिणी कारणवशात्सर्वैरेव गम्या, तथा च पञ्चातीता बन्धकीति पराशरः, एकद्व्यादिदर्शने तु सत्स्वपि कारणेषु नैवेत्यर्थोक्तम्, द्रौपदी तु युधिष्ठिरादीनां स्वपतित्वादन्येषामगम्या, कथमेका सत्यनेकपतिरिति चैतिहासिकाः प्रष्टव्याः, बाभ्रवीया इति । बाभ्रव्यशिष्याः, बाभ्रव्यमतानुसारिण एवमाहुः ॥ ३३ ॥

तत्रापि गोणिकापुत्रो विशिष्य; वक्तव्यमित्याह—

संबन्धिसखिश्रोत्रियराजदारवर्जमिति गोणिकापुत्रः ॥ ३४ ॥

दृष्टपञ्चपुरुषा नागम्येति वर्तते, अयमभिप्रायः-सम्बन्धिभार्या स्वैरिण्यपि विद्यायोनिसम्बन्धेनान्तरेण सम्बन्धेन सम्बद्धत्वादगम्या, सम्बन्धिनी तु बाह्येनेति गम्यैव, सखिभार्याऽप्यन्यस्य गम्या, न नायकस्य, सखी त्वस्य भार्यावयस्या स्वतो मैत्रीव्यवहारस्याप्रस्तुतत्वाद् गम्यैव, श्रोत्रियस्य क्रियावत्त्वाद् दाराः खण्डितशीला अपि दृष्टादृष्टविरोधादगम्याः ॥ ३४ ॥

सहायविमर्शस्त्रिधा—स्नेहतो गुणतो जातितश्च । तत्राद्यमधिकृत्याह—

सहपांसुक्रीडितमुपकारसम्बद्धं समानशीलव्यसनं सहाध्यायिनं यश्चास्य मर्माणि रहस्यानि च विद्याद् यस्य चायं विद्याद्वा धात्रपत्यं सहसंवृद्धं मित्रम् ॥ ३५ ॥

मिद्यति स्निह्यतीति मित्त्रं नवप्रकारम्, तत्र सहपांसुक्रीडितमेकत्रानुभूतबाल्यत्वात्स्निह्यति, उपकारसम्बद्धमर्थेन जीवितरक्षया चोपकृतत्वान्मैत्र्या वर्तते, समानशीलव्यसनं,समानं शीलं व्यसनञ्च दैवमानुषं यस्य तत्तुल्यगुणदोषत्वात् सख्यमाधत्ते, सहाध्यायी एकत्र कृताध्ययनत्वान्मैत्रीमनुवर्तते, यश्चास्य नायकस्य मर्माण्यकार्याणि यश्च रहसि

भवानि विद्यात्तदुभयं मर्मज्ञं रहस्यधरं च नायकप्रतीतेरास्पदत्वात्प्रतिस्निह्यति, यस्य चेति । यस्य नायको मर्माणि रहस्यानि च विद्यात्तदुभयं तत्सम्मानितस्नेहत्वात्प्रीत्या वर्तते, सहसंवृद्धं धात्रीक्रोडे नायकेन सह स्तन्यपानादिना सम्वृद्धं, धात्रपत्यं सहपांसुक्रीडितत्वेऽप्यत्यर्थं स्निह्यतीति प्रकर्षार्थं वचनम्, यदेकस्मिन्ग्रामे वा सह सम्वृद्धं तत्सहपांसुक्रीडितं द्रष्टव्यम्, इति नवधा मित्त्रम् ॥ ३५ ॥

गुणतो विमर्शमाह—

पितृपैतामहमविसंवादकमदृष्टवैकृतं वश्यं ध्रुवमलोभशीलमपरिहार्यममन्त्रविस्रावीति मित्रसंपत् ॥ ३६ ॥

पितृपैतामहम्, पितामहादागतं पैतामहं पितुः पैतामहम्, नायकस्य तु प्रपितामहम्, यथाऽनयोर्मैत्री तथा पित्रोः पितामहयोश्चासीदिति, अविसंवादकं, यथादृष्टश्रुताधिकारिणम्, अदृष्टवैकृतं तदात्मककार्यस्यादिमध्यावसानेष्वदृष्टव्यभिचारं, वश्यं=यथोक्तकारिणं, ध्रुवं न त्यजति, अलोभशीलं न तृष्णया प्रवर्तते, अपरिहार्यं, न परेण ह्रियते; अनुरक्तत्वाद्, अमन्त्रविस्रावि, गूढमन्त्रम्, इति मित्त्रसंपत् ॥ ३६ ॥

मित्त्रसंबन्धाद् मित्त्रगुणा धर्मिद्वारेणोक्ता जातितो विमृश्यन्ते—

रजकनापितमालाकारगान्धिकसौरिकभिक्षुकगोपालकताम्बूलिकसौवर्णिकपीठमर्दविटविदूषकादयो मित्राणि ॥ ३७ ॥

रजकादयो नायकं स्वकर्मभिरुपकुर्वन्तः परभवनं च विशन्ति, तत्र गान्धिको गन्धद्रव्यस्य विक्रेता, गन्धः पण्यमस्येति, तथा सौरिकः= शौण्डिकः, भिक्षुकः=भिक्षणशीलः, पश्चात्कुत्सायां कः ॥ ३७ ॥

तद्योषिन्मित्राश्च नागरकाः स्युरिति वात्स्यायनः ॥ ३८ ॥

तद्योषिन्मित्त्राश्चेति । न तथा पुरुषा यथा योषितः परभवनं विशन्ति विश्वासयन्ति च स्त्रियः ॥ ३८ ॥

दूतस्य यत्कर्म तत्कुर्यादित्याधारतो विमृश्यते—

यदुभयोः साधारणमुभयत्रोदारं विशेषतो नायिकायाः सुविस्रब्धं तत्र दूतकर्म ॥ ३९ ॥

यदिति । मित्त्रम्, उभयोरिति । नायकस्य नायिकायाश्च, मैत्र्या वर्तमानत्वात्साधारणं यथोक्तमभिधत्ते, उभयत्रोदारम् आप्तभूतद्कार्यकारित्वात्, विशेषत इति। नायिकाया विशेषतः सुष्ठु, विस्रब्धं=विश्वस्तम्, तस्याः साध्यमानत्वात्, तत्र=मित्त्रे, दूतकर्म=दूतक्रिया, सिद्धिहेतुत्वाद्, नान्यत्रेति ॥ ३९ ॥

तत्रापि यदि दूतस्य गुणाः स्युरतो गुणतो विमृश्यते—

पटुता धाष्टर्यमिङ्गिताकारज्ञताऽनाकुलत्वं परमर्मज्ञता प्रमाणता प्रतारणं देशज्ञानं कालज्ञता विषह्यबुद्धित्वं लघ्वी प्रतिपत्तिः सोपाया दूतगुणाः ॥ ४० ॥

पटुता प्रज्ञाऽनुबद्धया वाचा वक्तुं कुशलता, धाष्टर्यं प्रागल्भ्यमिति, इङ्गितमन्यथा वृत्तिः; आकारो वदननयनादिगतविकारः; तज्ज्ञतया तदनुरूपमनुतिष्ठति, कालज्ञता; कालेऽस्मिन्प्रोत्साहयितुं शक्यत इति, विषह्या विमर्शक्षमा बुद्धिर्यस्येति विगृह्य भावप्रत्ययेन योज्यः, लघ्वी प्रतिपत्तिः सोपाया चेति दूतगुणा इति, कार्यं विमृश्य तदेवोपायपूर्वकमनुष्ठानं न कार्यातिपातनम् ॥ ४० ॥

इदानीमधिकरणार्थानुष्ठाने फलं प्रयोजनं चाह—

भवति चात्र श्लोकः—

आत्मवान्मित्रवान्युक्तो भावज्ञो देशकालवित् ।
अलभ्यामप्ययत्नेन स्त्रियं संसाधयेन्नरः ॥ ४१ ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकरणे
नायकसहायदूतकर्मविमर्शः पञ्चमोऽध्यायः ।

आत्मवानिति । तत्र त्रिवर्गप्रतिपत्त्या विद्यासमुद्देशेन चात्मन्याहितगुणत्वादात्मवान्, सहायविमर्शेन मित्रवान्, युक्त इति । नागरकवृत्तानुष्ठानेन युक्तः स्वकर्मनिष्ठः, भावज्ञो नायकस्य नायिकायाश्च विमर्शेन तत्स्वरूपज्ञ इत्यर्थः, दूतकर्मचित्तपरिमर्शनेनेति फलम्, अलभ्यामप्ययत्नेन स्त्रियं विपरिमर्शितां साधयत इति फलप्रयोजनम्, एवंभूतस्य हि स्त्रीसाधनयोग्यत्वात् ॥ ४१ ॥

इति नायकसहायदूतकर्मविमर्शः पञ्चमं प्रकरणम्, पञ्चमश्चाध्यायः ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां-
साधारणे प्रथमेऽधिकरणे नायकसहायदूतकर्मविमर्शः पञ्चमोऽध्यायः ।

समाप्तं चेदं साधारणं प्रथममधिकरणम् ।

# सांप्रयोगिकं द्वितीयमधिकरणम् ।

## प्रथमोऽध्यायः ।

स्त्रियं साधयत इत्युक्तं, स्त्रीसाधनं चावापः स चाविज्ञातशास्त्रस्य न युज्यत इत्यावापात्प्राक्तन्त्रं सांप्रयोगिकमुच्यते, तत्रापि संप्रयोगे प्रथमं रतं, तस्मिन्प्रमाणादिभिर्ज्ञातस्वरूपे यथायथमालिङ्गनादयः प्रयुज्यमानाः त्यर्था इति प्रमाणकालभावेभ्यो रतावस्थापनमुच्यते, हेतौ पञ्चमी, प्रमाणादिना तस्य व्यवस्थापनमित्यर्थः, तत्र लिङ्गसंयोगाद्भावकालाविति ताभ्यामपि प्राक्प्रमाणतस्तावद्रतावस्थापनमाह—

शशो वृषोऽश्व इति लिङ्गतो नायकविशेषाः ॥ १ ॥

लिङ्गत इति । लिङ्ग्यन्ते स्त्रीत्वादयोऽनेनेति लिङ्गम्, लोकप्रतीत्या लिङ्गं मेहनमुच्यते, तत्र पौंस्नमुन्नतं स्त्रीणां निम्नं, प्रमाणं च शास्त्रव्यवहारयोः, अल्पात्पौंस्नाच्छश इव शशः, तथा समाद्वृषः, महतोऽश्वः, इति नायकभेदाः ॥ १ ॥

नायिका पुनर्मृगी वडवा हस्तिनी चेति ॥ २ ॥

नायिका पुनरिति । पुनःशब्दो विशेषणार्थः, लिङ्गस्य भिन्नत्वात्संज्ञाभेदः प्रयुज्यत इति पूर्वाचार्यैर्मृग्यादिभिरुपमिताः, न शशादिभिः, तथा चाहुर्लक्षणम्—

'षण्नव द्वादशेत्येवमायामेन यथाक्रमम् ।
शशादिभेदभिन्नानां त्रिधा साधनसंस्थितिः ॥
परिणाहेन तुल्या स्यादायामस्य प्रमाणतः ।
नियता नेति, केचित्तु परिणाहे प्रचक्षते ॥
स्त्रीणां साधनमार्गोऽपि तद्वदेव प्रभिद्यते ।
आयामपरिणाहाभ्यां मृग्यादीनां शशादिवत् ॥ इति ॥ २ ॥

तत्र सदृशसंप्रयोगे समरतानि त्रीणि ॥ ३ ॥

तत्रेति । नायकस्य नायिकायाश्च भेदे, सदृशो विसदृशो वा संप्रयोगः स्यादित्याह—सदृशसंप्रयोग इति । शशस्य मृग्या, वृषस्य वडवया, अश्वस्य हस्तिन्या सह सदृशः सम्प्रयोगो रन्ध्रेन्द्रियसमाप्तिलक्षणः, अल्पत्वादिभिर्लिङ्गसादृश्यात्, तस्मिन्सति त्रीणि समरतानि. रन्ध्रसाधनयोराश्रयाश्रयिभावेन यन्त्रसाम्यात् ॥ ३ ॥

विपर्ययेण विषमाणि षट् ॥ ४ ॥

शशस्य वडवया हस्तिन्या च, वृषस्य मृग्या हस्तिन्या च, अश्वस्य मृग्या वडवया चेति विसदृशः संप्रयोगः, लिङ्गवैषम्यात्, तस्मिन्सति षड् विषमाणि रतानि यन्त्रवैषम्यात् ॥ ४ ॥

विषमेष्वपि रतेषु व्यवहारार्थं विशेषसंज्ञामाह—

विषमेष्वपि पुरुषाधिक्यं चेदनन्तरसंप्रयोगे द्वे उच्चरते ॥ ५ ॥

पुरुषाधिक्यं चेदिति । यदा लिङ्गतः पुरुषाधिक्यं स्त्रिया न्यूनत्वं तदाऽनन्तरो व्यवहितो वा संप्रयोगः स्यात्, तत्राश्वस्य वडवया वृषस्य मृग्येति वैलोम्येऽनन्तरसंप्रयोगः, तस्मिन् समरताद् द्वे उच्चरते, साधनस्योच्चतया रन्ध्रमवपीड्य व्याप्रियमाणत्वात् ॥ ५ ॥

व्यवहितमेकमुच्चतररतम् ॥ ६ ॥

व्यवहितमिति । अश्वस्य मृग्या सह व्यवहितसंप्रयोगः, वडवया व्यवधानात्, तस्मिन्सति उच्चरतादुच्चतररतम्, साधनस्यात्युच्चतया निष्पीडितेन कथं चिद्व्यापारात् ॥ ६ ॥

विपर्यये पुनर्द्वे नीचरते ॥ ७ ॥

विपर्यये द्वे, पुनरिति, पुनःशब्दो विशेषणार्थः, स्त्रिया आधिक्ये त्वनन्तरसंप्रयोगे शशस्य वडवया, वृषस्य हस्तिन्येत्यानुलोम्येन समरताद् द्वे नीचरते, साधनस्य निकृष्टतया रन्ध्रं सम्यगनवपूर्य व्यवहारात् ॥ ७ ॥

व्यवहितमेकं नीचतररतं च ॥ ८ ॥

व्यवहिते वडवयाऽन्तरिते संप्रयोगे शशस्य हस्तिन्या सहेति नीचरतान्नीचतररतम्, तत्रानवपूर्यैव व्यवहारात् ॥ ८ ॥

एषामुत्तमादीन्याह—

तेषु समानि श्रेष्ठानि ॥ ९ ॥

तेष्विति । नवसु रतेषु षड्भ्यो विषमरतेभ्यः समानि श्रेष्ठानि प्रशस्तानि, तत्र यन्त्रसाम्यादुभयोः परस्परसुखातिशयात् ॥ ९ ॥

तरशब्दाङ्किते द्वे कनिष्ठे ॥ १० ॥

तरशब्दाङ्किते कनिष्ठे, उच्चतरनीचतरशब्दाङ्किते अधमे, अत्र यन्त्रस्यातिपीडनादतिशैथिल्याच्च स्पर्शसुखस्याभावात् ॥ १० ॥

शेषाणि मध्यमानि ॥ ११ ॥

शेषाणि चत्वारि, उच्चरते द्वे नीचरते द्वे मध्यमानि, श्रेष्ठकनिष्ठत्वाभावात्, तत्र ह्यनतिपीडनादनतिशैथिल्याच्च स्पर्शसुखस्य समत्वात् ॥ ११ ॥

तत्रापि मध्यमानां विशेषमाह—

साम्येऽप्युच्चाङ्कं नीचाङ्काज्ज्याय इति प्रमाणतो नव रतानि ॥१२॥

ज्येष्ठकनिष्ठत्वाभावाद्रतस्य साम्येऽपि माध्यस्थ्येऽपीत्यर्थः, उच्चाङ्कं नीचाङ्काज्ज्याय इति । उच्चरते हि योषित उत्फुल्लकादिना प्रसार्य जघनं संविष्टायाः साधनाधिक्यात्कण्डूतिप्रतीकाराधिकलाभः, नीचरते तु सम्पुटकादिनाऽवह्रासितजघनाया अपि न तत्प्रतीकारोऽस्ति । यथोक्तम्—

तन्वल्पसाधनः कामी चिरकृत्योऽपि वा नरः ।
कण्डूतेरप्रतीकारान्नातिस्त्रीप्रिय उच्यते' ॥ इति ॥ १२ ॥

भावतो रतावस्थापनमाह—

यस्य संप्रयोगकाले प्रीतिरुदासीना वीर्यमल्पं क्षतानि च न सहते स मन्दवेगः ॥ १३ ॥

भावतो हि कालस्य पश्चाद्भावित्वात्फलरूपाभावात्तस्यापरिच्छेदात् , तथा हि—हेतुफलभेदादत्र द्विविधो भावः, तत्र कामिताऽऽख्यो हेतुः, तस्मिन्सति सम्प्रयोगाद् रतान्ते च भावः फलम् , तस्मादुभयरूपाद्रतमवस्थाप्यते, स च मृदुमध्यमातिमात्रभेदात्त्रिविधः, तत्र यस्य सम्प्रयोगेच्छा मनाग्भवति रतिर्वा, वीर्यमल्पं सम्प्रयोगे मन्दो व्यापारः शुक्रधातुर्वा स्तोकः, क्षतानि च नायिकया दन्तनखैः प्रयुज्यमानानि, उपलक्षणत्वात्प्रहरणं च न सहते य इत्यर्थाद्विभक्तिविपरिणामः स मृदुभावत्वान्मन्दवेगो मृदुराग इत्यर्थः ॥ १३ ॥

तद्विपर्यये मध्यमचण्डवेगौ भवतः ॥ १४ ॥

तद्विपर्यय इति । यथोक्तस्य विपर्यये; यस्य सम्प्रयोगे प्रीतिर्मध्या वीर्यं मध्यं क्षतानि च यः सहते स मध्यभावत्वान्मध्यवेग इत्येको विपर्ययः, सम्प्रयोगे प्रीतिरधिका वीर्यं महत् क्षतानि चात्यर्थं सहते सोऽधिकभावत्वाच्चण्डवेग इति द्वितीयो विपर्ययः ॥ १४ ॥

तथा नायिकाऽपि ॥ १५ ॥

तथेति । पुरुषवद्, यस्य संप्रयोग इत्यादिना मन्दमध्यचण्डवेगा इति नायिकास्तिस्रः ॥ १५ ॥

अत्रापि प्रमाणवदेव नव रतानि ॥ १६ ॥

अत्रापीति । भावेऽपि, प्रमाणवदेवेति । सदृशसम्प्रयोगे समरतानि त्रीणि, विपर्यये विषमाणि षट् ॥ १६ ॥

तद्वत्कालतोऽपि शीघ्रमध्यचिरकाला नायकाः ॥ १७ ॥

तद्वदिति। यथा भावप्रमाणाभ्यां तथा कालतो नव रतानि, भावोत्पत्तिनिमित्तस्य कालस्य शीघ्रादिभेदेन त्रैविध्याद् यदाह—"शीघ्रमध्यचिरकालाः" इति, शीघ्रेण कालेन रतिर्यस्य, तथा मध्यचिरकालाभ्याम्, नायका इति। नायकश्च नायिका चेति 'पुमान्स्त्रिया' ।१।२।७। इत्येकशेषनिर्देशः ॥ १७ ॥

तत्र स्त्रियां विवादः ॥ १८ ॥

तत्रेति। नायकयोः स्त्रीपुंसयोः, स्त्रियां विवादः, स्त्रीविषये मतभेद इत्यर्थः ॥ १८ ॥

तत्रौद्दालकेर्मतम्—

न स्त्री पुरुषवदेव भावमधिगच्छति ॥ १९ ॥

यादृशं सुखं विसृष्टिप्रभवं पुरुषोऽनुभवति तादृशमेव न स्त्री, शुक्राभावात् ॥ १९ ॥

किमर्थं तर्हि पुरुषेण संप्रयुज्यत इत्याह—

सातत्यात्त्वस्याः पुरुषेण कण्डूतिरपनुद्यते ॥ २० ॥

सम्बाधकस्य स्वभावतः कृमिजुष्टत्वात्तत्र निसर्गसिद्धा कण्डूतिः, तथा चोक्तम्—

रक्तजाः कृमयः सूक्ष्मा मृदुमध्योग्रशक्तयः।
स्मरसद्मसु कण्डूतिं जनयन्ति यथाबलम् ॥

सा त्वस्याः पुरुषेणापनीयते, सातत्यादिति। अनवरतसाधनव्यापारेणेत्यर्थः, अन्यथा तत्प्रतिबन्धे कण्ड्वा उत्कोप एव स्यात् ॥ २० ॥

अपरद्रव्येणापि सा स्वयमपनयतीति चेदाह—

सा पुनराभिमानिकेन सुखेन संसृष्टा रसान्तरं जनयति ॥ २१ ॥

सेति। सा च कण्डूतिरपनीयमाना शलाकिकया कर्णकण्डूतिरिव, आभिमानिकेनेति। आभिमानिकं चुम्बनादिसुखं वक्ष्य(१)ति, तेन संसृष्टाऽनुगता, रसान्तरमिति। सुखान्तरं जनयति, यत्कण्डूत्यपनोदसुखं यच्च चुम्बनादिसुखं तयोः संसृष्टयो रसान्तरत्वात् ॥ २१ ॥

तस्मिन्सुखबुद्धिरस्याः ॥ २२ ॥

तस्मिन् रसान्तरे सुखबुद्धिरस्याः सुखिताऽस्मीति, कण्डूतिप्रतीकारमात्रे तु न सुखबुद्धिः, तस्याप्राधान्यात्, ततः 'स्पर्शविशेषविषयाऽऽ-

---

(१) "आलिङ्गनचुम्बननखच्छेद्य"त्यादिनाऽग्रिमेणैतदधिकरणस्थद्वितीयाध्यायगतेन बाभ्रव्यमतीयसूत्रेण।

भिमानकसुखानुविद्धा फलवत्यर्थप्रतीतिः' प्राधान्यादित्येतद्विशेषल(१)क्षणं न तुल्य(२)म्, विशेषो यदत्र न फलवती, शुक्राभावात्, तच्च रसान्तरमारम्भात्प्रभृति सन्तानेन सर्वथा कण्डूत्यपनोदात्प्रवर्तते पुरुषसुखं तु विसृष्टिभावित्वाद्, अत एव तयोः स्वरूपतः कालतश्च न सादृश्यमिति न कालभावाभ्यां नव रतानि ॥ २२ ॥

पुरुषप्रीतेश्चानभिज्ञत्वात् ॥ २३ ॥

न च पुरुषवद्रतिं स्त्री नाधिगच्छतीति कथमेतदुपलभ्यते, यस्मात्पुरु(३)षप्रीतेश्चेतोधर्मत्वेनातीन्द्रियायाः प्रत्यक्षेणानभिज्ञत्वात्, कस्य ज्ञातुः पुरुष(४)स्येत्यर्थः, चशब्दात्स्त्रीप्रीतेश्च ॥ २३ ॥

यदा स्त्री पुरुषायमाणा स्वव्यापारेणात्मनः प्रीतिं जनयति तत(५)श्च तद(६)संवेदनादेव स्वभा(७)वात्प्रीतिरस्या इति कथमुपलभ्यते, पृष्ट्वा ज्ञास्यतीत्यपि नास्तीत्याह—

कथं ते सुखमिति प्रष्टुमशक्यत्वात् ॥ २४ ॥

कथमिति । कथं केन प्रकारेण तव सुखं, किं विसृष्ट्या यथाऽस्माकं, किं वाऽन्येनेति, तत्र स्त्रिया विसृष्टिसुखस्यासंवेदनात्प्रकारान्तरसु-

---

(१) भावादिपर्याया रतिरत्र लक्ष्या, लक्षणेऽर्थपदं च भङ्ग्या स्पर्शविशेषपरम्, तथा च स्पर्शविशेषविषयकाभिमानिकसुखविषयकफलविशिष्टप्रतीतिविषयत्वं प्रकृते रतित्वं फलति, एवं च विषये विषय्युपचारेण निर्देशेन लक्षणं नासङ्गतम्, तस्य यथाश्रुतार्थकत्वे त्वसङ्गतिः प्रकृतानुपयोगश्च, फलं चेच्छाऽन्तरानधीनेच्छाविषयरूपं विसृष्टिप्रभवसुखं प्रकृते, तद्वैशिष्ट्यं च विषयितया, प्रतीतिश्च साक्षात्कृतिरूपा, नातो शब्दादिरूपायां तन्मितावतिप्रसङ्गः, साऽपि लौकिकसामग्रीप्रयोज्या जन्या च ग्राह्या, ऽन्यथा सामान्यप्रत्यासत्तिजायां भगवत्समवेतायां च तत्रातिव्याप्तिः ।

अत्र प्रथमविशेषणानुपादाने चुम्बनादिजायाः कादाचित्क्या मन्दवेगसमवेततादृशप्रतीतेर्विषयेऽतिव्याप्तिः, द्वितीयतदनुक्तौ चापरप्रकारजायास्तथा प्रतीतौ विषये सा, तृतीयतदभावे च रतादिपर्याये सम्प्रयोगे सेति ।

(२) न स्त्रीपुंसयो रतौ समन्वितम्, वस्तुतस्तु सिद्धान्ते ह्युक्तलक्षणे फलपदनिवेशो, न त्वौद्दालकिमते, तदनिवेशनिबन्धनदोषनिरासस्तु रतभेदनिवेशेन विधेय इति ।

(३) संप्रयुक्तपुरुषप्रीतेः ।

(४) उदासीनस्य ।

(५) अप्यर्थकश्चेज्ज्यायान् ।

(६) कण्डूत्यपनोदजन्यविसृष्टिजन्यसुखयोरन्यतरस्यानिर्णयात् ।

(७) स्वस्यात्मनो, भावाद्विसृष्टिसुखात्, ।

स्य च पुरुषेणासंवेदनात् प्रष्टुमपि न शक्यते, किमुत तद्वचनात्परिज्ञानम्, तस्मात्पुरुषवद्भावं नाधिगच्छतीति ॥ २४ ॥

कथमेतदुपलभ्यत इत्याशङ्क्यौद्दालकिरुपलब्ध्युपायमाह—

**कथमेतदुपलभ्यत इति चेत् पुरुषो हि रतिमाधिगम्य स्वेच्छया विरमति, न स्त्रियमपेक्षते, न त्वेवं स्त्रीत्यौद्दालकिः ॥ २५ ॥**

पुरुषो हीति । पुरुषो रतिमधिगम्य विसृष्टिसुखमनुभूय कृतकृत्यत्वात्स्वेच्छया व्यापाराद्विरमति, न स्त्रियमपेक्षते व्याप्रियमाणामपि, न त्वेवं स्त्रीति, साऽपि यदि पुरुषवद्विसृष्टिसुखमधिगच्छेत्तदा तदधिगम्य पुरुषनिरपेक्षा स्वेच्छया यन्त्रविश्लेषपूर्वकं विरमेद्, न चैवम्, अन्यत्र पुरुषविरामात्, विरतेऽपि पुंसि पुरुषान्तरसापेक्षत्वात्, तथा हि केनचित्पुंसा संप्रयुज्य तथाऽवस्थितवापरैः संप्रयुज्यमाना काचिद् दृश्यते, अत एवोक्तम् ।

'अग्निस्तृप्यति नो काष्ठैर्नापगाभिः पयोदधिः ।
नान्तकः सर्वभूतैश्च न पुंभिर्वामलोचना ॥' इति ॥

तस्मात्स्वेच्छया विरामाभावान्न विसृष्टिसुखाधिगमो, यथा प्राग्विसृष्टेः पुरुषस्येति ॥ २५ ॥

**तत्रैतत्स्याच्चिरवेगे नायके स्त्रियोऽनुरज्यन्ते शीघ्रवेगस्य भावमनासाद्यावसानेऽभ्यसूयिन्यो भवन्ति, तत्सर्वं भावप्राप्तेरप्राप्तेश्च लक्षणम् ॥ २६ ॥**

मा भूत्स्वेच्छया विरामोपलम्भात्स्त्रीषु विसृष्टिसुखानुभूतिः, अनुरागदर्शनात्तु स्यात्, तद्यथा, चिरवेगे नायके चिरमुपसृत्य; विसृष्टिसुखाधिगमाद्विरते स्त्रियोऽनुरज्यन्ते स्निह्यन्तीत्यर्थः, शीघ्रवेगस्य च नायकस्य क्षिप्रमुपसृत्य सुखाधिगमाद्विरतस्य रतान्तेऽभ्यसूयिन्यो द्वेषिण्यो भवन्ति, तत्सर्वमिति । अनुरागो विरागश्चोभयं लक्षणं ज्ञापकमित्यर्थः, कस्येत्याह—भावस्य प्राप्तेरप्राप्तेश्चेति । तत्रानुरागो योषितां सुखप्राप्तिं ज्ञापयति, विरागश्च दुःखाधिगमात्सुखाप्राप्तिं, विरागस्य विरुद्धकार्यत्वात्, अनुरागविरागौ च सुखदुःखहेतुकौ पुरुषेषु दृष्टान्तत्वेन सिद्धौ, तेऽपि हि पुरुषायिते चिरं व्यापृत्य; विरतायां योषित्यधिगतसुखाश्चिरवेगा अनुरज्यन्ते, तत्क्षणविरतायां च दुःखाधिगमादनवाप्य; ते रतिसुखं विरज्यन्ते, तस्मात्पुरुषस्येव योषितोऽप्यनुरागोपलम्भाद्विसृष्टिसुखाधिगमः प्रतीयत इति ॥ २६ ॥

तच्च न ॥ २७ ॥

तच्च नेति । अनुरागो भावप्राप्तेर्लिङ्गमित्येतन्नास्ति, सा(१)धारणत्वादस्य ॥ २७ ॥

तदाह—

कण्डूतिप्रतीकारोऽपि हि दीर्घकालं प्रिय इति ॥ २८ ॥

कण्डूतिप्रतीकारोऽपि हीति । तस्माच्चिरवेगेन कण्डूतेर्यः प्रतीकारः प्रतिक्रिया, दीर्घकालमिति । अतिचिरकालं सोऽपि स्त्रीणां प्रियो, न केवलं विसृष्टिसुखजननम् ॥ २८ ॥

एतदुपपद्यत एव ॥ २९ ॥

एतदुपपद्यत एव, न तु नोपपद्यते, एवेत्यनेनायोगव्यवच्छेदेन भवत्पक्षेऽप्येतदस्तीति दर्शयति, अन्यथा विसृष्टिसुखाधिगमेऽपि कण्डूतेरप्रतीकारान्न तत्रानुरागः, ततश्च किं विसृष्टिसुखाधिगमादनुरागोऽस्याः किं वा कण्डूतिप्रतीकारसमुत्थ इति संदिग्धः, तथाऽनधिगमात्, विरागोऽपि शीघ्रवेगे युज्यते ॥ २९ ॥

तस्मात्संदिग्धत्वादलक्षणमिति ॥ ३० ॥

तस्मादेत(२)दुभयं संदिग्धत्वाद्विसृष्टिसुखस्य प्राप्तेरप्राप्तेश्चालक्षणमज्ञापकम्, उभय(३)त्र वर्तमानत्वात्, तस्मात्स्वेच्छया विरामाविरामावेव ज्ञाप(४)कौ, तौ च स्त्रियां वर्त्तमानावर्तमा(५)नौ स्त इति न पुरुषवद्रतिमधिगच्छतीति स्थितम् ॥ ३० ॥

एतदेव मतमौद्दालकिगीतेन श्लोकेनाह—

संयोगे योषितः पुंसा कण्डूतिरपनुद्यते ।
तच्चाभिमानसंसृष्टं सुखमित्यभिधीयते ॥ ३१ ॥

कण्डूत्यपनोदसमुत्थं स्पर्शसुखमभिमानसंसृष्टमिति, कारणे कार्योपचारादाभिमानिकसुखानुविद्धं सुखमित्यभिधीयते योषिद्भिः ॥ ३१ ॥

बाभ्रव्यमतमाह—

---

(१) सपक्षभावप्राप्तिविपक्षकण्डूतिप्रतीकारोभयसम्बन्धित्वात् ।

(२) अनुरागविरागद्वयम् ।

(३) विसृष्टिसुखप्राप्त्यप्राप्त्योः । तत्राद्ये कल्पेऽनुरागः स्पष्ट एव, विरागस्तु कण्डूत्यप्रतीकारदशायाम् । द्वितीये तु विरागः स्पष्ट एवानुरागस्तु कण्डूतिप्रतीकारदशायाम् ।

(४) विसृष्टिसुखलाभतदलाभयोः ।

(५) स्वेच्छया विरामोऽवर्त्तमानः, स्वेच्छयाऽविरामो वर्त्तमान इति योजना ।

सातत्याद्युवतिरारम्भात्प्रभृति भावमधिगच्छति पुरुषः पुनरन्त एव ॥ ३२ ॥

द्वावपि विसृष्टिसुखमधिगच्छतः, स्त्री त्वारम्भाद्यन्त्रयोगात्प्रभृति सातत्यान्नैरन्तर्येण, सा हि पुरुषेणोपसृप्यमाणा प्रभिन्नजलभाण्डवच्छनैः क्लिन्नसम्बाधा भवतीति प्रत्यक्षसिद्धमेतत्, सुखं च पुरुषस्येव विसृष्ट्यनुविद्धमित्यारम्भात्प्रभृति स्त्री भावमधिगच्छति, पुरुषः पुनरन्ते भावमधिगच्छति, तदानीं शुक्रविसर्गात् ॥ ३२ ॥

एतदुपपन्नतरम् ॥ ३३ ॥

एतदिति । यथोक्तमुपपन्नतरम्, प्रमाणसिद्धत्वात्, ततश्च तयोर्भिन्नकालत्वान्न सादृश्यमिति न कालतो नव रतानि, भावतस्तु सन्ति, विसृष्टिसुखसादृश्यात् ॥ ३३ ॥

ननु सम्बाधो व्रणस्वभावत्वादपनुद्यमानः क्लिद्यतीत्याह—

न ह्यसत्यां भावप्राप्तौ गर्भसंभव इति बाभ्रवीयाः ॥ ३४ ॥

न हीति । रसप्राप्तौ विसृष्टिसुखाधिगमे तृप्ता हि स्त्री गर्भं धत्ते, यथाऽऽह चरकः—

'निष्ठीविका गौरवमङ्गसादस्तन्द्रा प्रहर्षो हृदयव्यथा च ।
तृप्तिश्च बीजग्रहणं स्वयोन्यां गर्भस्य सद्योऽनुगतस्य लिङ्गम् ॥
इति ।

तृप्तिश्च भावः, स च न शुक्रविसृष्टिं विनेत्यभिप्रायः, आर्तवं विसृजति न शुक्रमिति केचिद्, यथाऽऽह—

'कामाग्नितप्तचित्तस्त्रीपुंसयोरन्यदेहसंसर्गादरणीदण्डाभ्यामिव वह्निः शुक्रार्तवमथनाद्' इति.

अस्ति तावत्तृप्तिनिबन्धनं, किं तदिति चिन्त्यते, यदि तत्र शुक्रं कथं योषितो गर्भसम्भव उपपद्यते, यथा हि पुरुषसंसर्गात्स्त्री गर्भं धत्ते तथा योषित्संयोगादपि, यथोक्तं सुश्रुते—

'यदा नारी च नारी च मैथुनायोपपद्यते ।
अन्योन्यं मुञ्चतः शुक्रमनस्थिस्तत्र जायते' ॥ इति,

तस्माद्रसधातोरुत्पन्नोऽसृग्धातुरेव कस्यां चिदवस्थायामार्तवम्, शुक्रधातुस्तु मज्जधातोरुत्पद्यत इति ॥ ३४ ॥

अत्रापि तावेवाशङ्कापरिहारौ भूयः ॥ ३५ ॥

अत्रापीति । बाभ्रव्यमतेऽपि, तावेवेति । पूर्वोक्तावाशङ्कापरिहारौ वाच्यौ, तत्र यद्यारम्भात्प्रभृति भावाधिगमस्तदा चिरवेगेऽनुरज्यन्ते·

शीघ्रवेगस्य चावसानेऽभ्यसूयिन्य इत्ययं भेदो न युज्यते; उभयत्राप्यासां भावाधिगमाद् दृश्यते च भेदः, यस्मादनुरागस्तस्मादन्ते पुरुषवङ्गावस्य प्राप्तिः, यतः सासूया तस्मान्नारम्भात्प्रभृतीत्याशङ्कापरिहारौ, तन्न–कण्डूतिप्रतीकारोऽपि दीर्घकालः प्रियइति कण्डूत्यपनोदाभावाच्च शीघ्रवेगे च प्रद्वेषः, सत्यपि भावाधिगमे कण्डूत्यपनोदस्याधिककालस्याभावाद्, अथ वा दीर्घकालं भावजननमपि प्रियमिति योज्यम्, भावस्याधिकृतत्वात् । शीघ्रवेगे च विरज्यन्ते, चिरकालं भावस्याजननाद्, योषितो हि चिरानुबन्धनं भावमुत्पद्यमानमिच्छन्ति, तासामष्टगुणकामत्वाद्, एवं सति न पुंभिर्वामलोचनास्तृप्यन्तीति युक्तम्, तेषामेकगुणकामत्वात्, न पुनर्विसृष्टिसुखाभावादिति, भूयश्चेति पुनराशङ्कापरिहारौ ॥ ३५ ॥

तदाह—

तत्रैतत्स्यात् सातत्येन रसप्राप्तावारम्भकाले मध्यस्थचित्तता नातिसहिष्णुता च ततः क्रमेणाधिको रागयोगः शरीरे निरपेक्षत्वम् अन्ते च विरामाभीप्सेत्येतदनुपपन्नमिति ॥ ३६ ॥

रतस्यारम्भकाले मध्यस्थचित्तता नखक्षतादीनामप्रयोगः, नातिसहिष्णुता च नखक्षतादीनां प्रयुज्यमानानां नातिक्षमता, ततश्च क्रमेणारम्भादुत्तरकालं तरतमभेदादधिकरागयोग इति, मध्यस्थचित्ततायां विपर्ययः, शरीरेऽपि निरपेक्षत्वमित्यतिसहिष्णुतया, अन्ते च विरामाभीप्सा प्रयोगनिवृत्तीच्छा. एतत्सर्वमवस्थाऽन्तरं योषितः सातत्याद्रसप्राप्तौ सत्यामनुपपन्नम्, प्रारम्भात्प्रभृत्येकरूपतया सातत्येन विसृष्टिसुखस्य प्रवृत्तत्वात्, पुरुषस्य विसृष्ट्यवस्थायामेतदवस्थान्तरं दृश्यत इति ॥ ३६ ॥

तच्च न ॥ ३७ ॥

नैवानुपपन्नं, कुलालचक्रादिवदुपपद्यत एव ॥ ३७ ॥

सामान्येऽपि भ्रान्तिसंस्कारे कुलालचक्रस्य भ्रमरकस्य वा भ्रान्तावेव वर्तमानस्य प्रारम्भे मन्दवेगता ततश्च क्रमेण पूरणं वेगस्येत्युपपद्यते ॥ ३८ ॥

भ्रमरकं काष्ठमयं क्रीडनकद्रव्यम्, तद्दीर्घेण सूत्रेणावेष्ट्य लाडिका भ्रमयन्ति, यथा तयोर्दण्डे सूत्रप्रत्याक्षिप्ते भ्रान्तिसंस्कारे समानेऽप्यादिमध्यावसानेषु भ्रान्त्यामेव वर्तमानयोः, अन्यथा भ्रान्त्यभावात्तत्संस्कारोऽस्तीति कथं प्रतीयेत ? प्रारम्भे मन्दवेगता मन्दभ्रमणं, ततः क्र-

मेण तरतमभेदेन पूरणं वेगस्य, यथा तत्कुलालचक्रं भ्रमरकं वा निश्चलतरमिव स्थितमिति, एवं योषितोऽपि पुरुषेणोपसृप्तादिभिः प्रत्ययैरुत्पद्यमाने विसृष्टिसुखे समानेऽप्यादिमध्यावसानेषु प्रारम्भकाले मन्दवेगता मृद्वी रतिः तत्र मध्यस्थचित्तता नातिसहिष्णुता च, ततः क्रमेण पूरणं वेगस्याधिक्यं रतेः, यत्राधिकचित्तवृत्त्या शरीरनिरपेक्षत्वमिति ॥ ३८ ॥

सातत्येन भावस्य प्रवृत्तत्वात्कथं विरामाभीप्सेत्याह—

धातुक्षयाच्च विरामाभीप्सेति ॥ ३९ ॥

धातुक्षयाच्चेति। समुत्पन्ने कामिताऽऽख्ये भावे यः शुक्रधातुः स्थानाच्च्युतः स्वनाडीं प्रतिपद्यते तस्यारम्भात्प्रभृति शनैः शनैः स्यन्दनात्क्षये निवृत्तरागत्वाद्विरामाभीप्सेति ॥ ३९ ॥

तस्मादनाक्षेप इति ॥ ४० ॥

तस्मादनाक्षेप इति। अचोद्यं विसृष्टिप्रभवस्य भावस्य संतानेन प्रवृत्तस्यावस्थाऽन्तरमनुपपन्नमिति ॥ ४० ॥

अमुमेवार्थं बाभ्रव्यगीतेन श्लोकेनाह—

सुरतान्ते सुखं पुंसां स्त्रीणां तु सततं सुखम्।
धातुक्षयनिमित्ता च विरामेच्छोपजायते ॥ ४१ ॥

॥ ४१ ॥

एवं पक्षद्वयमुपन्यस्य सिद्धान्तमाह—

तस्मात्पुरुषवदेव योषितोऽपि रसव्यक्तिर्द्रष्टव्या ॥ ४२ ॥

यत एवं विवादस्तस्माद्रसव्यक्ती रत्युत्पत्तिर्यथा पुरुषस्य विसृष्टिरन्ते च तद्वदेव योषितोऽपि द्रष्टव्या ॥ ४२ ॥

पुरुषसुखेन हि स्त्रीसुखस्य वैसादृश्यं स्वरूपतः कालतो वा स्यात्, तदुभयथाऽपि न युज्यत इति प्रतिपादयन्नाह—

कथं हि समानायामेवाकृतावेकार्थमभिप्रपन्नयोः कार्यवैलक्षण्यम् ॥ ४३ ॥

तत्र विजातीययोः पुरुषवडवयोः सम्प्रयुक्तयोर्भवेत्सुखवैसादृश्यमित्याह—समानायामेवाकृताविति। तुल्यायां मनुष्यजातौ तुल्यजातीययोरपि स्नानभोजनादौ भिन्नेऽर्थे प्रवर्तमानयोः स्यादित्याह—एकमिति। एकं रताख्यमर्थमाभिमुख्येन प्रवृत्तयोः कथं कार्यवैलक्षण्यं स्यात्, तत्र विजातीययोः पुरुषवडवयोर्भावसुखस्य कार्यस्य स्वरूपतः कालतश्च भेदादित्यर्थः। ये च समानाकृतयः सन्त एककार्यमभिप्र-

ज्ञास्तेषां सदृशं कार्यम्, न हि मेषयोः समानाकृत्योरेकस्मिन्युद्धलक्षणार्थे प्रवृत्तयोरभिघातः कार्यं कालस्वरूपाभ्यां भिद्यते ॥ ४३ ॥

पुनः पुनः शास्त्रकार एव परपक्षमुपोद्बलयन्नाह—

स्यादुपायवैलक्षण्यादभिमानवैलक्षण्याच्च ॥ ४४ ॥

स्यादुपायवैलक्षण्यादिति । भवेत्तत्र कार्यभेद उपायभेदादभिमानभेदाच्चेत्यर्थः ॥ ४४ ॥

कथम् ? ॥ ४५ ॥

कथमिति ॥ ४५ ॥

स चोपायभेदो निरूप्यमाणः स्त्रीपुंसव्यापारव्यतिरेकेण नास्तीत्याह—

उपायवैलक्षण्यं तु सर्गात् कर्ता हि पुरुषोऽधिकरणं युवतिः ॥४६॥

उपायवैलक्षण्यं तु सर्गादिति । उपायभेदः, सृष्टेरित्यर्थः, एषैव हि सृष्टिः स्त्रीपुंसयोर्यदेकः कर्ताऽन्यश्चाधार इति ॥ ४६ ॥

तदेव योजयन्नाह—

अन्यथा हि कर्ता क्रियां प्रतिपद्यतेऽन्यथा चाधारः ॥ ४७ ॥

अन्यथेति । एकस्य निम्नं मेहनमपरस्योन्नतम्, आस्यग्रासकभावान्मेहनयोः क्रियाभेदः ॥ ४७ ॥

तस्माच्चोपायवैलक्षण्यात्, सर्गादभिमानवैलक्षण्यमपि भवति ॥४८॥

तस्माच्चैवंभूतव्यापारात्मकत्वादुपायवैलक्षण्यान्न केवलं भवत्परिकल्पितः कार्यभेदो,ऽभिमानभेदोऽपि भवति ॥ ४८ ॥

तदेव दर्शयन्नाह—

अभियोक्ताऽहमिति पुरुषोऽनुरज्यते, अभियुक्ताऽहमनेनेति युवतिरिति वात्स्यायनः ॥ ४९ ॥

अभियोक्तेत्यादि । अहमेनां रन्तुमनुयुञ्ज इति कर्तृव्यापारापेक्षया पुरुषोऽभिमन्यमानोऽनुरज्यते, अहमनेनाभियुक्ता रन्तुमिति चाधारव्यापारापेक्षया युवतिरभिमन्यमाना ऽनुरज्यते, ततश्च तावुत्पन्नाभिमानानुरागौ संप्रयोगे व्याप्रियमाणावपि कालस्वरूपाभ्यां सदृशं भावमभिगच्छतो न तु क्रियाभेदमात्राद्विसदृशम्, ततो ह्यभिमानमात्रं भिद्यते न कार्यमित्येतच्चेतसि कृत्वा शास्त्रकारो व्यक्ताभिप्रायं स्वपक्षं दर्शयति स्वनाम्ना ॥ ४९ ॥

परस्यापि शास्त्रकारेणाभिमानवैलक्षण्यमभ्युपगच्छतोपायवैलक्षण्यमभ्युपगत स्तस्मात्त्वयं कथं कार्यभेदः, परं नाभ्युपगच्छेदित्यभिप्रायोवर्तते तंनिराकर्तुं शास्त्रकारः प्रकटयति—

तत्रैतत्स्यादुपायवैलक्षण्यवदेव हि कार्यवैलक्षण्यमपि कस्मान्न स्यादिति ॥ ५० ॥

उपायवैलक्षण्यवदिति । यथाऽनयोर्व्यापारो भिन्नोऽभ्युपगतस्तद्वदेव सुखाख्यमपि कार्यं भिन्नं कस्मान्नाभ्युपगम्यते तज्जन्यत्वादिति ५०॥

तच्च न ॥ ५१ ॥

तच्च नेति ।

तज्जन्यत्वे कार्यस्य न वैलक्षण्यमपि तूपायवैलक्षण्यमेव युक्तम् ॥५१॥

हेतुमदुपायवैलक्षण्यम् ॥ ५२ ॥

तस्माद्धेतुमदुपायवैलक्षण्यम् ॥ ५२ ॥

कुत इत्याह—

तत्र कर्त्राधारयोर्भिन्नलक्षणत्वाद् ॥ ५३ ॥

कर्त्राधारयोर्भिन्नलक्षणत्वादिति । स्वतन्त्रः कर्ता, अधिकरणमाधारः, तयोर्हेत्वोर्भिन्नस्वभावत्वात्तद्व्यापारावपि तज्जन्यत्वाद्भिन्नावित्यर्थः ॥ ५३॥

यत्तु कार्यस्य तज्जन्यत्वेऽपि वैलक्षण्यमुक्तं तस्य निरूप्यमाणोऽन्यो हेतुर्नास्तीत्याह—

अहेतुमत्कार्यवैलक्षण्यमन्याय्यं स्यात् ॥ ५४ ॥

अहेतुमदिति । अहेतुत्वाच्च कार्यवैलक्षण्यमित्यन्याय्यं युक्तिशून्यमभ्युपगतं स्यात् ॥ ५४ ॥

तामेव युक्तिं स्मारयन्नाह—

आकृतेरभेदादिति ॥ ५५ ॥

आकृतेरभेदादिति । समानामेव मनुष्यजातावेकाभिसन्धानयोः स्त्रीपुरुषयोर्व्यापारौ परस्परापेक्षौ कालस्वरूपाभ्यां सदृशं सुखं जनयतः॥५५॥

तत्रैतत्स्यात् ,संहत्य कारकैरेकोऽर्थोऽभिनिर्वर्त्यते, पृथक्पृथक्स्वार्थसाधकौ पुनरिमौ तदयुक्तमिति ॥ ५६ ॥

देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादौ देवदत्तादिभिः कर्तृकरणाधारैः कारकैः संभूयौदनो दृश्यते, स्वकार्यसाधकौ पुनरिमौ स्त्रीपुंसौ, यतो युवतिराधारः पुरुषव्यापारापेक्षः स्वसन्तानेषु सुखाख्यं स्वार्थं साधयति, पुरुषश्च कर्ता स्त्रीव्यापारापेक्ष इति, एतच्च भिन्नार्थसाधकत्वं कारकाणामयुक्तम् , ओदनादावदृष्टत्वाद्, दृश्यते च स्त्रीपुंसयोः, तत्र भिन्नार्थसाधकत्वेऽपि कारकाणां यथा स्त्रीपुंसयोः सुखरूपं पृथक्कार्यं, तथा समानाकृतित्वेऽपि तदेव कार्यं कालस्वरूपाभ्यां विसदृशं स्यादित्यभिप्रायः ॥ ५६ ॥

तच्च न ॥ ५७ ॥

तच्च नेति । नैतदयुक्तं किं तु युक्तमेव ॥ ५७ ॥

युगपदनेकार्थसिद्धिरपि दृश्यते, यथा मेषयोरभिघाते कपित्थयोर्भेदे मल्लयोर्युद्ध इति ॥ ५८ ॥

युगपदनेकार्थसिद्धिदर्शनाद्, यथा मेषयोरभिघात इति । अभिघातविषये युगपदनेकार्थसिद्धिर्दृश्यते, युगपद् द्विधा चाभिघातो भवतीत्यर्थः, एवं कपित्थयोर्भेदे मल्लयोर्युद्ध इति, तथा स्त्रीपुंसयोः कारकयोः पृथक्कार्यं सदृशं च स्यादिति, मेषकपित्थमल्लग्रहणं तिर्यगचेतनमनुष्येष्वप्यस्य न्यायस्य प्राप्तिख्यापनार्थम् ॥ ५८ ॥

तत्र को भेद इति चेत्, तत्रैतत्स्यात्—

न तत्र कारकभेद इति चेद् ? ॥ ५९ ॥

मेषादियुद्धादावपि द्वावपि प्रतियोगिनौ कर्तारौ न तत्र कारकान्तरमिति ॥ ५९ ॥

इह तु कर्त्राधाराविति कथं न विसदृशं कार्यमित्याशङ्क्याह—

इहापि न वस्तुभेद इति ॥ ६० ॥

इहापीति । स्त्रीपुंसयोरपि न कश्चित्परमार्थतः कारकयोर्भेदः, अपि तु द्वावप्येतौ कर्तारौ क्रियां निर्वर्तयतः, केवलं करणाधिकरणादयो भेदा बुद्धिकल्पिता व्यवहारार्थं व्यवस्थाप्यन्ते ॥ ६० ॥

उपायवैलक्षण्यं तु सर्गादिति तदभिहितं पुरस्तात् ॥ ६१ ॥

एवं च सति 'उपायवैलक्षण्यं तु सर्गात्' । २ । १ । १ । ४६ । इति यदुक्तं तदभिहितं प्रतिविहितं पुरस्ताद् द्रष्टव्यम्, कर्त्राधारलक्षणस्यैव वास्तवत्वात् ॥ ६१ ॥

तेनोभयोरपि सदृशी सुखप्रतिपत्तिरिति ॥ ६२ ॥

तेन प्रतिविहितेनोभयोरपि स्त्रीपुंसयोः सदृशी सुखप्रसिद्धिः, कालस्वरूपाभ्यां सदृशं सुखमुत्पद्यत इत्यर्थः, अन्यथा कथं तयोरागज्वरोपशमः, तामेवात्यानन्दावस्थामधिकृत्योपस्थेन्द्रियमानन्देन्द्रियमिति गीयते ॥ ६२॥

अमुमेवार्थं शास्त्रकारः संग्रहश्लोकेनाह—

जातेरभेदाद्दम्पत्योः सदृशं सुखमिष्यते ।
तस्मात्तथोपचर्या स्त्री यथाऽग्रे प्राप्नुयाद्रतिम् ॥ ६३ ॥

दम्पत्योः स्त्रीपुंसयोः, एकार्थमभिप्रपन्नयोरित्यर्थः, एतावत्तु स्यात्, अत्रान्तरस्त्रीजातिभेदाद्यदपरमस्याः, कण्डूत्यपनोदसुखं यच्चोपमृद्यमाने

संबाधे स्यन्दनं शुक्रस्य, विसृष्टिसुखं तु पुरुषवदन्त एवेति यथोक्तम्—

'कण्डूत्यपगमात्स्त्रीणां क्षरणाच्च सुखं द्विधा ।
स्यन्दनं च विसृष्टिश्च शुक्रस्य क्षरणं द्विधा ॥
क्लिन्नता केवलस्यन्दाद्विसृष्टेर्मथनात्सुखम् ।
अन्ते त्वाक्षिप्तवेगाया विसृष्टिर्नरवत्स्मृता' ॥

तत्रावसाने दंपत्योः समकाला चेद्रतिरुत्तमः पक्षः; समरतत्वात्, भिन्नकाला चेत्; पुरुषस्य प्रागधिगतभावत्वाद् ध्वजभङ्गे न स्त्रीभावम· धिगच्छेत् तस्मात्समरताद्विषमरते तथा स्त्री चुम्बनालिङ्गनादिभिरुप· चरणीया यथाऽग्रे प्राप्नुयाद्रतिम्, स्त्रिया प्रागधिगते भावे पुरुषो युक्त यन्त्रो वेगं कुर्यादात्मनो भावं निर्वर्तयितुमिति ॥ ६३ ॥

सदृशत्वस्य सिद्धत्वात्, कालयोगीन्यपि भावतोऽपि कालतः प्रमाणवदेव नव रतानि ॥ ६४ ॥

कालयोगीन्यपीति । अपिशब्दाद्भावयोगीन्यपि; अन्यथा कण्डूत्यप- नोदसुखस्य विसृष्टिसुखस्य वा वैसादृश्यात्कथं भावतो नव रतानि ६४॥

रतिरतयोर्व्यवहारार्थं पर्यायानाह—

रसो रतिः प्रीतिर्भावो रागो वेगः समाप्तिरिति रतिपर्यायाः, संप्रयोगो रतं रहः शयनं मोहनं सुरतपर्यायाः ॥ ६५ ॥

फलावस्था रतिः, हेत्ववस्था च रतम्, तयोः पर्यायशब्दानामे कार्थविषयत्वेऽपि निमित्तं भिद्यते, यथा—ऐश्वर्ययोगादिन्द्रः, शक्तियो- गाच्छक्रः, तत उपस्थेन्द्रियेण रसनादनुभवनाद्रसः, फलावस्थायां सुख- त्वेन चित्तपरिस्यन्देन रमणाद्रतिः, चित्तप्रणयनात्प्रीतिः, कामिता- ऽऽख्येन भावेन भाव्यमानत्वाद्भावः, कामिताऽऽख्योऽपि भाव्यते फल- रूपोऽनेनेति भावः, चित्तरञ्जनाद्रागः, शुक्रधातोः सुखानुविद्धस्य ना- डीसुखात्पृथग्भवनाद्वेगः, रतस्य समापनात्समाप्तिरिति, सङ्गतयोः स्त्रीपुंसयोः सम्यक्प्रकृष्टो योगः संप्रयोगः, हेत्ववस्थायां वाक्का- यचित्तपरिस्यन्देन रमणाद्रतम्, दम्पतिव्यतिरिक्तमन्यं रहयतीति रहः, शयनीयप्रतिशय्यिकयोः शयनाच्छयनम्, अन्यव्यापारेषु मोहनाद्वैच· त्यकरणान्मोहनमिति ॥ ६५ ॥

प्रमाणकालभावजानां संप्रयोगाणामेकैकस्य नवविधत्वात्तेषां· व्यतिकरे सुरतसंख्या न शक्यते कर्तुमतिबहुत्वात् ॥ ६६ ॥

प्रमाणकालभावजानां त्रयाणां रतानामेकैकस्य नवविधत्वात्समुदायेन

सप्तविंशतिः, द्विविधं रतम्—शुद्धं संकीर्णं च, तत्र शुद्धस्यासम्भवात्संकीर्णमेव युक्तमभिधातुमिति मन्यमानः शास्त्रकार आह—तेषामिति । सप्तविंशतिसंख्यानां व्यतिकरे संयोगे, तत्रापि न द्वाभ्याम्, असंभवात्, त्रिभिरेव व्यतिकरः, सुरतसंख्या न शक्यते वक्तुम्, प्रत्येकनिर्देशेनातिबहुत्वात्, तेषु हि प्रत्येकं निर्दिश्यमानेषु ग्रन्थगौरवं स्यात्, संक्षेपेण च संख्यानस्य प्रयोजनं नास्ति, तस्मात्पूर्वसंख्ययैव योजनीयमित्यभिप्रायः, तत्र समं विषमं च संकीर्णकम्, तद्यथा—शशस्य मन्दशीघ्रवेगस्य मृग्या तथाविधया, शशस्य मध्यमध्यवेगस्य मृग्या तथाविधया, शशस्य शीघ्रचिरवेगस्य मृग्या तथाविधया, शशस्य मन्दमध्यवेगस्य मृग्या तथाविधया, शशस्य मन्दचिरवेगस्य मृग्या तथाविधया, शशस्य मध्यशीघ्रवेगस्य मृग्या तथाविधया, शशस्य मध्यचिरवेगस्य मृग्या तथाविधया; शशस्य चण्डशीघ्रवेगस्य मृग्या तथाविधया, शशस्य चण्डचिरवेगस्य मृग्या तथाविधया, इति सदृशसंप्रयोगे समानि नव संकीर्णरतानि ।

एषामेव नवानां शशानामेकैकस्य सदृशीं मृगीमेकां त्यक्त्वा शेषाभिरतथाविधाभिरष्टभिर्योगे द्वासप्ततिरिति विषमाणि संकीर्णरतानि, यथा शशस्य नवप्रकारस्य नवप्रकारया तथाविधया बडवया विषमाणि नव संकीर्णरतानि, अतथाविधाभिरष्टभिर्योगे द्वासप्ततिरिति विषमाण्येव

एवं हस्तिन्या तावन्त्येव विषमाण्यतिविषमाणि चेति संक्षेपेण शशस्य त्रिचत्वारिंशच्छतद्वयम्(२४३), तावदेव वृषस्याश्वस्य च, समुदा, येन चैकोनत्रिंशत्सप्तशतानि (७२९) ॥ ६६ ॥

तेषु तर्कादुपचारान्प्रयोजयेदिति वात्स्यायनः ॥ ६७ ॥

संकीर्णरतेषु बुद्ध्या परिच्छिन्नेषु तर्कादुपचारान्प्रयोजयेत्, प्रमाणकालभावजेषु ये यथायथमालिङ्गनादय उपचारास्तान्रहयित्वा संकीर्णानेव योजयेत्, तथा तत्समरतमेव प्रायत्निकं स्यादित्यर्थः, अत्र बाभ्रवीयाः श्लोकाः—

'पौरुषं मेहनं यत्र मेहने परिघृष्यते ।
भावकालौ समानौ च तद्रतं श्रेष्ठमुच्यते ॥
भिद्यते मेहनं यत्र घृष्यते च न सर्वशः ।
विषमौ कालभावौ च कनिष्ठं तदुदाहृतम् ॥
सुरतं सर्वसाम्ये स्याद्वैषम्ये दूरतं स्मृतम् ।
मध्यमानि तु सर्वाणि तेषु चाहुर्बलाबलम् ॥

बलीयान्सर्वतः कालः कालेऽपि हि शशोऽपि सन् ।
संस्पृशत्येव सर्वत्र हस्तिनीमेहनोदरम् ॥
एवं वाजी विरुध्येत मृगीकालप्रकर्षतः ।
तस्मात्प्रमाणमेवाहुर्बलीयः सर्वतः परे ॥
बलीयान्वेग इत्यन्ये यस्मादश्वोऽप्यवेगवान् ।
नैव साधयितुं शक्तो वेगः कालप्रकर्षणः ॥
एवं तु नैव खिद्येत मन्दवेगाऽपि नायिका ।
यथाविषयमेतासां तस्माज्ज्ञेयं बलाबलम् ॥
हीनो भावप्रमाणाभ्यां वेगवान्कालवर्जितः ।
कालप्रमाणहीनश्च तत्र शेषेण साधयेद्' इति ॥ ६७ ॥

तत्र स्वभावतो यो यस्य भावः कालश्च स भावान्तरं कालान्तरं च यदा प्रतिपद्यते तदा भावकालान्तरसंक्रान्तिः, तां दर्शयितुमाह—

**प्रथमरते चण्डवेगता शीघ्रकालता च पुरुषस्य तद्विपरीतमुत्तरेषु, योषितः पुनरेतदेव विपरीतमाधातुक्षयात् ॥ ६८ ॥**

शीघ्रमध्यचिरवेगा(१)णां मन्दमध्यचण्डवेगानामन्यतमस्य प्रकृतिस्थस्य प्रथमरते स्वभेदापेक्षया शीघ्रवेगता चण्डवेगता च द्रष्टव्या, तदानीं प्रवृद्धत्वाद्रागश्चण्डायमानो द्रुतं प्रशाम्यति, तद्यथा—चिरचण्डवेगस्य प्रथमरते मध्यवेगता चण्डतरवेगता च कालभावाभ्याम्, मध्यमध्यवेगस्य शीघ्रवेगता चण्डवेगता च, शीघ्रमन्दवेगस्य शीघ्रतरवेगता मध्यवेगता च, शीघ्रमध्यवेगस्य शीघ्रतरवेगता चण्डवेगता च, शीघ्रचण्डवेगस्य शीघ्रतरवेगता चण्डतरवेगता च, मध्यमन्दवेगस्य शीघ्रवेगता मध्यवेगता च, मध्यचण्डवेगस्य शीघ्रवेगता चण्डतरवेगता च, चिरमन्दवेगस्य मध्यवेगता, चिरमध्यवेगस्य मध्यवेगता चण्डवेगता, चेति(२) नव प्रथमरते संक्रान्तिरतानि, तद्विपरीतमुत्तरेष्वति, प्रथमरते यदुक्तं तस्य विपरीतं द्वितीयादिषु रतेष्वित्यर्थः, तत्र कामस्यैकगुणत्वात्पुरुषस्य प्रशान्तरागत्वाद् द्वितीये रते प्रकृतिस्थैव भावकालान्तरसंक्रान्तिः,

योषितः पुनरेतदेव विपरीतमिति । अत्रापि प्रकृतिस्थायाः प्रथमरते स्वभेदापेक्षया चिरवेगता मन्दवेगता च द्रष्टव्या, तस्या अष्टगुणोऽपि रागो निसर्गादेव प्रथमरतेन संधुक्षते, ततश्च तदानीं मन्दायमानश्चिरेण·

---

( १ ) वैयधिकरण्ये षष्ठी ।

( २ ) कालभावाभ्यामिति क्रमेण सर्वत्रान्वितम् ।

प्रशास्यति, तद्यथा—चिरचण्डवेगायाः प्रकृतिस्थायाश्चिरतरवेगता मध्यवेगता च कालभावाभ्याम्, मध्यमध्यवेगायाश्चिरवेगता मन्दवेगता च, शीघ्रमन्दवेगाया मध्यवेगता मन्दतरवेगता च, इत्येवं शेषास्वपि षट्(१)सु योज्यम्, तद्विपरीतमुत्तरेषु द्वितीये रते प्रकृतिस्थैवं संक्रान्तिः, ततः शनैः शनैः संधुक्षणात्प्रवर्धमानरागवेगयोः स्वभेदापेक्षया तृतीयादिरतेषु शीघ्रतरतमवेगताऽऽदयश्चण्डतरतमवेगताऽऽदयश्च धर्माः यावच्छुक्रधातुक्षय इति स्त्रीपुंसयोस्तुल्ये धातुक्षये विशेषः ॥ ६८ ॥

यत्पुरुषस्यादौ धातोरेकगुणत्वाद्; योषितश्च पश्चादष्टगुणत्वात्तदाह—

प्राक् च स्त्रीधातुक्षयात्पुरुषधातुक्षय इति प्रायोवादः ॥६९॥

प्राक्चेति । प्रायोवाद इति । न पुम्भिर्वामलोचना तृप्यतीति, प्रमाणान्तरसंक्रान्तिं च योषितो जघनप्रसारणावह्रासाभ्यां पुरुषस्य च वृद्धिविधिना वक्ष्यति ॥ ६९ ॥

शीघ्रमध्यचिरवेगा नायिका इत्युक्तम्, काः पुनस्ता इत्याह—

मृदुत्वादपमृद्यत्वान्निसर्गाच्चैव योषितः ।
प्राप्नुवन्त्याशु ताः प्रीतिमित्याचार्या व्यवस्थिताः ॥७०॥

निसर्गात्स्वभावतो या स्त्रियो मृद्वङ्ग्यः, अमृद्वङ्ग्योऽपि याश्चुम्बनादिभिर्बाह्यैरान्तरैश्चाङ्गुलिकर्मादिभिरुपमृद्यन्ते ताः शीघ्रतरं प्रीतिं प्राप्नुवन्ति ताः शीघ्रवेगा इत्यर्थः, तद्विपर्ययेण मध्यचिरवेगा इत्यर्थ इत्युक्तं, तथा पुरुषोऽपीति, तत्र मृदुत्वं स्वाभाविकं लक्षणम्, शेषं कृत्रिमम्, इत्याचार्या व्यवस्थिता इति । सर्वेषामेतदेव मतमव्यभिचारित्वात् ॥ ७० ॥

एतावदेव युक्तानां व्याख्यातं सांप्रयोगिकम् ।
मन्दानामवबोधार्थं विस्तरोऽतः प्रवक्ष्यते ॥ ७१ ॥

रतावस्थापनमात्रेण सांप्रयोगिकं संक्षेपेण व्याख्यातम्, युक्ता हि प्राज्ञाः शास्त्रेण विदित्वाऽऽलिङ्गनादीनुपचारानुत्प्रेक्ष्य योजयन्ति न मन्दबुद्धय इति तदवबोधनार्थं विस्तराभिधानम् ॥ ७१ ॥

---

(१) शीघ्रमध्यवेगाया, मध्यवेगता मन्दवेगता च । शीघ्रचण्डवेगाया, मध्यवेगते । मध्यमन्दवेगायाः, चिरवेगता मन्दतरवेगता च । मध्यचण्डवेगाया, चिरवेगता मध्यवेगता च । चिरमध्यवेगायाः, चिरतरवेगता मन्दवेगता च । चिरमन्दवेगायाः, चिरतरवेगता मन्दतरवेगता च । एतच्च स्वभावस्थाया योषितः प्रथमरते कालभावाभ्यां क्रमेण ज्ञेयम् ।

प्रमाणकालभावेभ्यो रतावस्थापनं नाम षष्ठं प्रकरणम् ।

यथा त्रिधा रतमवस्थापितं तथा स्थूलसूक्ष्मरूपाभ्यां प्रीतिरपि व्यवस्थापिता, किं तु तद्व्यतिरेकेणान्या अपि प्रीतयोऽस्मिञ्छास्त्रे संभवन्तीति दर्शनार्थं प्रीतिविशेषा उच्यन्ते—'अभ्यासाद्' इत्यादिना ।

अभ्यासादभिमानाच्च तथा संप्रत्ययादपि ।
विषयेभ्यश्च तन्त्रज्ञाः प्रीतिमाहुश्चतुर्विधाम् ॥ १ ॥

तन्त्रज्ञाः=कामसूत्रज्ञाः ॥ १ ॥

आसां लक्षणमाह—'शब्दादिभ्य' इत्यादिना

शब्दादिभ्यो बहिर्भूता या कर्माभ्यासलक्षणा ।
प्रीतिः साऽऽभ्यासिकी ज्ञेया मृगयाऽऽदिषु कर्मसु ॥ २ ॥

कर्मसु क्रियमाणेषु तत्रत्याञ्शब्दादिविषयानाश्रित्य या स्यात्सा विषयप्रीतिरेव कर्माभ्यासलक्षणा कर्मणां पुनः पुनरनुष्ठानमभ्यासः तेन लक्ष्यमाणत्वात्तल्लक्षणा प्रीतिः सक्तिः साऽभ्यासेन निर्वृत्ताऽऽभ्यासिकी कर्माश्रयकलाव्यासक्तानां भवति, यदाह—मृगयाऽऽदिष्विति । आखेटकं मृगया, व्यायामिकी विद्या; आदिशब्दान्नृत्यगीतवाद्यचित्रपत्रच्छेद्याद्युपसंग्रहः ॥ २ ॥

अनभ्यस्तेष्वपि पुरा कर्मस्वविषयात्मिका ।
संकल्पाज्जायते प्रीतिर्या सा स्यादाभिमानिकी ॥ ३ ॥

पुरा पूर्वं कर्मस्वनभ्यस्तेष्वपीत्यपिशब्दादभ्यस्तेष्वपीति, येनापि मृगयाकर्म नाभ्यस्तमभ्यस्तं वा सोऽपि तत्कर्म कृत्वा मनसा सुखायते, आभ्यासिकी तु कर्माभ्यासादेवेति विशेषः, अविषयात्मिकेति, नापि विषयेभ्यः शब्दादिभ्य आत्मलाभः स्यादित्यर्थः, कुत स्तर्हीत्याह—सङ्कल्पाज्जायत इति, मनसः संकल्पात्मकत्वान्मानसीत्यर्थः, सा सा चैवंविधाऽऽभिमानिकीत्युच्यते, अभिमानोऽहंकारः स प्रयोजनमस्या इति ॥ ३ ॥

सा कथमस्मिञ्शास्त्रे सम्भवतीत्याह—

प्रकृतेर्या तृतीयस्याः स्त्रियाश्चैवोपारिष्टिके ।
तेषु तेषु च विज्ञेया चुम्बनादिषु कर्मसु ॥ ४ ॥

तृतीया प्रकृतिर्नपुंसकं तस्याः, स्त्रियाश्च मुखचपलायाः प्रयुक्त्या- औपरिष्टिके मुखे जघनकर्मण्यभ्यस्तेऽपि विज्ञेया, प्रयोजयितुः पुनः कायिकी विषयप्रीतिः, तेषु तेषु चेति । स्वभेदभिन्नेषु चुम्बनादिषु,

आदिशब्दादालिङ्गनन खरदनच्छेद्यप्रहणनेष्वभ्यस्तेष्वनभ्यस्तेष्वपि रतिकाले प्रयोक्तुर्मानसी प्रीतिः, यस्या अपि प्रयुज्यन्ते तस्या अपि तत्र तत्र स्थाने प्रयुज्यमानेषु रागसंकल्पवशान्मानसी प्रीतिर्न कायिकी स्पर्शमात्रसंवेदनात्, दुःखाभिभूते तु काये तत्प्रीतिकारणाभावात् सा न कायिकी ॥ ४ ॥

नान्योऽयमिति यत्र स्यादन्यस्मिन्प्रीतिकारणे ।
तन्त्रज्ञैः कथ्यते साऽपि प्रीतिः संप्रत्ययात्मिका ॥ ५ ॥

स एवायमित्यर्थः, यत्र=क्व चन, अन्यस्मिन्निति । अपूर्वस्मिन्विषये पुंसि स्त्रियां वा, स एवायमिति पूर्वप्रीत्यध्यारोपणाय स्त्रियाः पुंसो वा चित्तवृत्तिः, प्रीतिकारण इति। प्रीतिहेतावध्यारोपणनिबन्धनमेतत्, पूर्वप्रीतस्य ये गुणाः प्रीतिहेतवस्तेऽत्रापि सन्तीति दर्शयति, एवं च सा पूर्वप्रीतिः संप्रत्ययादुत्पन्नस्वभावत्वात्सम्प्रत्ययात्मिका, तन्त्रज्ञैः=कामसूत्रविद्भिः, कथ्यते, तथा च 'प्रियसादृश्यं गमनकारणम्, इति वक्ष्यति॥५॥

प्रत्यक्षा लोकतः सिद्धा या प्रीतिर्विषयात्मिका ।
प्रधानफलवत्त्वात्सा तदर्थाश्चेतरा अपि ॥ ६ ॥

शब्दादिविषयाननुकूलानालम्ब्य श्रोत्रादिद्वारेण या प्रीतिरुत्पद्यते सा विषयव्यवसायानुगतत्वात्प्रत्यक्षा सती लोकत एव सिद्धत्वान्नात्र लक्षणाभिनिवेशः, सा चैवंविधा नित्यनैमित्तिकनागरकवृत्ते द्रष्टव्या, प्रधानफलवत्त्वात्सेति । साक्षाद्विषयोपभोगफलेन युक्तत्वादित्यर्थः, इतरा अपि तिस्रस्तदर्थाश्चेति, विषयप्रीत्यर्था एव तदङ्गत्वात्, चशब्द एवकारार्थः ॥ ६ ॥

प्रीतीरेताः परामृश्य शास्त्रतः शास्त्रलक्षणाः ।
यो यथा वर्तते भावस्तं तथैव प्रयोजयेत् ॥ ७ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे प्रमाणकालभावेभ्यो रतावस्थापनं, प्रीतिविशेषा इति प्रथमोऽध्यायः ।
आदितः षष्ठः ।

चतस्रः शास्त्रतः परामृश्य निरूप्य, शास्त्रलक्षणा इति । तेषु तेषु स्थानेषु शास्त्रेणानेन लक्ष्यमाणत्वात्. यो यथा वर्तते भाव इति । कर्माभ्यासादीनां चतुर्णां प्रकाराणां येन प्रकारेण योऽभिप्रायो वर्तते स तेनव

प्रकारेण वर्तयेत् तज्जन्यप्रीत्यर्थमेव, तथा हि—अतथाप्रवर्तनादनीप्सिता प्रतिरप्रीतिरेव स्यात् ॥ ७ ॥

इति प्रीतिविशेषाः सप्तमं प्रकरणम् ।

आदितः षष्ठ इति । प्रथमाध्यायात्प्रभृति षष्ठोऽयमित्यर्थः, एवमुत्तरत्रापि योज्यम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधरराचितायां जयमङ्गलाख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे प्रमाणकालभावेभ्यो रतावस्थापनं प्रीतिविशेषाः प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

एवं रतमवस्थाप्य तदङ्गभूतां चतुःषष्टिं निर्दिदिक्षुराह—

**संप्रयोगाङ्गं चतुःषष्टिरित्याचक्षते चतुःषष्टिप्रकरणत्वात् ॥ १ ॥**

संप्रयोगस्य चतुःषष्ट्यात्मकत्वात्तस्याङ्गं चतुःषष्टिरित्याचक्षते पूर्वाचार्यास्तस्मात्तां वक्ष्यामः ॥ १ ॥

तत्र चतुःषष्टिशब्दः शास्त्रे तदेकदेशे वा वर्तते, उभयथाऽपि व्यवहाराङ्गमिति दर्शयन्नाह—

**शास्त्रमेवेदं चतुःषष्टिरित्याचार्यवादः ॥ २ ॥**

शास्त्रमेवेदमिति । इदमिति शास्त्रमाह, तच्च संप्रयोगस्याङ्गम्, तदुपायस्य तन्त्रावापाख्यस्य प्रकाशनात्, आचार्यवाद इति । शब्दविदो ह्याचार्या एवंविधमेव किञ्चिन्निमित्तमाश्रित्य चतुःषष्टिशब्दस्य प्रवृत्तिं वदन्ति तच्चेहाप्यस्तीति ॥ २ ॥

शास्त्रैकदेशे वा विद्यासमुद्देशे वर्तत इत्याह—

**कलानां चतुःषष्टित्वात्तासां च संप्रयोगाङ्गभूतत्वात्कलासमूहो वा चतुःषष्टिरिति ॥ २ ॥**

अत्र हि गीतादयः कलाश्चतुःषष्टिरुक्ताः, ततस्तत्समूहो वा संप्रयोगाङ्गम् ॥ ३ ॥

**ऋचां दशतयीनां च संज्ञितत्वादिहापि तदर्थसंबन्धात् पञ्चालसंबन्धाच्च बह्वृचैरेषा पूजाऽर्थं संज्ञा प्रवर्तितेत्येके ॥ ३ ॥**

चतुःषष्टिः सांप्रयोगिके वा शास्त्रैकदेशे वर्तते तत्र हि पाञ्चालिकी चतुःषष्टिः कथ्यते, कथं ताश्चतुःषष्टिरित्याह—दशतयीनां चेति । दशावयवा मण्डलानि यासामृचाम्, इत्यवयवे तयप्, दशतय्यस्ताश्चतुःषष्टिरि-

ति संज्ञिताः, इहापीति । संप्रयोगाङ्गे, तदर्थसम्बन्धादिति । दशावयवमण्डलार्थसम्बन्धात्, चतुःषष्टिरिति संज्ञा प्रवर्तत इति सम्बन्धः, संप्रयोगाङ्गं हि दशावयवम्, यथोक्तम्—

'आलिङ्गनं चुम्बनदन्तकर्मनखक्षतं सीत्कृतपाणिघातम् ।
संवेशनं चोपसृतोपरिष्टं नरायितं चेति दशाङ्गमाहुः' ॥ इति,

पञ्चालसम्बन्धाच्च प्रवर्तिता, पञ्चालेन महर्षिणा ऋग्वेदे चतुःषष्टिर्निगदिता, बाभ्रव्येणापि पाञ्चालेन स्वकृते सांप्रयोगिकेऽधिकरणआलिङ्गनादय उक्ताः, ततश्च द्वयोरप्येकगोत्रनिमित्तसमाख्येन पाञ्चालेन निगदनात्सम्बन्धोऽस्ति, पूजाऽर्थेति। उभयोरपि पक्षयो ऋग्वेदैकदेशवर्त्तिन्यपि संज्ञा बह्वृचैरभीष्टाचारैरालिङ्गनादिषु पूजार्था प्रवर्तितेति केचिदाहुः, "तत्पूजां च वक्ष्यति—

'विद्वद्भिः पूजितामेतां खलैरपि सुपूजिताम् ।
पूजितां गणिकासंघैर्नन्दिनीं को न पूजयेत्' ॥ इति ॥ ४ ॥

आलिङ्गनचुम्बननखच्छेद्यदशनच्छेद्यसंवेशनसीत्कृतपुरुषायितौपरिष्टिकानामष्टानामष्टधा विकल्पभेदादष्टावष्टकाश्चतुःषष्टिरिति बाभ्रवीयाः ॥ ५ ॥

आलिङ्गनेत्यादि । बाभ्रव्यस्य शिष्याः पुनरन्वर्थतामाहुः-अष्टधा विकल्पभेदादिति । एकैकस्याष्टधा विकल्पभेदादित्यर्थः, ततश्चाष्टौ सन्तोऽष्टगुणा अष्टावष्टकाश्चतुःषष्टिः ॥ ५ ॥

विकल्पवर्गाणामष्टानां न्यूनाधिकत्वदर्शनात्प्रहणनविरुतपुरुषापसृप्तचित्ररतादीनामन्येषामपि वर्गाणामिह प्रवेशनात्प्रायोवादोऽयं यथा सप्तपर्णो वृक्षः पञ्चवर्णो बलिरिति वात्स्यायनः ॥ ६ ॥

विकल्पेति । न्यूनाधिकत्वदर्शनादिति । आलिङ्गनादीनां ये विकल्पवर्गा वक्ष्यमाणास्तेषां, कस्यचिदूनत्वं दृश्यते पुरुषायितस्य, केषाञ्चिदाधिक्यमेवालिङ्गनादीनाम्, ततश्च नाष्टावष्टावेव, विकल्पवर्गाणामष्टानांन्यूनाधिकत्वदर्शनाद्, अन्येषामपीति । प्रकृतत्वाच्चुम्बनादीनाम्, तेभ्योऽन्येषामपि प्रहणनविरुतपुरुषोपसृप्तचित्ररतादीनामिति सम्बन्धः, न तु प्रहणनादिभ्यश्चतुर्भ्योऽन्येषामपीति तेषामसम्भवाद्, इहेति । 'अष्टवर्गे प्रवेशनादेतान्यपि हि संप्रयोगोऽपेक्षते, ततश्च नाष्टावेवाष्टधा, कथं तर्ह्युक्तमित्याह-प्रायोवादोऽयमिति । प्रायिकमेतद्वचनम्, कथमित्याह-यथेति । पर्णानां न्यूनत्वेऽपि पर्णानां च बहुत्वेऽपि बाहुल्येन क्व चिद्-

र्शनात्तद्व्यपदेशो रूढिवशात्, तथाऽष्टानां बाहुल्येनाष्टधा भेदात्तद्व्यपदेशो-नाष्टावेवेति ॥ ६ ॥

तत्र शास्त्रस्य चतुःषष्ट्याः प्रस्तुतत्वात्कलासमूहस्य च विद्यासमुद्देशे समुद्दिष्टत्वात्पाञ्चालिकीं चतुःषष्टिमाह—तत्रालिङ्गनपूर्वकत्वाच्चुम्बनादीनामालिङ्गनविचारा उच्यन्ते, विचाराश्च कालस्वरूपाभ्याम्, तत्रालिङ्गनमसमागते समागते च, तत्र पूर्वमधिकृत्याह—

**तत्रासमागतयोः प्रीतिलिङ्गद्योतनार्थमालिङ्गनचतुष्टयं स्पृष्टकं, विद्धकम्, उद्घृष्टकम्, पीडितकमिति ॥ ७ ॥**

असमागतयोरिति । असंघटितपूर्वयोः संजिघटयिष्वोः, प्रीतिलिङ्गद्योतनार्थमिति । अनुरागस्य लिङ्गिनः; स्पृष्टकादि लिङ्गम्, तत्प्रकाशनात्, तदभियोगकाले द्रष्टव्यम्, स्पर्शगोचरे सति तदभावे सति संक्रान्तकमाभियोगिकं वक्ष्यति ॥ ७ ॥

**सर्वत्र संज्ञाऽर्थेनैव कर्मातिदेशः ॥ ८ ॥**

सर्वत्रेति । चुम्बनादिष्वपि संज्ञाऽर्थेन कर्मातिदेश इत्यन्वर्थतां दर्शयति, स्पृष्टकादिसंज्ञानां प्रवृत्तिनिमित्तार्थः स्पर्शनादिकः, तेनैव कामातिदेश-इदमेव कार्यमिति ॥ ८ ॥

**संमुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्य स्पर्शनं स्पृष्टकम् ॥ ९ ॥**

संमुखागतायामिति । नायिकायामभिमुखमागतायाम्, प्रयोज्यायामिति, आलिङ्गनादि प्रयोजयितुं, तत्र वा प्रयोक्तुं या शक्यते, अन्यापदेशेनेति । अन्यदपदिश्यागच्छतः प्रयोक्तुः, यथाऽन्यो न जानाति बुद्धिकारितमस्येति, गात्रेण स्वगात्रस्य प्रयोज्यायाः स्पर्शनमिति संज्ञात्वेन कर्मातिदिशति, स्पृष्टकमिति 'नपुंसके भावे क्तः' । ३ । ३ । १४ । पश्चात् 'संज्ञायां कन्' ।५।३।८७। एवमुत्तरत्रापि योज्यम्, अस्याः संमुखागते नायके नायिकाऽपि प्रयोक्त्री ॥ ९ ॥

**प्रयोज्यं नायिका स्थितमुपविष्टं वा विजने किंचिद् गृह्णती पयोधरेण विध्येन्नायकोऽपि तामवपीड्य गृह्णीयादिति विद्धकम् ॥ १० ॥**

नायिका प्रयोक्त्री प्रयोज्यं नायकं स्थितमुपविष्टं वा न गच्छेत् तत्प्रयोक्तुमप्रयोगात्, न संविष्टम् असंगतत्वाद् विजने, अन्यत्र तु स्तनप्रदर्शनस्यापि दुर्लभत्वात्, अथ व्यधनोपायमाह—किञ्चिदिति । तद्धस्तात्तत्समीपे वा किञ्चिदर्थजातमाददाना, पयोधरेणेति । शृङ्गारित्वात् स्तनग्रहणस्य । स्तनेनांसकूटादिनाऽपविध्येदिति वक्षसि पृष्ठपार्श्वयोर्वा यथास-

म्भवं प्राप्तेष्वङ्गेषु सा तमाक्षिपेदित्यर्थः, नायकोऽप्यपविध्यमानस्तां तथा बहुशो व्याम्रियमाणां पार्श्वयोस्तद्भावित्वात्स्तनग्रहणनस्य स्वेनांसकूटेनापविध्येदिति वक्षसि पृष्ठे पार्श्वयोरेकेन बाहुपाशेन पुरस्ताद् द्वाभ्यां पृष्ठतश्च प्रतिनिवृत्ताभ्यामवपीड्य गृह्णीयाद् , यथा कथञ्चिदनुरागं मयि यदि प्रकाशेत मामपविध्यतीति, एवं च द्वयोः स्तनस्य शल्यवदन्तःप्रविष्टत्वाद्विद्धकं भवतीति, क्षेपणं तु केवलमपविद्धकं नाम तदेकशत्वादत्रैवान्तर्गतम् , अस्य नायिकैव प्रयोक्त्री, विद्धकस्योभयजन्यत्वाद् द्वावपि, तथा चोक्तम्—

'विचेष्टितापविद्धेन कामिनी स्तनशालिनी ।
विद्धकेनेतरस्तत्र कचाकर्षणकर्मणि' ॥ इति ॥ १० ॥

तदुभयमनतिप्रवृत्तसंभाषणयोः ॥ ११ ॥

तदुभयमिति । स्पृष्टकं विद्धकं च, अनतिप्रवृत्तसम्भाषणयोरेवासमागतयोः, तत्रोभयस्य साधयितुं शक्यत्वाद्, अतिप्रवृत्तसम्भाषणयोस्तु न सिद्धमेव, अप्रवृत्तसम्भाषणयोः पुनः साधयितुमशक्यत्वादशक्यमेव विज्ञेयम् ॥ ११ ॥

तमसि जनसंबाधे विजने वाऽथ शनकैर्गच्छतोर्नातिह्रस्वकालमुद्धर्षणं परस्परस्य गात्राणामुद्घृष्टकम् ॥ १२ ॥

जनसंबाध इति । जनसंकुले, अन्धकारादिषु शङ्काऽभावात्प्रयोगसौकर्यम् , तथा शनैर्गमनमपि युक्तम् , एवं च सति नातिह्रस्वकालं चिरकालमुद्धर्षणं सिद्धं भवति, परस्परस्येति । नायकगात्रेण नायिकागात्रस्य तद्गात्रेण चेतरगात्रस्य घर्षणमुद्घृष्टकमुभयजन्यम् , एकनिष्पाद्यं तु घृष्टकं नाम तत्रैवान्तर्गतम् ॥ १२ ॥

तदेव कुड्यसन्दंशेन स्तम्भसन्दंशेन वा स्फुटकमवपीडयेदिति पीडितकम् ॥ १३ ॥

तदेवेति । उद्घृष्टकं पीडितकं भवति, कथमित्याह—कुड्यसन्दंशेनेति । सन्दंश उभयतो ग्रहणम् , अर्थान्नायकः परतः कुड्यं स्तम्भो वा, तेन स्फुटकं दृढमवपीडिते सति तत्पीडितकमेकजन्यमेव द्विविधम् ॥ १३ ॥

तदुभयमवगतपरस्पराकारयोः ॥ १४ ॥

उभयमुद्घृष्टकं पीडितकं च द्रष्टव्यम्, अवगतपरस्पराकारयोरिति । गृहीतान्योन्यभावयोः समागतयोः, पूर्वस्मादनयोरधिकोपक्रमत्वाद् , अगृहीताकारयोस्तु नैवेत्यर्थोक्तम् ॥ १४ ॥

लतावेष्टितकं वृक्षाधिरूढकं तिलतण्डुलकं क्षीरनीरकमिति चत्वारि संप्रयोगकाले ॥ १५ ॥

संप्रयोगकाल इति । कृतार्द्रीकरणयोस्तु समागतयोः संप्रयोगः, तत्काले चत्वार्युपगूहनानि, तत्राद्ययोरेकजन्यत्वेऽपि नायिकैव प्रयोक्त्री तदनुरूपत्वात्, शेषयोरुभयजन्यत्वादुभावपि ॥ १५ ॥

लतेव शालमावेष्टयन्ती चुम्बनार्थं मुखमवनमयेदुद्धृत्य मन्दसीत्कृता तमाश्रिता वा किञ्चिद्रामणीयकं पश्येत् तल्लतावेष्टितकम् ॥ १६ ॥

लतेव शालमिति । यथा लता वृक्षमावेष्टते तद्वन्नायिका नायकमू(१)र्ध्वस्थितमभिमु(२)खं कक्षयोः कण्ठे बाहुलताभ्यामावेष्ट्येति च(३)तुर्विधं लतावेष्टितकम्, चुम्बनार्थिनी तन्मुखमवनमयेद्, नायकवृक्षस्योच्चत्वात्, तथा श्लिष्टाभ्यामेव बाहुपाशाभ्यां तच्छरीरावनमनान्मुखमवनमितं भवति, अनेन प्रयोगफलं दर्शयति, अत्र प्रयोक्त्र्याः चुम्बनफलस्यापरस्य विवक्षितत्वाद्, मौलन्तु फलं प्रयोगः; स यद्रागस्य जननं वर्धनं च, मन्दसीत्कृतेति । सीत्कृतं वक्ष्यति तन्मन्दं यस्याः, उल्वणस्य रागकालभावित्वाद्, अनेन प्रयोगसंस्कारमाह, प्रयोगान्तरपरिष्कृतं सुतरां मनोहारि स्यात्, तमाश्रिता वेति द्वितीयं फलम्, यद्वा तथैव नायकमाश्रिता, अन्यत्र आलेख्यादेस्तन्मुखस्य दशनपदाङ्कितस्य वा रामणीयकमुन्मुखी पश्येत्तल्लतावेष्टितमिव लतावेष्टितकम्, प्रतिकृतौ कन् ॥ १६ ॥

चरणेन चरणमाक्रम्य द्वितीयेनोरुदेशमाक्रमन्ती वेष्टयन्ती वा तत्पृष्ठसक्तैकबाहुर्द्वितीयेनांसमवनमयन्तीषन्मन्दसीत्कृतकूजिता चुम्बनार्थमेवाधिरोढुमिच्छेदिति वृक्षाधिरूढकम् ॥ १७ ॥

चरणेनेति । स्वेन चरणेन नायकस्य चरणमाक्रम्य; द्वितीयेन च(४)-

(१) शयनसमये । (२) स्थितानुपवेशे च ।

(३) कक्षाश्लिष्टबाहुकं कण्ठाश्लिष्टबाहुकं चेति द्विधा । द्वयमप्यूर्ध्वस्थितावभिमुखस्थितौ चेति चतुर्विधम्, यद्यपि स्थित्युपवेशनावान्तरभेदकादरेणाभिमुखपक्षत एव चातुर्विध्यादूर्ध्वस्थितितस्तु षाड्विध्यप्रसक्त्या चतुर्विधोक्तिरसंगतैव स्यात्तथाऽपि स्थितोपविष्टावभिमुखत्वेनानुगमय्य सोक्तिः संगमनीया, इदमपि फलस्य भेदकत्वाविवक्षापक्षेऽन्यथा तु चुम्बनरामणीयकदर्शनभेदादष्टत्वं द्वादशत्वं वा स्यादिति भावः ।

(४) उत्तरकल्पविभेदार्थं नायकपादावन्तरा निवेशितेनेतिभावः ।

रणेनोरुदेशपार्श्वभागेनाक्रमन्ती यथा जघनस्थलं संश्लिष्टं स्यात्, तद् वामदक्षिणभेदाद् द्विविधम्, वेष्टयन्ती वेति । बहिर्नीत्या द्वितीयोरुदेशपार्श्वभागमानमयेच्चरणमित्यर्थः, तदपि वामदक्षिणभेदाद् द्विविधम्, द्वाभ्यां च यदाऽऽक्रमणमूर्वोर्वेष्टनं वा तदुभयमपि वृक्षाधिरूढकमत्रैवान्तर्गतं, सामान्यविधिमाह—तत्पृष्ठसक्तैकबाहुरिति । नायकपृष्ठे लतावेष्टनवल्लग्न एको बाहुर्वामो दक्षिणो वा यस्याः, द्वितीयेन बाहुनाऽस्य स्कन्धभागमवनमयन्ती, ईषदिति । अनुरागकालत्वाद् मन्दानि रतान्तखिन्नानि सीत्कृतादीनि यस्या इत्यर्थः, अनेन संप्रयोगसंस्कारमाह, अत्र सीत्कृतं सीत्करणमेव, कूजितस्य लक्षणं वक्ष्यति, चुम्बनार्थमेव न रामणीयकदर्शनार्थम्, अनारुह्यापि तस्य संभवाद्, अधरपल्लवचुम्बनं तु नानारुह्येति प्रयोगफलम्, वृक्षाधिरूढकमिति पूर्ववत् ॥ १७ ॥

**तदुभयं स्थितकर्म ॥ १८ ॥**

तदुभयं स्थितकर्मेति । ऊ(१)र्ध्वस्थितयोर्यत्र योगः स्याद्, द्वाभ्यां रागजननार्थं तावदिदं कर्म ॥ १८ ॥

**शयनगतावेवोरुव्यत्यासं भुजव्यत्यासं च ससंघर्षमिव घनं संस्वजेते तत्तिलतण्डुलकम् ॥ १९ ॥**

शयनगतावेवेति । अत्रोरुव्यत्यासं भुजव्यत्यासं चेति क्रियाविशेषणम्, व्यत्यासो विपर्यासः, तत्र वामपार्श्वसुप्तायाः स्त्रिया ऊर्वन्तरे दक्षिणपार्श्वे सुप्तः पुमान्वाममूरुम्, दक्षिणकक्षान्तरे च वामभुजं प्रवेशयेद्, योषिदपि पुंस इत्येको व्यत्यासः, इतरपार्श्वसुप्तायाः स्त्रिया ऊर्वन्तरे वामपार्श्वे सुप्तः पुरुषो दक्षिणोरुं वामकक्षान्तरे च दक्षिणभुजं प्रवेशयेद्, योषिदपि पुंस इति द्वितीयो व्यत्यासः, द्वितीयस्य संघर्षार्थमिव घनं निरन्तरं संस्वजेते स्त्रीपुंसावुपगूहेते इति । तिलतण्डुलकमिति । ऊरूभुजानां तनुस्थानां तिलतण्डुलानामिवोर्ध्वस्थित्या संमिश्रणात् ॥ १९ ॥

**रागान्धावनपेक्षितात्ययौ परस्परमनुविशत इवोत्सङ्गगतायामभिमुखोपविष्टायां शयने वेति क्षीरजलकम् ॥ २० ॥**

अनपेक्षितात्ययाविति । रागान्धत्वादनपेक्षितास्थिभङ्गदोषौ परिष्वजमानौ परस्परमनुप्रविशत इव, बाहुयन्त्रेणातिपीडनान्मृतिप-

(१) रागवृद्धिसमयात् प्राक् स्थितयोर्नायकयोरित्येवार्थः, "तदुभयं रागकाले" ।२१। इति सूत्रस्वरसात् ।

ण्डाविव क्षीरोदकवच्च तादात्म्यं प्रतिपद्येते इव, यथोक्तम्—

'भावासक्ताः कामुकाः कामिनीनामिच्छन्त्यङ्गेष्वम्भसीव प्रवेष्टुम्' इति,

कथमिदं निष्पद्यत इत्याह—उत्सङ्गगतायामिति । नायकोत्सङ्गे बहिरूरू विन्यस्याभिमुखमुपविष्टायाँ सत्याम्, अत्र कक्षयोर्यथायोगं-संश्लिष्टमुभयोर्बाहुयन्त्रं स्यात्, शयने वेति । पार्श्वसुप्तयोरित्यर्थः, तिलतण्डुलकं पुनरत्रैव ॥ २० ॥

तदुभयं रागकाले ॥ २१ ॥

तदुभयमिति । रागस्य वृद्धत्वात्तत्काल एव द्रष्टव्यम्, संप्रयोगकालविशेषश्च रागकालः, यत्र पुंसः स्थिरलिङ्गता, स्त्रियाश्च क्लिन्नसंबाधता, तत्र च यन्त्रयोगात्प्राग्यथोक्तमेवालिङ्गनम्, यन्त्रयोजनेन तु संवेशनप्रकारानुरोधाद्योज्यम् ॥ २१ ॥

इत्युपगूहनयोगा बाभ्रवीयाः ॥ २२ ॥

बाभ्रवीया इति । बाभ्रव्येन प्रोक्ता उपगूहनप्रकाराः ॥ २२ ॥

सुवर्णनाभस्य त्वधिकमेकाङ्गोपगूहनचतुष्टयम् ॥ २३ ॥

सुवर्णनाभस्य बाभ्रवीयादुपगूहनाष्टकादनेन विकल्पवर्गस्याधिक्यं-दर्शयति, एकाङ्गोपगूहनचतुष्टयं संप्रयोगकाल इति वर्तते, एकेनाङ्गेन सजातीयस्याङ्गस्य प्राधान्येन संश्लेषणात्तथोक्तम् ॥ २३ ॥

तत्रोरुसंदंशेनैकमूरुमूरुद्वयं वा सर्वप्राणं पीडयेदित्यूरूपगूहनम् ॥ २४ ॥

एकमूरुमूरुद्वयं वेति । पार्श्वसुप्तस्य पुंसः स्त्रियश्चात्र विशेषाभावाद् द्वयोरपि प्रयोक्तृत्वम्, यस्योरुस्थलमतिविपुलं स प्रयोक्तेति केचित्, सर्वप्राणमिति क्रियाविशेषणम्, अतिपीडनं हि मांसलस्थानेऽत्यन्तसुखकारि स्यात् ॥ २४ ॥

घनेन जघनमवपीड्य प्रकीर्यमाणकेशहस्ता नखदशनप्रहणनचुम्बनप्रयोजनाय तदुपरि लङ्घयेत्तज्जघनोपगूहनम् ॥ २५ ॥

जघनेन जघनमिति । पार्श्वशयनेन वराङ्गेण साधनं बाडवकेनापीड्येत्येकः प्रकारः, जघनेन यन्त्रस्यायोगे योगे वा जघनमवपीड्येति-द्वितीयः, तत्र स्त्रीजघनस्यातिशृङ्गारत्वात्सैव शोभते, विशेषतो विपुलजघना, प्रकीर्यमाणकेशहस्तेति प्रयोगसंस्कारः, नखादीनि स्वेच्छया-प्रयोक्ष्यामीति, तत्प्रयोजनं तु फलम्, उपरिलङ्घयेन्नायकस्योपरि तिष्ठेदित्यर्थः ॥ २५ ॥

स्तनाभ्यामुरः प्रविश्य तत्रैव भारमारोपयेदिति स्तनालिङ्गनम्॥२६॥

स्तनाभ्यामुर इति । आसने पार्श्वशयने वा पृष्ठभागं निम्नीकृत्य स्तनाभ्यां नायकोरः स्थलं प्रविश्य, तत्रैवेति । उरसि; भारमारोपयेत्, स्तनस्येत्यर्थाद्, एवं हि नायकः स्तनभाराक्रान्तः पिण्डीकृतमिवोरसि स्पर्शसुखमनुभवति ॥ २६ ॥

मुखे मुखमासज्याक्षिणी अक्ष्णोर्ललाटेन ललाटमाहन्यात्सा ललाटिका ॥ २७ ॥

उत्तानसंपुटे पार्श्वसंपुटे वा वक्त्रे वक्त्रं संयोज्य, अक्ष्णोरक्षिणी दृष्ट्या लक्ष्यीकरणेनासज्य, नासिकाया मुखनयनमध्यानुवर्तित्वात्तत्संयोजनमर्थोक्तम्, ललाटे ललाटं द्विस्त्रिराहन्यादाहत्य च तत्रैव भारमारोपयेदित्येवमस्य नायिका प्रयोक्त्री, तेन ललाटिकेव ललाटिका, नायकललाटस्य संक्रान्तिविशेषेणालंक्रियमाणत्वात् ॥ २७ ॥

संवाहनमप्युपगूहनप्रकारमित्येके मन्यन्ते संस्पर्शत्वात् ॥२८॥

संवाहनमपीति । त्वङ्मांसास्थिसुखकरणेन त्रिविधं संवाहनमङ्गमर्दनम्, तदपि संस्पर्शयुक्तत्वादुपगूहनप्रकारमेव द्रष्टव्यमित्येके ॥ २८ ॥

पृथक्कालत्वाद्भिन्नप्रयोजनत्वादसाधारणत्वान्नेति वात्स्यायनः ॥ २९ ॥

पृथक्कालत्वादिति । पृथक्कालोऽस्येति पृथक्कालम्, उपगूहनात्संस्पर्शित्वेनाभेदेऽपि संवाहनं कालतो भिन्नम्, भिन्नप्रयोजनत्वात् पृथक् फलकत्वाद् असाधारणत्वाद्, उपगूहनं ह्यन्यतरप्रयुक्तं द्वयोरप्येकस्मिन्काले कार्यकारीति साधारणम्, संवाहनं तु पुंसा प्रयुक्तं स्त्रियाः कार्यकारि स्त्रिया च नायकस्येत्यसाधारणम् ; अतो गीतादिचतुःषष्ट्याम् 'उत्सादने केशमर्दने च कौशलम्' इत्यत्र द्रष्टव्यम्, संस्पर्शत्वे च चुम्बनादीनामपि तद्विकारत्वप्रसङ्गात् ॥ २९ ॥

आलिङ्गनविधावादरार्थमाह—

पृच्छतां शृण्वतां वाऽपि तथा कथयतामपि ।
उपगूहविधिं कृत्स्नं रिरंसा जायते नृणाम् ॥ ३० ॥

पृच्छतामिति । पृच्छतां ज्ञातुं, शृण्वतां पार्श्वस्थानां, कथयतां परेभ्यः, उपगूहविधिमिति । उपगूहनमुपगूहः, भावे घञ् वा, कृत्स्नं निरवशेषम् ; क्व चित्कस्य चिदभिप्रायाद्, रिरंसा रन्तुमिच्छा संजायते, किं पुनर्ये प्रयुञ्जते ॥ ३० ॥

अनुक्तातिदेशमाह—

येऽपि ह्यशास्त्रिताः केचित्संयोगा रागवर्धनाः ।
आदरेणैव तेऽप्यत्र प्रयोज्याः सांप्रयोगिकाः ॥ ३१ ॥

येऽपीति । अभिधायकत्वेन शास्त्रं संजातं येषां ते शास्त्रिताः, ये नैवंविधाः किं तु स्वेच्छयोत्प्रेक्षिताः संयोगाः संश्लेषाः, आदरेणैव, अवज्ञया न, अशास्त्रिता अपि अत्र ते सुरते रागवर्धनत्वात्प्रयोज्याः, सांप्रयोगिकाः, संप्रयोगप्रयोजनाः ॥ ३१ ॥

किमित्यशास्त्रिताः प्रयोज्या इत्याह—

शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः ।
रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः ॥ ३२ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरण-
आलिङ्गनविचारो द्वितीयोऽध्यायः ।
आदितः सप्तमः ।

शास्त्राणामिति । अप्रवृद्धरागा हि शास्त्रोक्तप्रयोगक्रमं चापेक्षमाणाः शास्त्राणां विषयः, रतिचक्रे रागोत्पीडे प्रवृत्ते तद्वशादशास्त्रितानामप्यनुष्ठानात्तदानीं न शास्त्रं स्यान्नापि क्रमः संयोगानां पौर्वापर्यमुच्चावचेन प्रवर्तनम्, तस्मान्मा भूच्छास्त्रस्य क्रमस्य चानर्थक्यमित्यनुक्तमतिदिश्यते ॥ ३२ ॥

इत्युपगूहनविचारोऽष्टमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाख्यायां सांप्रयोगिके द्वितीयेऽधिकरण आलिङ्गनविचारो द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः ।

एवं परिरभ्य चुम्बनादयः प्रयोक्तव्याः, तत्रापि किं प्राक्चुम्बनं नखच्छेद्यं दशनच्छेद्यं वा पश्चादिति नास्त्येषां प्रयोगक्रम इत्याह—

चुम्बननखदशनच्छेद्यानां न पौर्वापर्यमस्ति रागयोगात् ॥१॥

न पौर्वापर्यमिति । रागयोगादिति रागवशाद्, रागाविष्टो हि न क्रममपेक्षते ॥ १ ॥

प्राक्संयोगादेषां प्राधान्येन प्रयोगः, प्रहणनसीत्कृतयोश्च संप्रयोगे ॥ २ ॥

अयं तु विशेषः—यदेषां प्राक्संयोगात्=प्राग्यन्त्रयोगात्, यन्त्रयोगे प्राधान्येन बाहुल्येन रागाभ्यासाद्वा प्रबोधनार्थं प्रयोगो नायकाभ्यां· यन्त्रयोगे प्राधान्येनेत्यर्थोक्तम्, प्रहणनसीत्कृतयोस्तु संप्रयोगे यन्त्रयोगे प्राधान्येन प्रयोग इत्येव, तदा हि प्रवृद्धरागयोः प्राधान्येन घातसहत्वम्, प्रहणनबाहुल्ये च तदुद्भवस्य सीत्कृतस्यापि बाहुल्यं, प्रागप्राधान्येनेत्यर्थोक्तम् ॥ २ ॥

एकीयमतमेतदुत्तरपक्षदर्शनाद्, यदाह—

सर्वं सर्वत्र रागस्यानपेक्षितत्वादिति वात्स्यायनः ॥ ३ ॥

सत्र सर्वत्रेति । चुम्बनादिपञ्चकं प्राक्प्रयोगे च प्राधान्येन प्रयोक्तव्यम्, रागस्यानपेक्षितत्वादिति चण्डवेगो हि न प्राधान्येनाप्राधान्येन वा प्रयोगमपेक्षते, मन्दमध्यवेगयोस्तु पूर्व एव पक्षः ॥ ३ ॥

अयं तु विशेषः पक्षद्वयेऽपि तुल्य इत्याह—

तानि प्रथमरते नातिव्यक्तानि विश्रब्धिकायां विकल्पेन च प्रयुञ्जीत तथाभूतत्वाद्रागस्य ॥ ४ ॥

तानि चुम्बनादीनि पञ्च, प्रथमरत इति । रतस्यारम्भे, नातिव्यक्तानि नातिस्फुटानि, यथालक्षणस्यासमापनाद्, नातित्वरितेन विश्रब्धिकायां विकल्पेन चेति, इदं वेदं वेत्येकमेव प्रयुञ्जीत न समुच्चयेन, तद्यथा—चुम्बनं वा नखच्छेद्यं वा, चुम्बनं वा दशनच्छेद्यं वा, चुम्बनं वा प्रहणनं वा; चुम्बनं वा सीत्कृतं वे, ति चतुर्धा, नखच्छेद्यं त्रि(१)धा, दशनच्छेद्यं द्विधा(२), प्रहणनमे(३)कमेवेत्यनुलोमा दश, तावन्त एव प्रतिलो(४)माः, एक(५)त्र विंशतिः प्रयोगाः; तथाभूतत्वादिति । आरम्भकाले हि मन्दो रागः, ततश्च मध्यस्थचित्तता नातिसहिष्णुता चेति तदनुरूप एव प्रयोगः ॥ ४ ॥

ततः परमातित्वरया विशेषवत्समुच्चयेन रागसंधुक्षणार्थम् ॥५॥

(१) नखच्छेद्यं वा दशनच्छेद्यं वा, नखच्छेद्यं वा प्रहणनं वा, नखच्छेद्यं वा सीत्कृतं वा।

(२) दशनच्छेद्यं वा प्रहणनं वा, दशनच्छेद्यं वा सीत्कृतं वा,

(३) प्रहणनं वा सीत्कृतं वा ।

(४) दशसंख्यकाः, ते यथा—नखच्छेद्यं वा चुम्बनं वा, दशनच्छेद्यं वा चुम्बनं वा, प्रहणनं वा चुम्बनं वा, सीत्कृतं वा चुम्बनं वा । दशनच्छेद्यं वा नखच्छेद्यं वा, प्रहणनं वा नखच्छेद्यं वा, सत्कृतं वा नखच्छेद्यं वा । प्रहणनं वा दशनच्छेद्यं वां, सीत्कृतं वा दशनच्छेद्यं वा, । सीत्कृतं वा प्रहणनं वा ।

(५) अनुलोमप्रतिलोमसङ्कलने ।

ततः परमिति । आरम्भादुत्तरकालमधिको रागयोगः, शरीरेऽपि च निरपेक्षत्वमिति तदनुरूपमतित्वरया विशेषवद्विकल्पवर्गानुष्ठानात्समुच्चयेन चेत्यत्रापि विंशतिः प्रयोगाः, किमर्थमेवं प्रयुञ्जीतेत्याह—रागसंधुक्षणार्थमिति । अनेन क्रमेण रागो वर्धतइत्यर्थः, अन्यथा विच्छिन्नरसं रतं स्यादिति, एवं परस्परविश्रब्धयोर्न चुम्बनादीनां पौर्वापर्यम्, यदा तु विश्वासनार्थमुपक्रमस्तदाऽस्त्येवैषां पौर्वापर्यमुत्तरोत्तरस्याधिक्यात् सहसा कर्तुमशक्यत्वादिति ॥ ५ ॥

आलिङ्गनानन्तरं चुम्बनविकल्पा उच्यन्ते—ते च चुम्बनभेदा न च स्थानभेदं विनेत्याह—

ललाटालककपोलनयनवक्षःस्तनोष्ठान्तर्मुखेषु चुम्बनम् ॥ ६ ॥

ललाटेति । तत्र वक्षः पुरुषस्य, स्तनौ योषितः, शेषा उभयोरपि, ओष्ठमुत्तरमधरं च, अन्तर्मुखो मुखान्तस्ताल्वादि, तत्रान्तर्मुखे जिह्वया चुम्बनं वक्ष्यति, एतेष्वष्टसु स्थानेषु चुम्बनमविरुद्धत्वात्पूर्वाचार्याणां मतम् ॥ ६ ॥

ऊरुसंधिबाहुनाभिमूलेषु लाटानाम् ॥ ७ ॥

ऊरुसंधिबाहुनाभिमूलेष्विति । ऊरुसंधिर्वङ्क्षणम्, बाहुमूलं कक्षौ, तत्रापरं दशनकृतं वक्ष्यति, नाभिमूलं वराङ्गं पूर्वोक्तम्, लाटानामिति । तेषामेकादश स्थानानीति मतम् ॥ ७ ॥

रागवशाद्देशप्रवृत्तेश्च सन्ति तानि तानि स्थानानि, न तु सर्वजनप्रयोज्यानीति वात्स्यायनः ॥ ८ ॥

रागवशादिति । ये रागान्धास्ते देशप्रवृत्तानि स्थानानि चुम्बन्ति, देशप्रवृत्तेश्चेति । यथा लाटविषयप्रवृत्तत्वादूरुसंध्यादीनि तत्रत्याश्चुम्बन्ति तानि सन्ति न तु सर्वजनप्रयोज्यानि सर्वेण जनेन प्रयोक्तुमशक्यानि शिष्टैरशुचित्वादशक्यानि, तेषामष्टावेव स्थानानि ॥ ८ ॥

तत्र चुम्बनं मुकुलीकृतेन वक्त्रेण संयोजनमिति लोकप्रतीतम्, तत्र स्थानविशेषेण यद्ग्रहणकर्म तस्य, भेदेन चुम्बनभेदाः कथ्यन्ते, तत्र चुम्बनस्थानेष्वोष्ठस्य मुख्यत्वात्तत्र चुम्बनमुच्यते, तत्राप्युत्तराधरसंपुटकभेदात्त्रिविधम्, तत्र कर्मबहुत्वादधरमधिकृत्याह—

निमितकं स्फुरितकं घट्टितकमिति त्रीणि कन्याचुम्बनानि ॥९॥

कन्याचुम्बनानीति । सङ्गताऽप्यजातविश्रम्भत्वात्कन्यैव, नायिकैषां प्रयोक्त्री ॥ ९ ॥

बलात्कारेण नियुक्ता मुखे मुखमाधत्ते न तु विचेष्टत इति निमितकम् ॥ १० ॥

बलात्कारेण हठाच्चुम्बने नियुक्ता मुखे नायकस्य मुखं स्वमाधत्ते न्यस्यति लज्जया न विचेष्टतेऽधरग्रहणेन, निमितकमिति संज्ञायां कन्, चुम्बनक्रियामात्रत्वात्परिमितमित्यर्थः ॥ १० ॥

वदने प्रवेशितं चौष्ठं मनागपत्रपाऽनुग्रहीतुमिच्छन्ती स्पन्दयति स्वमोष्ठं नोत्तरमुत्सहत इति स्फुरितकम् ॥ ११ ॥

वदने नायिकायाः, प्रवेशितं चौष्ठं स्वमधरं नायकेन, किञ्चिच्छ्लथीकृतलज्जाऽनुग्रहीतुमिच्छन्ती, अनुग्रहणेन कथं तत्क्रियेतेति चेदाह—स्पन्दयतीति । स्वमोष्ठमधरं चलयतीति नोत्तरमोष्ठमुत्सहते, स्पन्दयितुमर्थात्, तमपि यदि चलयति गृह्णात्येवानुग्रहणेन, स्फुरितकमधरस्फुरणात् ॥ ११ ॥

ईषत्परिगृह्य विनिमीलितनयना करेण च तस्य नयने अवच्छादयन्ती जिह्वाऽग्रेण घट्टयतीति घट्टितकम् ॥ १२ ॥

ईषत्परिगृह्येति । सर्वथा त्रपाऽनपगमान् मनाग् नायकाधरमोष्ठाभ्यां समन्ततो गृहीत्वा, स्पष्टग्रहणात्समग्रहणनाम चुम्बनं वक्ष्यति, निमीलितनयना लज्जया जिह्वाऽग्रेण घट्टयन्ती सर्वतो भ्रमणेन स्पृशन्तीत्यर्थः, करेण नयने तस्यावच्छादयन्ती मैवमवस्थां मामयं द्राक्षीदिति, घट्टितकमधरघट्टनात्, सर्वत्र संज्ञाऽर्थेनैव कर्मातिदेश इत्यधिकृतौ वेदितव्यम्, एषामानुपूर्व्येणैव प्रयोग इति ॥ १२ ॥

इदानीं शेषाणां नायकानां कर्मभेदादधरचुम्बनाविकल्पानाह--

समं तिर्यगुद्भ्रान्तमवपीडितकमिति चतुर्विधमपरे ॥ १३ ॥

सममिति । ओष्ठपुटेनाधरे पञ्चधा ग्रहणम्, तत्र यत्सर्वमभिमुखं गृह्यते तत्समग्रहणम्, यत्साचीकृतेनोष्ठपुटेन सर्वं वर्तुलीकृत्य गृह्यते तत्तिर्यग्ग्रहणम्, यच्चिबुके शिरसि च गृहीत्वा मुखं भ्रमयित्वा गृह्यते तदुद्भ्रान्तम्, परस्पराधरग्रहणमित्यर्थः, तदेव त्रितयमवपीडितम्, अवपीड्य ग्रहणात्, पूर्वत्र न पीडनमिति विशेषः तत्रोष्ठाभ्यामेव यत्पीडितं तच्छुद्धपीडितम्, यज्जिह्वाऽग्रेण सह तदवलीढपीडितम्, तच्चूषणमधरपानं चेति नामद्वयेनोच्यते ॥ १३ ॥

पञ्चमं ग्रहणमाह—

अङ्गुलिसंपुटेन पिण्डीकृत्य निर्दशनमोष्ठपुटेनावपीडयेदित्यवपीडितकं पञ्चममपि करणम् ॥ १४ ॥

अङ्गुलिसंपुटेनेति । तर्जन्यङ्गुष्ठसंपुटेन, पिण्डीकृत्य गृहीत्वा, ततो निर्दशनं दशनव्यापारं विनोष्ठपुटेनावपीडयेद्, अत्र पीडनेऽपि बहिः पिण्डिताकर्षणं विशेषः, एवञ्च तदाकृष्टचुम्बननाम ग्रहणम् ॥१४॥

एवं कर्मभेदादष्टविधमधरचुम्बनमुक्तं त्रीणि कन्याचुम्बनानि पञ्च ग्रहणचुम्बनानीति, तत्र कर्षणचुम्बनभेदमशेषं समाप्यैवमवसरप्राप्तत्वादधरचुम्बने द्यूतमाह—

द्यूतं चात्र प्रवर्तयेत् ॥ १५ ॥

द्यूतं चेति । अत्रेत्यस्मिन्नधरचुम्बने, नान्यस्थाने चुम्बने, विशोभत्वाद् द्यूतमनुरागवर्धनार्थं स्यात् ॥ १५ ॥

तत्र जयपराजयफलत्वाद् द्यूतस्य लक्षणमाह—

पूर्वमधरसंपादनेन जितमिदं स्यात् ॥ १६ ॥

पूर्वमिति । आवयोः परस्परं चुम्बतोर्येन पूर्वं प्रथमतोऽधरस्य ग्रहणविधिना संपादनं कृतं तस्मिन्सति तेन जितम्, किं तदित्याह—इदमिति । अनेन द्वयोरभिमतपणं सूचयति, द्यूतं च कपटेनाकपटेन वा स्यात्, तत्र यल्लौकिकेनैव चुम्बनेन द्वावेव परस्परस्याधरं चुम्बतस्तदकपटं च वक्ष्यति, तत्र तस्मिन्नकपटे द्यूते प्रवृत्ते नायकेन पूर्वमन्यतमेन ग्रहणम्, चुम्बनेन गृहीताधरत्वाज्जिता, अकपटद्यूते नायिकाया अबलात्वात्सैव जिता शोभते, कपटद्यूते चास्यास्तदनुरूपत्वाज्जयं वक्ष्यति, नायकेन तु कपटद्यूते न जेतव्या, तस्या अननुरूपत्वात् ॥ १६ ॥

तत्रान्यतरस्य जयेऽपरस्य कलहोऽवश्यं भावी; द्यूतस्य कलहास्पदत्वादिति कलहयोजनं रागोद्दीपनार्थमाह—

तत्र जिता सार्धरुदितं करं विधुनुयात्प्रणुदेद्दशेत्परिवर्तयेद्बलादाहृता विवदेत पुनरप्यस्तु पण इति ब्रूयात्, तत्रापि जिता द्विगुणमायस्येत् ॥ १७ ॥

सार्धरुदितमिति । क्रियाविशेषणं चैतत्, अधरपीडोपख्यापनार्थं सहार्धरुदितेन कृतकेन करं विधुनुयात्कम्पयेत्, प्रणुदेत्तर्जयेद् भङ्गिवैलक्ष्यान्नायकं क्षिपेद्, दशेच्छ्लेषमधरग्रहणं बद्ध्वा दन्तैः खण्डयेत्, परिवर्तेत मुखेनाशङ्का चेत्कायेनाधरमोक्षार्थम्, विवदेत "नैव जिताऽस्मि मयैव जितमि"ति कलहायेत, पुनरस्त्वपरः पण इति । "पुनः क्रीडामः, पूर्वस्मात्पणादयमपरः पण" इति ब्रूयात्, तत्रापीति । द्वितीयेऽपि पणे, द्विगुणमायस्येदिति । करधूननाद्याधिक्येन कुर्यादित्यर्थः ॥१७॥

कपटद्यूतमाह—

विश्रब्धस्य प्रमत्तस्य वाऽधरमवगृह्य दशनान्तर्गतमनिर्गमं कृत्वा हसेदुत्क्रोशेत्तर्जयेद्वल्गेदाह्वयेन्नृत्येत्प्रनर्तितभ्रुणा च विचलनयनेन मुखेन विहसन्ती तानि तानि च ब्रूयादिति चुम्बनद्यूतकलहः ॥ १८ ॥

विश्रब्धस्येति । तस्मिन्नेव मुखचुम्बनद्यूतेऽन्तरा विश्रब्धिकया नायिका विश्रम्भयेत्, ततो विश्रब्धस्य प्रमत्तस्याप्रमत्तस्य वाऽकस्मादन्यत्र गतचेतसोऽधरमवगृह्यौष्ठसंपुटेन ततो दशनान्तर्गतमनिर्गमं कृत्वा यथा तदन्तर्गतमपि प्रमादान्न निर्गच्छति सापराधत्वात् पश्चाद् गृहीताधरा मुक्ताधरा वा यथासंभवमुत्तरं व्यापारमनुतिष्ठेद्, इतरत्रापि कपटद्यूते स्खलितप्रमादापेक्षयैव जयो दृष्टः; इत्येवं कपटेन जित्वा हसेत्, सशब्दमितरं वाऽत्यन्तपरितोषणाद्, उत्क्रोशेन्मया जितमिति फूत्कुर्याद्, यथाऽस्य मित्त्राणि शृण्वन्ति स्वसख्यो वा, तर्जयेत् "लब्धोऽसीदानीं खण्डयामि तेऽधरमि"ति, बलाद् हन्तुं सविलासं गात्राणि विक्षिपेद्, आह्वयेत्सखेदन्तमेवोपसृत्य "आगच्छ दर्श्यतां स्वपौरुषमि"ति, नृत्येत्तत्परितुष्ट्या, प्रनर्त्तितभ्रुणा चेति। एकोद्धारक्रमेण समुन्नमितभ्रणा मुखेनेति विहसितसंस्कारः, विहसन्ती कलहावसानत्वात्, तानि तानीति । यानि यथार्थयुक्तानि रागदीपनानि मन्यते, चुम्बनद्यूतकलह इति। अकपटे कपटे च चुम्बनद्यूते कलह उक्तः, यदि नायकोऽपि जेता जितो वा तथा चेष्टेत यथा कथं चित् कलहः स्यात्, तद्यथा—दृढमधरमवपीडयन् ससीत्कृतं च शिरो विधुनुयाद्, नुदन्तीमुपसर्पेत्। दशन्तीं प्रतिदशेत्, परिवर्तमानां प्रतिनिवर्तयेत्, विवदमानां प्रतिविवदेत, तिष्ठत्वयमपरः पण इति पूर्वकमेव तावत्प्रयच्छेति च ब्रूयात्, तत्रापि जेता द्विगुणमायस्येदिति पणद्वयसाधनार्थं साधयेत्, जितोऽपि वैलक्ष्याद्विहसेत्, जितं जितं मयेत्युत्क्रोशन्त्यां मिथ्या मिथ्येति प्रत्युत्क्रोशेत्, तर्जयन्तीं प्रतितर्जयेद् । वल्गन्तीं तद्गात्रसंयमनेन प्रतिवल्गयेद्, आह्वयन्तीं प्रत्याह्वयेत्, नृत्यन्तीं करतालिकया प्रतिनर्तयेत्, विहसन्तीं तानि तानि ब्रुवन्तीं तद्वचननिषेधार्थं प्रतिब्रूयादिति। यथा चोक्तम्—

'जितो वा यदि वा जेता चुम्बनद्यूतकर्मणि ।
तस्या एव विचेष्टाभिः कलहं प्रतियोजयेद्' इति ॥ १८ ॥

एतेन नखदशनच्छेद्यप्रहणनद्यूतकलहा व्याख्याताः ॥ १९ ॥

एतेनेति । चुम्बनद्यतेन कपटेनाकपटेन च, तत्राप्ययमेव विधिः, त-

यथा—पूर्वं नखच्छेद्यादिसंपादिते जितमिदं स्यादित्यादि, अत्र च द्यूतप्रवर्तनं नखदशनहस्तानां प्रहणनस्थानेष्वेव मोहनेन स्यात्, सीत्कृतद्यूतकलहस्तु पृथग् न संभवति, प्रहणनकलहे द्रष्टव्यस्तदुद्भवत्वात्, तत्र जेता ससीत्कृतं प्रहण्यात्, जीयमानश्च ससीत्कृतं प्रहणनं प्रतीच्छेत् ॥१९

चण्डवेगयोरेव त्वेषां प्रयोगः तत्सात्म्यात् ॥ २० ॥

एषामिति। कलहानाम्, तत्सात्म्यादिति। ईदृशैरेव चेष्टितैश्चण्डवेगयोः सात्म्यम्, न मन्दवेगयोः, तद्विमर्दाक्षमत्वात् ॥ २० ॥

तत उत्तरोष्ठविधिमाह—

तस्यां चुम्बन्त्यामयमप्युत्तरं गृह्णीयादित्युत्तरचुम्बितम् ॥२१॥

तस्यामिति। समग्रहणेन नायकाधरं चुम्बन्त्यां नायिकायामयमपि नायकः सङ्गादस्या उत्तरोष्ठं समग्रहणेन गृह्णीयाद्, उत्तरचुम्बितमुत्तरोष्ठग्रहणेन, प्रासङ्गिकमिदम्, केवलं तु न प्रयोक्तव्यं ग्राम्यत्वान्नासिकापुटपानवत्, प्रासङ्गिके च तिर्यग्ग्रहणादीनामसंभवाद्, एवमुत्तरचुम्बितमेकविधमेव ॥ २१ ॥

समग्रहणेनास्या नायिकाऽपि प्रयोक्त्री, यदि पुरुषो न जातव्यञ्जनस्तदा द्वयोरपि युगपद्विधिमाह—

ओष्ठसंदंशेनावगृह्यौष्ठद्वयमपि चुम्बेदिति संपुटकं स्त्रियाः, पुंसो वाऽजातव्यञ्जनस्य ॥ २२ ॥

ओष्ठसंदंशेनेति। उभाभ्यां ग्रहणं संदंशः, तेनौष्ठद्वयमवगृह्य वक्त्रान्तः प्रवेश्याभिचुम्बेदिति, सफूत्कारं स्वमोष्ठपुटं संकोचयेदित्यर्थः, सर्वत्र चुम्बनविधावायाते शब्दोच्चारणं कार्यम्, संपुटकमोष्ठद्वयग्रहणाद्, एतच्चतुर्विधम्—समं तिर्यगुद्भ्रान्तमवपीडितं च, आकृष्टं न योज्यमशोभित्वात्, स्त्रिया इति। पुंसा प्रयोक्तव्यम्, तदोष्ठयोर्निर्लोमत्वात्, स्त्रियाऽपि पुंसश्चाजातव्यञ्जनस्याप्ररूढश्मश्रोः इतरथा लोमभिर्वक्त्रपूरणमसुखावहं स्यात् ॥ २२ ॥

एवमोष्ठचुम्बनं त्रिविधमुक्त्वा संपुटान्तर्गतत्वादन्तर्मुखचुम्बनविकल्पानाह—

तस्मिन्नितरोऽपि जिह्वयाऽस्या दशनानि घट्टयेत्तालु जिह्वां चेति जिह्वायुद्धम् ॥ २३ ॥

तस्मिन्निति। संपुटचुम्बने, इतरो नायको नायिका वा यस्य संपुटकं प्रयोक्तुमिच्छति, प्रयोक्तुर्विवृतास्यत्वादुपर्यधश्च दशनानि जिह्वया घट्टयेत् संमार्जयेदित्यर्थः, तालु जिह्वयोर्ध्वप्रसारितया, जिह्वां-

वा ऋजुप्रसारतया घट्टयेद्, जिह्वायुद्धं च कुर्यादिति शेषः, परस्परप्रेरणेन, एतच्चतुर्विधम्--अन्तर्मुखचुम्बनं दशनचुम्बनं जिह्वाचुम्बनं-तालुचुम्बनं चेति ॥ २३ ॥

एतेन बलाद्वदनरदनग्रहणं दानं च व्याख्यातम् ॥ २४ ॥

एतेनेति । जिह्वायुद्धेन, वदनरदनग्रहणमिति । हठाद्वदनेन वदनस्य दशनैर्दशनानां ग्रहणे परस्परस्य युद्धमिति ग्रहणपूर्वकं वदन-युद्धं रदनयुद्धं च व्याख्यातं, दानं चेति । एकश्चुम्बयितुं हठाद्वदनं ददाति ग्राहयितुं वा दशनान्यन्यो गृह्णातीत्युभयोर्ग्रहणदानपूर्वकं वद-नयुद्धं चेति ॥ २४ ॥

समं पीडितमञ्चितं मृदु शेषाङ्गेषु चुम्बनं स्थानविशेषयोगादि-ति चुम्बनविशेषाः ॥ २५ ॥

शेषाङ्गेष्विति । ओष्ठान्तर्मुखेभ्योऽन्येषु ललाटादिस्थानेषु कर्मभेदा-त्समचुम्बनं पीडितचुम्बनमञ्चितचुम्बनं मृदुचुम्बनं चेति चतुर्विधं, स्थानविशेषयोगादिति । यद्यत्र प्रयुज्यते तत्तत्र स्यादित्यर्थः, तत्रोरुसं-धिकक्षावक्षःसु समं न पीडितं नातिमृदु, स्तनकपोलनाभिमूलेषु पीडि-तं, कुचयोः कक्षापर्यन्ते चुम्बनमञ्चितं, ललाटे नयनयोर्मृदु स्पर्श-मात्रकरणमिति, एवमेते कर्मभेदाच्चुम्बनभेदा उक्ताः ॥ २५ ॥

त एवावस्थाभेदान्नामान्तरं प्रतिपद्यन्त इत्याह—

सुप्तस्य मुखमवलोकयन्त्याः स्वाभिप्रायेण चुम्बनं रागदीपनम् ॥ २६ ॥

सुप्तस्येति । मुखमालोकयन्त्या इत्याहितभावत्वं दर्शयति, स्वाभिप्रा-येणेति । यथा स्वयं धृतिं लभते तथा चुम्बतीत्यर्थः, एवं च सति तस्या एव रागसंधुक्षणाद्रागदीपनं, नायकस्य च तथा चुम्ब्यमानस्य प्रतिबो-धाद् जाग्रतोऽप्येतत्सम्भवति, तत्र तदवस्थकं सांप्रयोगिकमेव स्यात् ॥२६॥

प्रमत्तस्य विवदमानस्य वाऽन्यतोऽभिमुखस्य सुप्ताभिमुखस्य वा निद्राव्याघातार्थं चलितकम् ॥ २७ ॥

निद्राव्याघातार्थमित्युपलक्षणमेतत्, प्रमत्तस्य गीतालेख्यादिषु प्र-सक्तस्य प्रमादव्याघातार्थं, विवदमानस्य तया सह कलहव्याघातार्थम्, अन्यतोऽभिमुखस्यान्यतो दृष्टिव्याघातार्थं, सुप्ताभिमुखस्य सुषुप्सतो-निद्राव्याघातार्थं चलितकमिति, प्रमादादिना नायकस्य चलनं चलि-तं, तत्करोति-' इति णिच्, तदन्ताच्चलयतीत्यच्, ततः संज्ञायां कन्, चलितकम्, अत्र नायिकैव प्रयोक्त्री शोभते ॥ २७ ॥

चिररात्रावागतस्य शयनसुप्तायाः स्वाभिप्रायचुम्बनं प्रातिबोधिकम् ॥ २८ ॥

चिररात्राविति । असञ्चारवेलायामागतस्य प्रयोक्तुः सम्बन्धलक्षणा षष्ठी, शयनसुप्तायाः प्रयोज्यायाः "नागतश्चपल" इति प्रातिबोधिकं प्रतिबोधप्रयोजनम्, मुखावलोकनं स्वाभिप्रायाभावाद्रागदीपनान्न विद्यते, तत्र विस्रब्धिकायां रागदीपनम् ॥ २८ ॥

साऽपि तु भावजिज्ञासाऽर्थिनी नायकस्यागमनकालं संलक्ष्य व्याजेन सुप्ता स्यात् ॥ २९ ॥

साऽपि त्विति । भावजिज्ञासाऽर्थिनी "किं चित्पश्यामि मय्यनुरागोऽस्ति न" इति सम्मानार्थिनी नायकादेव वैलक्ष्यसुप्ता स्यादिति व्याजेन कृतकनिद्रया शयितेत्यर्थः, यदि मयि भावितस्तदा प्रातिबोधिकं विदध्यान्मानयिता वा, "कुपिते" ति मानेन पादपतनादिना संमान्योत्थापयेद्, एतत्त्रिविधमावस्थिकम् ॥ २९ ॥

समागतयोराह—

आदर्शे कुड्ये सलिले वा प्रयोज्यायाश्छायाचुम्बनमाकारप्रदर्शनार्थमेव कार्यम् ॥ ३० ॥

आदर्श इति । कुड्ये दीपाद्यालोकयुक्ते, प्रयोज्याया इत्युपलक्षणार्थत्वान्नायकस्यापि प्रयोज्यस्य, विशेषाभावात्, छायाचुम्बनमिति । दर्पणादिषु प्रयोज्यप्रतिबिम्बस्य समीपे लौकिकमिव चुम्बनं वैहासिकं कार्यम्, आकारप्रदर्शनार्थमिति । भावसूचकमाकारं प्रदर्शयितुमित्यर्थः, यतस्तदवस्थां दृष्ट्वेतरो मन्यते मय्यनुरक्तो यदेवमाकारयतीति, कुड्ये तु न वैहासिकं, किं तु च्छायावदने वदनं विदध्यादेवमित्याकारप्रदर्शनार्थम् ॥ ३० ॥

बालस्य चित्रकर्मणः प्रतिमायाश्च चुम्बनं संक्रान्तकमालिङ्गनं च ॥ ३१ ॥

बालस्येति । स्वाङ्कगतस्य लाडीकस्य चित्रकर्मण आलेख्यस्य प्रतिमाया मृच्छिलाकाष्ठादिमय्याः प्रयोज्यासमक्षं चुम्बनं संक्रान्तकं, तदध्यारोपादालिङ्गनं च संक्रान्तकं, यथासंभवं चुम्बनाधिकारे प्रसङ्गादुक्तं, तत्र च्छायाचुम्बनं संक्रान्तकं चोभयमावस्थिकं, स्पर्शगोचरातीतयोरनभिवृत्तसंभाषणयोरसमागतयोर्द्रष्टव्यम् ॥ ३१ ॥

तथा निशि प्रेक्षणके स्वजनसमाजे वा समीपगतस्य प्रयोज्याया हस्ताङ्गुलिचुम्बनं संविष्टस्य वा पादाङ्गुलिचुम्बनम् ॥ ३२ ॥

तथेति आकारप्रदर्शनार्थं, निशि रात्रौ प्रेक्षणके वा नटादिदर्शने वा स्वजनसमाजे वा ज्ञातिसंबन्धिषु संभूय स्थितेषु प्रयोज्यायाः समीपोपविष्टस्य प्रयोक्तुरुपलक्षणार्थत्वात्प्रयोज्यस्य वा समीपोपविष्टायाः प्रयोज्यायाः, हस्ताङ्गुलिचुम्बनमिति। तदा हस्तस्य सुलभत्वात्, तमन्यापदेशेनाकृष्य तदङ्गुलिचुम्बनं, संविष्टस्येति। नायिकासमीपे शयितस्य चशब्दाद्धस्ताङ्गुलिचुम्बनं च तदानीमुभयोरपि सुलभत्वात्, तत्र हस्ताङ्गुलिचुम्बनस्य द्वावपि प्रयोक्तारौ, पादाङ्गुलिचुम्बनस्य नायिकैव, न नरो गर्हितत्वात्॥ ३२ ॥

संवाहिकायास्तु नायकमाकारयन्त्या निद्रावशादकामाया इव तस्योर्वोर्वदनस्य निधानमूरुचुम्बनं पादाङ्गुष्ठचुम्बनं चेत्याभियोगिकानि ॥ ३३ ॥

संवाहिकायास्त्विति। नायकं संवाहयति या का चित्संवाहनद्वारेण नायकमभियुङ्क्ते, आकारयन्त्या भावसूत्रकमाकारं ग्राहयन्त्याः, अकामाया इवेति। चुम्बितुमनिच्छन्त्या इव, नायकाकारस्यागृहीतत्वाद्, अतः कृतकनिद्रया सा नायकस्योर्वोश्चुम्बितुं वदनं निधत्ते, पादाङ्गुष्ठचुम्बनं तु पादावाकृष्य संवाहयन्त्या बुद्धिकारितमपि न दोषाय, मुखाङ्गुष्ठयोस्तदानीं परस्पराश्लेषसंभवाद्, एतान्यङ्गुलिचुम्बनादीनि स्पृष्टकादिना सोढगात्रस्पर्शयोरनतिप्रवृत्तसंभाषणयोरसमागतयोः, आभियोगिकानीति। अभियोगप्रयोजनानि च्छायाचुम्बनादीनि तदानींप्रयोगान्तानि च लौकिकचुम्बनवत्प्रयोक्तव्यानि कर्मभेदासंभवात्॥३३॥

संप्रयोगाभियोगकालयोः सामान्यविधिमाह—

कृते प्रतिकृतं कुर्यात्ताडिते प्रतिताडितम्।
करणेन च तेनैव चुम्बिते प्रतिचुम्बितम् ॥ ३४ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे
चुम्बनविकल्पास्तृतीयोऽध्यायः।
आदितोऽष्टमः।

कृत इति। सांप्रयोगिक आभियोगिके वा प्रयोक्तृकृते प्रयोज्या प्रतिकृतं कुर्यात्, तदेवोदाहरणार्थमाह—ताडिते चुम्बित इति। अन्यतरः संप्रयोगे स्तम्भमिवैनं मन्यमानां निर्विद्यते ततश्च निकृष्टः संप्रयोगः स्याद्, आभियोगिके च कारितोऽपि नावध्यत इति पशुमिव परिभवेत् ततश्च न समागमोऽर्थः सिध्येत्, तत्रापि करणेन च, तेनवेति। येनैव

कर्मभेदेन संप्रयुङ्क्ते तेनैव प्रयोजयेद्, एवं रतमाकारग्रहणेन स्फुटरसं स्यात् तच्चित्तानुविधानादिति ।

इति चुम्बनविकल्पा नवमं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां-सांप्रयोगिके द्वितीयेऽधिकरणे चुम्बनविचारस्तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः ।

एवं चुम्बनेनोपक्रम्य ततोऽधिकेन नखच्छेद्येनोपक्रमयितुं नखरदन-जातय उच्यन्ते, नखविलेखनप्रकारा इत्यर्थः ।

तदेव स्वरूपेण दर्शयन्नाह—

रागवृद्धौ संघर्षात्मकं नखविलेखनम् ॥ १ ॥

संघर्षात्मकमिति । प्रदेशस्य नखैर्यत्समन्ततो घर्षणमवपृथक्करणं तन्नखविलेखनं तत्स्वभावत्वात्, तच्च रागवृद्धौ सत्याम्,

यत्तु नखाग्रेण तुदनं तद्रागमान्द्ये सति तत्र च्छेद्यस्याभावाद् , नख-विलेखनस्यैव प्रकाराः कथ्यन्ते ॥ १ ॥

तस्य क्व प्रयोगः कदा चेत्याह—

तस्य प्रथमसमागमे प्रवासप्रत्यागमने प्रवासगमने क्रुद्धप्रस-न्नायां मत्तायां च प्रयोगो न नित्यमचण्डवेगयोः ॥ २ ॥

तस्येति । नखविलेखनस्य, अचण्डवेगयोरिति । मन्दमध्यवेगयोः, न नित्यप्रयोगः, कदा तर्हीत्याह—प्रथमसमागमे तथा प्रवासप्रत्यागमने तयोरुत्कण्ठितयोः प्रवृद्धरागत्वात् , प्रवासगमने स्मरणार्थं, क्रुद्धप्र-सन्नायामिति । नायकेन प्रसादिता सती हर्षाद्विवृद्धरागा भवति, मत्ता-यां च मद्यमदेन रागस्योच्छ्रितत्वाद् , एवं क्रुद्धप्रसन्ने मत्ते च नायके द्रष्टव्यं , चण्डवेगयोस्तदाऽन्यदा च प्रयोगो नित्यमर्थोक्तम् ॥ २ ॥

तथा दशनच्छेद्यस्य सात्म्यवशाद्वा ॥ ३ ॥

तथा, दशनच्छेद्यस्य प्रयोग इत्येव, तस्यैतावता तुल्यत्वादित्यति-देशः, तेन स्वरूपमपि योज्यं, रागविवृद्धौ संघर्षात्मकं दशनच्छेद्यं, रागमान्द्ये तु दशनग्रहणमिति, सात्म्यवशाद्वा तयोः प्रयोगो यदि तदा-ऽचण्डवेगौ प्रकृतिसात्म्यान्न सहेतां तदा नैवेत्यर्थः ॥ ३ ॥

तदाच्छुरितकमर्धचन्द्रो मण्डलं रेखा व्याघ्रनखं मयूरपदकं-शशप्लुतकमुत्पलपत्त्रकमिति रूपतोऽष्टविकल्पम् ॥ ४ ॥

तदिति । नखविलेखनं, रूपत इति संस्थानतः, द्विविधं हि तद्रूपवदरूपवच्च, तत्र यत्कस्य चिदनुकारि तद्रूपवदष्टप्रकारकमाच्छुरितकादि, तस्य लक्षणं वक्ष्यति, यदननुकारि तदरूपवत् त्रिविधं, मृदुमध्यातिमात्रभेदात् ॥ ४ ॥

कक्षौ स्तनौ गलः पृष्ठं जघनमूरू च स्थानानि ॥ ५ ॥

स्थानानि । कक्षस्तनगलपृष्ठजघनोरुपार्श्वानि तेष्वेव षट्सु नखक्षतैः स्त्रीपुंसयोरत्यर्थनिर्वृतिरित्याचार्याणां मतम् उत्तरपक्षदर्शनात्, तत्र गल इति सामीप्यात्तत्पार्श्वं, जघनशब्दः समुदायेन कटिभागे तदेकदेशे च पुरोभागे वर्तते, तदिह समुदायवृत्ति, तेन नितम्बलेखनमपि सिद्धं, तथा चोक्तम्—

'ग्रीवापार्श्वोरुकक्षेषु कटिपृष्ठस्तनेषु च ।
संप्रयोगे प्रयुञ्जीत नखच्छेद्यानि योषिताम्' इति ॥ ५ ॥

प्रवृत्तरतिचक्राणां न स्थानमस्थानं वा विद्यत इति सुवर्णनाभः ॥६॥

प्रवृत्तरतिचक्राणामिति । प्रवृत्तरागोत्पीडानां, न स्थानमिति । अङ्गं प्रत्यङ्गं वा सिद्धं सर्वमेव नखक्षतस्य स्थानं, यद्यप्येवं तथाऽपि शास्त्रकारो रूपवतां नियतस्थानं वक्ष्यति, तत्र हि परभागं लभन्त इति॥६॥

छेद्यस्य नखाधीनत्वात्तेषामाश्रयतः कल्पनातो गुणतः प्रमाणतश्च विधिमाह—

तत्र सव्यहस्तानि प्रत्यग्रशिखराणि द्वित्रिशिखराणि चण्डवेगयोर्नखानि स्युः ॥ ७ ॥

तत्रेति । नखकर्मणि, सव्यहस्तानीति । आश्रयभावेन वामो हस्तो येषामिति, दक्षिणस्य प्रायशोऽन्यव्यापारादेषां भङ्गोऽपि स्यात्, प्रत्यग्रशिखराणीति । अभिनवघटिताग्राणि, द्विशिखरकाणि त्रिशिखरकाणि वा क्रकचमुखवत्कल्पितानि, तत्त्रिशिखरकाण्यनतिविस्तीर्णस्थलत्वाद् द्रुतं भिद्यन्ते, तद्विपर्ययाणि मध्यमन्दवेगयोरित्यर्थोक्तं, तत्रेषत्प्रमृष्टाग्राणि शूकाकृतीनि मध्यवेगयोः, प्रमृष्टाग्राण्यर्धचन्द्राकृतीनि मन्दवेगयोरिति तिस्रो नखविकल्पनाः ॥ ७ ॥

गुणानाह—

अनुगतराजि सममुज्ज्वलममलिनमविपाटितं विवर्धिष्णु मृदु स्निग्धदर्शनमिति नखगुणाः ॥ ८ ॥

अनुगतराजीति । अनुगता विवर्णा मध्ये लेखा यस्य, सममनिम्नोन्नतपृष्ठम्, उज्वलमागन्तुकमलाभावादमलिनं कान्तिमद्, अविपाटितम-

विस्फुटितं, विबर्धिष्णु बर्धनशीलं, मृदु, न काष्ठप्रख्यं, स्निग्धदर्शनमिति। दृश्यत इति दर्शनं रूपं, 'कृत्यल्युटो बहुलम्'। ३। ३। ११३। इति ल्युट्, तदरूक्षमस्येति ॥ ८ ॥

दीर्घाणि हस्तशोभीन्यालोके च योषितां चित्तग्राहीणि गौडानां नखानि स्युः ॥ ९ ॥

प्रमाणतस्त्रिधा। तत्र दीर्घाणि हस्तशोभीनि हस्तं शोभयितुं शीलं येषां, नखच्छेद्यं कर्त्तुमक्षमत्वाद्, आलोके=दर्शने, चित्तग्राहीणि योषिद्भिर्दृश्यमानानि तासां चित्तं हरन्तीति गुणद्वययुतानि स्पर्शमात्रकरत्वात्प्रायशो गौडानाम् ॥ ९ ॥

ह्रस्वानि कर्मसहिष्णूनि विकल्पयोजनासु च स्वेच्छाऽवपातीनि दाक्षिणात्यानाम् ॥ १० ॥

ह्रस्वानि, कर्मसहिष्णूनि लेखनादि कर्म सहन्ते, दीर्घाणि तु भज्यन्ते, विकल्पयोजनास्वर्धचन्द्रादयो ये विकल्पास्तत्संपादनासु स्वेच्छाऽवपातीनि प्रयोक्तुरिच्छया स्थाने योऽवपातः स विद्यते येषां न तु दीर्घाणाम्, इति गुणद्वयं, तानि खररागत्वात्प्रायशो दाक्षिणात्यानाम् ॥ १० ॥

मध्यमान्युभयभाञ्जि माहाराष्ट्रिकाणामिति ॥ ११ ॥

मध्यमानि न दीर्घाणि नातिह्रस्वानि, उभयभाञ्जि दीर्घह्रस्वगुणभाञ्जि, तानि वैचक्षण्यात्प्रायशो माहाराष्ट्रिकाणाम् ॥ ११ ॥

आच्छुरितकादेर्लक्षणं परभागार्थं च प्रयोगस्थानमाह—

तैः सुनियमितैर्हनुदेशे स्तनयोरधरे वा लघुकरणमनुद्गतलेखं स्पर्शमात्रजननाद्रोमाञ्चकरमन्ते संनिपातवर्धमानशब्दमाच्छुरितकम् ॥ १२ ॥

तैरिति। मध्यमैर्नखैः पञ्चभिरपि, सुनियमितैरिति। सुसंश्लिष्टैः, मध्यमावस्थापेक्षयेदं वचनं, प्रागसंश्लिष्टान्येव स्थाने निवेश्यन्ते ततश्च शनैराकृष्यमाणानि सुसंयमितानि भवन्ति न प्रागेव सुसंयमितानि, लोके तथा प्रयोगदर्शनाद्, लघुकरणमिति। लघ्वी क्रिया यस्मिन्निति, यथा क्षतं न भवति, यदाह—अनुद्गतलेखमिति। किमर्थं तर्हीत्याह—स्पर्शमात्रजननाद्रोमाञ्चकरमिति, अन्तइति। स्पर्शनक्रियाया नखघातादिभिरिति, अङ्गुष्ठनखेन प्रतिनखस्फालनाद्वर्धमानचटचटाशब्दं यदेवंविधं कर्म तदाच्छुरितकं नखैराच्छुरणाद्, एवं च नखच्छेद्याभावेऽप्यस्यैवानुरूपं, तत्र हनुदेशेऽधरे च सर्वासामेव नायिकानामाच्छुरितकमेव नान्यन्नखकर्मेति दर्शनार्थमुभयोर्ग्रहणं, स्तनयोराधिक्येन प्रयोक्तव्यमितिख्यापनार्थं वचनं, तत्रापि स्पर्शकरत्वात् ॥ १२ ॥

अन्येषु तु स्थानेष्ववस्थाऽपेक्षया प्रयोगमाह—

प्रयोज्यायां च तस्याङ्गसंवाहने शिरसः कण्डूयने पिटकभेदने व्याकुलीकरणे भीषणे च प्रयोगः ॥ १३ ॥

प्रयोज्यायां च कन्यायां तस्य प्रयोग इति विस्रम्भणार्थं नान्यस्येतरस्य नखकर्मणः, संवाहने यत्र यत्र स्थाने मर्दनं तत्र तत्र, शिरःकण्डूयने शिरस्येव, पिटकभेदने स्वल्पपिटकानां शरीरस्थानां भेदने, तद्देश एव व्याकुलीकरणे किं चित्कर्तुमप्रयच्छन्त्या भीषणे भयं दर्शयितुमित्यर्थः, एते संवाहनादिष्वावस्थिकाः सर्वास्वेव नायिकासु, अस्यावस्थिककार्यवशान्नायिकाऽपि प्रयोक्त्री ॥ १३ ॥

ग्रीवायां स्तनपृष्ठे च वक्रो नखपदनिवेशोऽर्धचन्द्रकः ॥ १४ ॥

ग्रीवायामिति । ग्रीवापार्श्वे बहिर्मुखाः स्तनपृष्ठे चोर्ध्वमुखाः, अर्धचन्द्रवद्वक्रोऽर्धचन्द्रः, सूच्यग्रेण कनिष्ठानखेन निष्पाद्यो मध्यमानखेनार्धचन्द्रेण ॥ १४ ॥

तावेव द्वौ परस्पराभिमुखौ मण्डलम् ॥ १५ ॥

तावेव द्वाविति । अर्धचन्द्रौ क्रोडभावेन परस्पराभिमुखौ मण्डलं तदाकारत्वात् ॥ १५ ॥

नाभिमूलककुन्दरवङ्क्षणेषु तस्य प्रयोगः ॥ १६ ॥

नाभिमूले रशनानायकवदेव स्थितं, ककुन्दरयोर्नितम्बस्योपरिकूपकयोरन्तर्निहितप्रतिकूपकं मनोहारि, वङ्क्षणयोरूरुसन्ध्योः कर्णिकाऽलंकारवज्जघनस्य ॥ १६ ॥

सर्वस्थानेषु नातिदीर्घा लेखा ॥ १७ ॥

सर्वस्थानेति । लेखायाः स्थानविशेषाभावान्न स्थाने विशेषः, तेन ग्रीवात्रिकपृष्ठपार्श्वोरुमूलबाहुषु नातिदीर्घस्थानविशेषाद् द्व्यङ्गुला त्र्यङ्गुला वा प्रत्यग्रशिखरा निष्पाद्या ॥ १७ ॥

सैव वक्रा व्याघ्रनखकमास्तनमुखम् ॥ १८ ॥

सैवेति । लेखा, स्तनमुखादुत्थाप्याग्रतो वक्रीकृता व्याघ्रनखखण्डवत्स्तनकण्ठमलंकरोति ॥ १८ ॥

पञ्चभिरपि नखैर्लेखा चूचुकाभिमुखी मयूरपदकम् ॥ १९ ॥

पञ्चभिरपि नखैः सूच्यग्रशिखरकैः, चूचुकाभिमुखीति । स्तनमुखस्याधस्तादङ्गुष्ठनखं विन्यस्योपरि च संश्लिष्टाङ्गुलिनखानि चूचुकाभिमुखमाकर्षयेद्, मयूरपदकं तदाकारत्वात्, ॥ १९ ॥

तत्संप्रयोगश्लाघायाः स्तनचूचुके संनिकृष्टानि पञ्चनखपदानि शशप्लुतकम् ॥ २० ॥

तदिति । मयूरपदकं, संप्रयोगश्लाघाया इति । नायकसंप्रयोगे श्लाघा यस्यास्तस्या विधेयं, सर्वा एव हि स्त्रियः स्तनमुखं सर्वनखविप्लुतं बहु मन्यन्ते, यथोक्तम्—

'स ते मनसि तन्वङ्गि ! सखि ! प्रागिव वर्तते ।
स्तनवक्त्रं विशालाक्षि ! यत्ते शिखिपदाङ्कितम्' ॥ इति,

स्तनचूचुक इति । सामीप्ये सप्तमी, संनिकृष्टानीति । नखाग्रपञ्चकमेकीकृत्यावष्टभ्य निदध्यात्ततः पञ्च पदानि संनिकृष्टानि शशप्लुतकं, तदाकारत्वात्, ॥ २० ॥

स्तनपृष्ठे मेखलापथे चोत्पलपत्राकृतीत्युत्पलपत्रकम् ॥ २१ ॥

उत्पलपत्राकृतीति । उत्पलपत्त्रसंस्थानं ; तदेकमेव स्तनपृष्ठे मेखलापथे चेति । यत्र मेखला निबध्यते तत्र, पथग्रहणान्नैकम् अपि तु तिर्यगुत्पलपत्त्रमालामिव शोभार्थं निदध्याद्, नाभिमूलस्थमण्डलंमध्यस्थनायकरत्नवदाभाति ॥ २१ ॥

ऊर्वोः स्तनपृष्ठे च प्रवासं गच्छतः स्मरणीयकं संहताश्चतस्रस्तिस्रो वा लेखा इति नखकर्माणि ॥ २२ ॥

स्मरणीयकमिति । प्रोषितं स्मारयति यन्नखच्छेद्यं लेखाऽऽख्यं, 'कृत्यल्युटो बहुलम्' ।३।३।११३। इति कर्तर्यनीयर्, ततः संज्ञायां कन्, ततः प्रयोज्याया ऊर्वोः प्रवासं गच्छतः प्रच्छन्नस्य नायकस्य प्रयोक्तुः, स्तनपृष्ठे सार्वलौकिकस्य, संहता इति । निरन्तरा मङ्गलार्थं मा भूच्चिरविप्रयोग इति, चतस्रो दीर्घप्रवासे, तिस्रो ह्रस्वप्रवासे, संख्याऽङ्कवल्लेखाः, एषामर्धचन्द्रादीनां देशकालकार्यत्रशान्नायिकाऽपि प्रयोक्त्री, नखकर्माणीति । एतानि नखच्छेद्यानि रूपवन्तीत्यर्थः, अरूपिणां त्वनिबद्धरूपत्वात्तत्स्थानानियमः, सर्वत्रैवोक्तस्थाने प्रयोगः ॥ २२ ॥

अन्येषामतिदेशमाह—

आकृतिविकारयुक्तानि चान्यान्यपि कुर्वीत ॥ २३ ॥

आकृतिविकारयुक्तानीति । संस्थानविशेषयुक्तानि, अन्यान्यपि पक्षिकुसुमकलशपत्त्रवल्ल्यादीनि नखकर्माणि प्रयोक्तव्यानि, अनेन विकल्पस्याधिक्यं दर्शयति ॥ २३ ॥

विकल्पानामनन्तत्वादानन्त्याच्च कौशलविधेरभ्यासस्य च स-

र्वगामित्वाद्रागात्मकत्वाच्छेद्यस्य प्रकारान् कोऽभिसमीक्षितुमर्हतीत्याचार्याः ॥ २४ ॥

आचार्याणां मतं विकल्पानामिति । अष्टविकल्पमेवास्तु नान्यानि तेषां छेद्यप्रकाराणां निरूप्यमाणानामानन्त्याद्, अतस्तान् कोऽभिसमीक्षितुमर्हतीति संबन्धः, तदभिसमीक्षिणा कौशलमप्यपेक्षणीयं, तस्य च प्रतिविकल्पं भिन्नत्वादानन्त्यमित्याह—आनन्त्याच्चेति । कौशलविधिः कौशलकरणं, स च नाभ्यासं विनेत्ययमपरस्तृतीयोऽपेक्षणीयः, सोऽप्येकत्र कृतोऽन्यत्र न कौशलं निष्पादयतीति सर्वगामिना भवितव्यमित्याह—अभ्यासस्य च सर्वगामित्वादिति। तदियं महती परम्परेति कः प्रकारानभिसमीक्षते, किं च रागात्मकत्वाच्छेद्यस्येति। रागजन्यत्वात्तदात्मकं नखच्छेद्यं, रागविवृद्धौ हि नखविलेखनं, तच्च तदानीं रागान्धत्वादरूपवदेव प्रयुङ्क्ते, कोऽत्र च्छेद्यवस्तुनि प्रकारान् प्रयोक्तुमर्हति तदानीमष्टविकल्पमपि न वक्तव्यम् ॥ २४ ॥

भवति हि रागेऽपि चित्रापेक्षा वैचित्र्याच्च परस्परं रागो जनयितव्यो, वैचक्षण्ययुक्ताश्च गणिकास्तत्कामिनश्च परस्परं प्रार्थनीया भवन्ति, धनुर्वेदादिष्वपि हि शस्त्रकर्मशास्त्रेषु वैचित्र्यमेवापेक्ष्यते किं पुनरिहेति वात्स्यायनः ॥ २५ ॥

भवति हि रागेऽपीति । हिशब्दोऽवधारणे, रागकालेऽपि केषांचित् सत्यप्यानन्त्ये वैचित्र्यापेक्षा भवत्येव, अपिशब्दादरागकालेऽपि, यदाह—वैचित्र्याच्चेति । आहार्यरागे कृत्रिमरागे च रते परस्परस्य राग-उत्पद्यमानः स न विना वैचित्र्यमिति तज्जननार्थं च वैचित्र्यापेक्षा, के पुनस्ते रागे सत्यपि वैचित्र्यमपेक्षन्त इत्याह—वैचक्षण्ययुक्ताश्चेति, तज्ज्ञतया युक्ता देवदत्तासदृश्यो गणिकास्तत्कामिनश्च मूलदेवसदृशाः, ते च विशिष्टरतार्थिनः परस्परस्य प्रार्थनीयास्तज्ज्ञा भवन्ति, मा भूदन्यत्र खलरतमिति । ततश्च तेषां वैचित्र्यमेव रागं जनयति, धनुर्वेदादिष्वपीति । शास्त्रान्तरेणास्य साधर्म्यं दर्शयति—आदिशब्दात्कुन्तखड्गादिशास्त्रपरिग्रहः, शस्त्रकर्मशास्त्रेष्विति । ज्ञानविद्या, कर्मविद्या चेति द्विविधा विद्या, धनुर्वेदे हि परशराणामागच्छतां शरैश्छेदनमेकसंधानेनानेकशरमोक्षणमित्यादिकं कर्मवैचित्र्यं, किं पुनरिह कामसूत्रे यत्र वैचित्र्यमेव मुख्यमभिप्रेतम्, अन्यथा नागरकानागरकयोः को भेदः ॥ २५ ॥

सर्वत्र च वैचक्षण्ययुक्तेषु वैचित्र्यप्रसङ्गप्रतिषेधमाह—

न तु परपरिगृहीतास्वेवं कुर्यात्, प्रच्छन्नेषु प्रदेशेषु तासा-

मनुस्मरणार्थं रागवर्धनाच्च विशेषान्दर्शयेत् ॥ २६ ॥

न त्विति । परपरिगृहीतासु वैचक्षण्ययुक्तास्वपि, एवमिति । वैचित्र्यं युक्तं, तासां प्रच्छन्ननायकोपभोग्यत्वात्, प्रच्छन्नेष्विति । ऊरुजघनवङ्क्षणादिषु, अनुस्मरणार्थमिति । ये नखच्छेद्यविशेषास्तान्दृष्ट्वा स्मरन्ति, नित्यसमागमस्य दुर्लभत्वाद्, रागवर्धनाच्चेति । प्रमोदमात्रस्वरूपत्वाद्विसृष्टिलक्षणां प्रीतिं महतीं जनयन्ति ॥ २६ ॥

स्मरणमधिकृत्यान्वयव्यतिरेकाभ्यां प्रशंसामाह—

नखक्षतानि पश्यन्त्या गूढस्थानेषु योषितः ।
चिरोत्सृष्टाऽप्यभिनवा प्रीतिर्भवति पेशला ॥ २७ ॥

नखक्षतानीति । गूढस्थानादिषु, अभिनवा प्रथमसमागम इव, प्रीतिः=स्नेहः, पेशला=अकृत्रिमा ॥ २७ ॥

चिरोत्सृष्टेषु रागेषु प्रीतिर्गच्छेत्पराभवम् ।
रागायतनसंस्मारि यदि न स्यान्नखक्षतम् ॥ २८ ॥

चिरोत्सृष्टेष्वनुभूय चिरपरित्यक्तेषु, पराभवं विनाशं, रागायतनसंस्मारीति । रूपं यौवनं गुणाश्चेति रागायतनं, तत्स्मारयितुं शीलं यस्येति, नखक्षतदर्शनात्तद्रूपादिषु स्मरणं, ततः प्रीतिवासनात्प्रबोधः॥२८॥

सामान्येन प्रशंसामाह—

पश्यतो युवतिं दूरान्नखोच्छिष्टपयोधराम् ।
बहुमानः परस्यापि रागयोगश्च जायते ॥ २९ ॥

दूरादिति । तत्प्रकारमनुपलभ्यापि, उच्छिष्टं परिभुक्तं, बहुमानोऽतिगौरवं, परस्यापि येनापि न संगता, रागयोग इति । रागेण युज्यत इत्यर्थः ॥ २९ ॥

पुरुषश्च प्रदेशेषु नखचिह्नैर्विचिह्नितः ।
चित्तं स्थिरमपि प्रायश्चलयत्येव योषितः ॥ ३० ॥

पुरुषश्चेति । यथा पुरुषस्य तथा योषितोऽपि पुरुषं दृष्ट्वा रागः, प्रदेशे दृष्टेषु, विचिह्नितो विलिखितः, स्थिरमपि तपश्चरणादिभिर्नियतमपि प्रायश्चलयतीति प्रकृतेरित्यर्थः ॥ ३० ॥

नान्यत्पटुतरं किञ्चिदस्ति रागविवर्धनम् ।
नखदन्तसमुत्थानां कर्मणां गतयो यथा ॥ ३१ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे चतुर्थोऽध्यायः ।

आदितो नवमः ।

नान्यदिति । रागयोगेभ्यः, पटुतरं रागवृद्धौ योग्यतरं, दन्तग्रहणं तुल्यफलत्वदर्शनार्थं प्रासङ्गिकं, कर्मणां गतय इति। छेद्यानां प्रवृत्तयो यथा देहान्तरस्थिता न तथा लोकेऽन्यदस्ति संप्रयोगेऽपि रागवर्धनं, पूर्वपूर्वमिति वक्ष्यति ॥ १३ ॥

इति नखजातयो दशमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे नखजातयश्चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः ।

एवं नखच्छेद्यानुपक्रम्य तदधिकेन दशनच्छेद्येनोपक्रमितुं दशनच्छेद्यविधयस्तथाऽऽलिङ्गनादयो, देशप्रवृत्तिमनिरूप्य प्रयुज्यमाना न रागहेतव इति देशेषु भवा देश्या उपचारा, इति प्रकरणद्वयमत्राध्याये,

तत्र च्छेद्यस्य विषयस्वरूपकालानां पूर्वत्रानिर्दिष्टत्वात्स्थानादीन्याह—

**उत्तरोष्ठमन्तर्मुखं नयनमिति मुक्त्वा चुम्बनवद्दशनरदनस्थानानि ॥१॥**

उत्तरोष्ठमिति । चुम्बनस्येवात्राप्युत्तरोष्ठं छिद्यमानमसुखावहम्, अन्तर्मुखं जिह्वां, शेषमपि दशनागोचरत्वाद्, नयनयोश्छेद्यत्वासंभवात्पर्यन्तपीडाकरत्वाद्वैरूप्यकरणाच्च मुक्त्वा, शेषा ललाटाधरोष्ठगलकपोलवक्षःस्तनाः, तथा लाटानामूरुसंधिबाहुमूलनाभिमूलानि सन्ति तानि स्थानानि, न तु सर्वजनप्रयोज्यानीति, एतत्सर्वं प्रयोज्यं चुम्बनेन सहैकविषयत्वाद्, दशनरदनस्थानानि, दन्तविलेखनस्थानानि, उत्तरोत्तरवैचित्र्यदर्शनार्थं चुम्बनविकल्पानन्तरमिदं नोक्तम् ॥ १ ॥

गुणानाह—

**समाः स्निग्धच्छाया रागग्राहिणो युक्तप्रमाणा निश्छिद्रास्तीक्ष्णाग्रा इति दशनगुणाः ॥ २ ॥**

समा अकरालास्तुल्यच्छेद्यं निष्पादयन्तीति, स्निग्धच्छाया अपरुषाः, रागग्राहिणस्ताम्बूलभक्षणादौ,न पुष्पावदाताः, इति गुणद्वयं शोभाऽर्थं, युक्तप्रमाणा न श्लक्ष्णा न पृथवः, निश्छिद्राः=घनाः, तीक्ष्णाग्रा इति गुणत्रयं छेद्यार्थं शोभार्थं च ॥ २ ॥

**कुण्ठा राज्युद्गताः परुषा विषमाः श्लक्ष्णाः पृथवो विरला इति च दोषाः ॥ ३ ॥**

राज्युद्गता इति । मध्ये स्फुटिता लेखा उद्गता येषामित्याहिताग्न्यादिषु द्रष्टव्यं, गुणविपर्यये दोषाः सिद्धा अपि प्रधानदोषख्यापनार्थं पुनरुक्ताः, तेन रागाग्राहित्वं न दोषः, यतः शुद्धा एव दशनाः प्रायशो वर्ण्यन्ते, अत्रापि राज्युद्गतपरुषविषमाणामाननकान्तिपरिपन्थित्वं, कुण्ठादीनां तु शेषाणां कार्यकरणेऽसामर्थ्यं दोषश्च ॥ ३ ॥

गूढकमुच्छूनकं बिन्दुर्बिन्दुमाला प्रवालमणिर्मणिमाला खण्डाभ्रकं वराहचर्वितकमिति दशनच्छेदनविकल्पाः ॥ ४ ॥

छेदनविकल्पा इति । रूपत उक्ताः ॥ ४ ॥

तेषां लक्षणं प्रयोगस्थानं चाह—

नातिलोहितेन रागमात्रेण विभावनीयं गूढकम् ॥ ५ ॥

रागमात्रेणेति । राग एव रागमात्रं क्षताभावाद्, अतिलोहितेनेति । तस्याधिक्यमाह, तेन विभावनीयं विज्ञेयम्, एवं च गूढमिव गूढकम्, अस्फुटितत्वात्, तदेकेनैव राजदन्ताग्रेणावष्टभ्य निष्पाद्यम् ॥ ५ ॥

तदेव पीडनादुच्छूनकम् ॥ ६ ॥

तद् गूढकं यदाऽऽपीड्य निष्पाद्यते तदा जातश्वयथुत्वादुच्छूनकम् ॥ ६ ॥

तदुभयं बिन्दुरधरमध्य इति ॥ ७ ॥

तदुभयं गूढकमुच्छूनकं च, बिन्दुरिति । अयमितिशब्दश्चार्थे, बिन्दुश्च वक्ष्यमाणलक्षणः, त्रितयमधरमध्ये, तेषां स्वल्पाभोगत्वात् ॥ ७ ॥

उच्छूनकस्य वैशेषिकं स्थानमाह—

उच्छूनकं प्रवालमणिश्च कपोले ॥ ८ ॥

उच्छूनकं, प्रवालमणिश्च वक्ष्यमाणलक्षणः, कपोले तस्य शक्यक्रियत्वात् ॥ ८ ॥

कस्मिन्कपोल इत्याह—

कर्णपूरचुम्बनं नखदशनच्छेद्यमिति सव्यकपोलमण्डनानि ॥ ९ ॥

सव्यकपोलमण्डनानीति । यथा कर्णपूरश्चारुत्वाद्वामे कर्णे विन्यस्तो वामकपोलस्य मण्डनं तथा, यथोक्तं—

'दन्तच्छेद्यं चुम्बनं सताम्बूलं रागमण्डनम्' ॥ ९ ॥

दन्तौष्ठसंयोगाभ्यासनिष्पादना प्रवालमणिसिद्धिः ॥ १० ॥

दन्तौष्ठसंयोगाभ्यासनिष्पादनेति । उत्तरदन्ताधरोष्ठाभ्यामुत्तरोष्ठाधरदन्ताभ्यां वा स्थानस्य संयोगो यद् गृहीत्वा पीडनं तस्याभ्यासः पुनः पुनः करणं स एव निष्पादनं यस्याः सिद्धेः, निष्पाद्यतेऽनेनेति कृ-

त्वा, तथा हि तदभ्यासात्प्रवालमणिरिव लोहितः क्षतविवर्जितो दन्तौष्ठपदविन्यासो निष्पाद्यते ॥ १० ॥

सर्वस्येयं मणिमालायाश्च ॥ ११ ॥

मणिमालायाश्च दन्तौष्ठसंयोगाभ्यासनिष्पादना सिद्धिरित्येव, अत्राप्ययमेव प्रकारः, किं त्वेकं निष्पाद्यं, तदनन्तरमपरमपरं यावन्माला भूतेति ॥ ११ ॥

अल्पदेशायाश्च त्वचो दशनद्वयसंदंशजा बिन्दुसिद्धिः ॥ १२ ॥

अल्पदेशाया इति । स्थानापेक्षया, तत्र गले मुद्गमात्राया, अधरे तिलमात्रायांस्त्वचः, दशनद्वयसंदंशजेति । उत्तरेणाधरेण च दशनाग्रेण त्वचमाकृष्य संदंशः खण्डनं तस्माज्जात इत्यर्थः, बिन्दुसिद्धिरिति । बिन्दुः स्वल्पदेशखण्डनात्, सिद्धिरित्युत्तरैश्चतुर्भिर्दशनैरल्पदेशायास्त्वचो युगपत्संदंशजेत्यर्थः ॥ १२ ॥

सर्वैर्बिन्दुमालाश्च ॥ १३ ॥

बिन्दुमाला, तदाकारत्वात् ॥ १३ ॥

तस्मान्मालाद्वयमपि गलकक्षवङ्क्षणप्रदेशेषु ॥ १४ ॥

तस्मान्मालाद्वयमपीति । मणिमाला बिन्दुमाला च, गलकक्षवङ्क्षणप्रदेशेषु श्लथत्वक्त्वादेषाम् ॥ १४ ॥

ललाटे चोर्वोर्बिन्दुमाला ॥ १५ ॥

ललाटे चोर्वोरिति । तत्राप्यूर्वोस्तिलपङ्क्तिरिव स्थिता स्यान्न तिर्यक्परिमण्डलमिवेति, सृक्वभागयोर्विच्छेदेऽपि परिमण्डलमिव लक्ष्यते ॥ १५ ॥

मण्डलमिव विषमकूटकयुक्तं खण्डाभ्रकं स्तनपृष्ठ एव ॥ १६ ॥

विषमकूटकयुक्तमिति । विषमैः पृथुमध्यसूक्ष्मैर्दशनपदैः समन्ततो युक्तं खण्डाभ्रकं तत्सादृश्यात्, स्तनपृष्ठे सौकर्याच्छोभित्वाच्च, पुरुषस्य वक्षसीत्यर्थादवगन्तव्यं, तच्च कण्ठोपग्रहेण निष्पाद्यम् ॥ १६ ॥

संहताः प्रदीर्घा बह्व्यो दशनपदराजयस्ताम्रान्तराला वराहचर्वितकं स्तनपृष्ठ एव ॥ १७ ॥

संहता इति । स्तनपृष्ठस्यैकतो भागात्स्वल्पदेशां त्वचं दशनसंदंशेन चर्वयेद्, यावदपरं भागमित्यनेन क्रमेणोपर्युपरि चर्वणान्निरन्तराः प्रदीर्घा बह्व्यश्चतस्रः षड् वा दशनपदपङ्क्तयो निष्पाद्याः, तासां चान्तरालानि संमूर्च्छितरक्तत्वात्ताम्राणि भवन्ति, अतो वराहस्येव चर्वणाद्वराहचर्वितकं, स्तनपृष्ठ एव बहुलमांसत्वात् ॥ १७ ॥

तदुभयमपि च चण्डवेगयोः ॥ १८ ॥

इति दशनच्छेद्यानि ।

तदुभयपि खण्डाभ्रकं वराहचर्वितकं च छेद्यं चण्डवेगयोः, तत्सात्म्याद्, एषां नायिकाऽपि प्रयोक्त्री द्रष्टव्या, उभयोरपि शास्त्राधिकाराद्, देशकालकार्यवशात् किञ्चिदेव कस्य चिदसाधारणम्, एतावन्ति दशनच्छेद्यानि सांप्रयोगिकान्युक्तानि, प्रयोज्याशरीरे प्रयोज्यमानत्वाद्, अभियोगे त्वसंभवात् ॥ १८ ॥

आकारप्रदर्शनार्थं सांक्रान्तिकमाभियोगिकमाह—

विशेषके कर्णपूरे पुष्पापीडे ताम्बूलपलाशे तमालपत्रे चेति प्रयोज्यागामिषु नखदशनच्छेद्यादीन्याभियोगिकानि ॥ १९ ॥

विशेषक इति । भूर्जपत्रादिकल्पिततिलके, कर्णपूरे नीलोत्पलादौ, पुष्पापीड इत्युपलक्षणं शेखरे, सुसज्जितताम्बूलीपत्रे, तमालपत्रे सुरभिण्यनङ्गलेखीकृते, एषां छेद्यविषयत्वाद्, इतिशब्दः प्रकारे, प्रयोज्यागामिष्विति । गमिष्यन्तीति गामिनः, 'भविष्यति गम्यादयः' ।३।३।३। इति सूत्रात्, प्रयोज्यागामिनो विशेषकादयः, 'गमि गम्यादीनाम्'-२।१।२४ सू० वार्ति० इति समासः । तेषु हि च्छेद्यानि संक्रान्तकान्याभियोगिकानि भवन्ति, नखदशनच्छेद्यादीनीति । नखच्छेद्यमाभियोगिकं प्राङ् नोक्तम्, इहैकविषयत्वादेकीकृत्योक्तम् ॥ १९ ॥

दशनच्छेद्यविधय एकादशं प्रकरणम् ।

देशप्रवृत्तयो देश्या उपचारास्तानाह—

देशसात्म्याच्च योषित उपचरेत् ॥ २० ॥

देशसात्म्यादिति । ल्यब्लोपे पञ्चमी, सात्म्यं द्विविधं—देशतः, प्रकृतितश्च, तत्र चुम्बनादीनां येन यस्मिन्देशे सात्म्यमवस्थितं तदपेक्ष्य, तेन तत्र योषित उपचरेत्, स्वयं तच्छीलवद्भवेद्, उपलक्षणमेतत्, पुरुषानपि योषित् ॥ २० ॥

तत्र मध्यदेशस्य प्रधानत्वात्तत्सात्म्यमाह—

मध्यदेश्या आर्यप्रायाः शुच्युपचाराश्चुम्बननखदन्तपदद्वेषिण्यः ॥ २१ ॥

मध्यदेश्या इति ।

'हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः' ॥ इति भृगुः,

'गङ्गायमुनयोरित्येके, इति वशिष्ठः, अयमेव शास्त्रकृतां प्राधान्येनाभिप्रेतः, तत्र भवा मध्यदेश्याः, शुच्युपचाराः सुरते शुचिसमुदाचाराः, आर्यप्रायत्वात्, चुम्बनादित्रयं द्वेष्टुं शीलमासाम्, आलिङ्गनमिच्छन्ति, प्रहणनेषु मध्याः ॥ २१ ॥

बाह्लीकदेश्या आवान्तिक्यश्च ॥ २२ ॥

बाह्लीकदेश्याः=उत्तरापथिकाः, आवन्तिक्यः=उज्जयिनीदेशभवाः, ता एवापरमालव्यः, चुम्बनादिद्वेषिण्यः ॥ २२ ॥

पूर्वाभ्यो विशेषमाह—

चित्ररतेषु त्वासामभिनिवेशः ॥ २३ ॥

चित्ररतेष्विति । चित्ररतानि वक्ष्यन्ते, तेष्वभिनिवेशोऽतिप्रीतिकरत्वात् ॥ २३ ॥

परिष्वङ्गचुम्बननखदन्तचूषणप्रधानाः क्षतवार्जिताः प्रहणनसाध्या मालव्य आभीर्यश्च ॥ २४ ॥

मालव्य इति । पूर्वमालवभवाः, परिष्वङ्गचुम्बनादीनि प्राधान्येनेच्छन्ति, क्षतविवर्जिताः तोदन्तु नखदन्ताभ्यामिच्छन्ति, प्रहणनसाध्याः प्रहणनेन जातरतयः, आभीर्य इति । आभीरदेशः श्रीकण्ठकुरुक्षेत्रादिभूमिः, तत्र भवाः ॥ २४ ॥

सिन्धुषष्ठानां च नदीनामन्तरालीया औपरिष्टिकसात्म्याः ॥२५॥

सिन्धुषष्ठानां चेति । सिन्धुनदः षष्ठो यासां नदीनां, तद्यथा-विपाट् शतद्रुरिरावती चन्द्रभागा वितस्ता चेति पञ्चनद्यः, तासामन्तरालेषु भवाः, औपरिष्टिकसात्म्या इति । सत्यपि परिष्वङ्गचुम्बनादौ मुखे जघनकर्मणा प्रीयन्त इत्यर्थः, खरवेगाः प्रीयन्त इति भावः॥२५॥

चण्डवेगा मन्दसीत्कृता आपरान्तिक्यो लाट्यश्च ॥२६॥

आपरान्तिक्य इति । पश्चिमसमुद्रसमीपेऽपरान्तदेशः, तत्र भवाः, अत्रत्यैः किलार्जुनसकाशाद्विष्णोरन्तःपुरमाच्छिन्नमिति, लाट्यश्चेति । अपरमालवात्पश्चिमेन लाटविषयः, तत्र भवाः चण्डवेगाः, मन्दसीत्कृता इति । क्षतानि मन्दं च प्रहारं सहन्त इत्यर्थः, तदुद्भवत्वात् सीत्कृतस्य ॥ २६ ॥

दृढप्रहणनयोगिन्यः खरवेगा एवापद्रव्यप्रधानाः स्त्रीराज्ये कोशलायां च ॥ २७ ॥

स्त्रीराज्य इति । बङ्गप्रदेशात्पश्चिमेन स्त्रीराज्यं तत्र, कोशलायां-

च योषितः सत्यप्यालिङ्गनादौ दृढप्रहारैः प्रीयमाणाः संप्रयुज्यन्ते, खरवेगा एवेत्यवधारणात्सर्वदैवेत्यर्थः, कण्डूते रताधिक्याद्रागः खर इत्युच्यते, तदभावे तु चण्ड इति विशेषः, एवं च सत्यपद्रव्यप्रधानाः, कण्डूतिप्रतीकारार्थं प्राधान्येन कृत्रिमसाधनमिच्छन्तीत्यर्थः ॥ २७ ॥

प्रकृत्या मृद्व्यो रतिप्रिया अशुचिरुचयो निराचाराश्चान्ध्र्यः ॥२८॥

आन्ध्र्य इति। नर्मदाया दक्षिणेन देशो दक्षिणापथः, तत्र कर्णाटविषयात्पूर्वेणान्ध्रविषयः, तत्र भवाः, प्रकृत्या स्वभावेन मृद्वङ्ग्यो न प्रहणनादि सहन्ते, किं तु रतिप्रियाः, पुरुषोपसृप्तमिच्छन्तीत्यर्थः, अशुचिरुचयोऽविविक्तसमुदाचाराः निराचाराश्च, भिन्नमर्यादा इत्यर्थः॥२८॥

सकलचतुःषष्टिप्रयोगरागिण्योऽश्लीलपरुषवाक्यप्रियाः शयने च सरभसोपक्रमा माहाराष्ट्रिक्यः ॥ २९ ॥

माहाराष्ट्रिक्य इति। नर्मदाकर्णाटविषययोर्मध्ये महाराष्ट्रविषयः, तत्र भवाः, सकलायाश्चतुःषष्टेः पाञ्चालिक्या गीताद्यायाश्च प्रयोगेण रागस्तासां भवतीति तत्प्रयोगरागिण्यः, अश्लीलं ग्राम्यं परुषं च निष्ठुरं वाक्यं वदन्ति सहन्ते चेति तत्प्रियाः, शयने चेति। संप्रयोगे, रभसोपक्रमा इति। धृष्टत्वादादावेव रभसेन पुरुषमभियुञ्जत इत्यर्थः ॥२९॥

तथाविधा एव रहसि प्रकाशन्ते नागरिक्यः ॥ ३० ॥

नागरिक्य इति । पाटलिपुत्रिक्यः, तथाविधा एवेति। तेनैव प्रकारेण सकलचतुःषष्टिप्रयोगरागितयाऽश्लीलपरुषवाक्यप्रियतया च रहसि विजने प्रकाशन्ते सत्रपत्वाद्, माहाराष्ट्रिक्यस्तु प्रकाशे रहसि चेति विशेषः, शयने च रभसोपक्रमत्वं तुल्यम् ॥ ३० ॥

मृद्यमानाश्चाभियोगान्मन्दं मन्दं प्रसिञ्चन्ते द्राविड्यः ॥३१॥

द्राविड्य इति। कर्णाटविषयाद्दक्षिणेन द्रविडविषयः, तत्र भवाः, अभियोगादिति। यन्त्रयोगात्प्रागालिङ्गनाद्यभियोगात्प्रभृति पुरुषेण मृद्यमाना बहिरन्तश्च शिथिलीक्रियमाणावयवा मन्दं मन्दं प्रसिञ्चन्त इति स्तोकं स्तोकं मूर्च्छनासुखवर्जितं क्षरणं कार्यत इति, अमन्दत्वात्, ततोऽन्ते समाक्षिप्तवेगा विसृष्टिः, तेनैकस्मिन्नेव रते निवृत्तरागा भवन्तीति दर्शयति ॥३१॥

मध्यमवेगाः सर्वंसहाः स्वाङ्गप्रच्छादिन्यः पराङ्गहासिन्यः कुत्सिताश्लीलपुरुषपरिहारिण्यो वानवासिक्यः ॥ ३२ ॥

वानवासिक्य इति । कोङ्कणविषयात्पूर्वेण वनवासविषयः, तत्र भवाः मध्यमवेगा भावतः कालतश्च सर्वमालिङ्गनादिकं सहन्ते,

व्यक्तमात्मनः शरीरे दोषं प्रच्छादयन्ति, परस्योपहसन्ति, कुत्सितरूपेण व्यवहारेण चाश्लीलं ग्राम्यं पुरुषं परिहरन्ति, न तेन संप्रयुज्यन्ते ॥ ३२ ॥

मृदुभाषिण्योऽनुरागवत्यो मृद्वङ्ग्यश्च गौड्यः ॥ ३३ ॥

गौड्य इति । गौड्यः पूर्वदेशभवा मृदुभाषिण्यः प्रदर्शनार्थं चैतदन्यदपि लक्षयेत् ॥ ३३ ॥

देशसात्म्यात्प्रकृतिसात्म्यं बलीय इति सुवर्णनाभो, न तत्र देश्या उपचाराः ॥ ३४ ॥

प्रकृतिसात्म्यमिति । प्रकृतिः=स्वभावः, तत्सात्म्यमेव मन्यते, देशप्रकृतिसात्म्येनैवोपचाराः कर्तव्याः, उभयसंनिपाते विरोधे सति देशसात्म्यात्प्रकृतिसात्म्यं बलीयोऽन्तरङ्गत्वाद्, न तत्र देश्या उपचारा इति सुवर्णनाभस्य, आचार्याणां तु प्रकृतिसात्म्यपरिहारेणैव देशसात्म्येनोपचरेदिति मतं, शास्त्रकृतोऽपि सुवर्णनाभमतमेवाभिमतमप्रतिषिद्धत्वात् ॥ ३४ ॥

कालयोगाच्च देशाद्देशान्तरमुपचारवेषलीलाश्चानुगच्छन्ति, तच्च विद्यात् ॥ ३५ ॥

कालयोगाच्चेति । कालान्तरेण, देशाद्देशान्तरं, तथा तत्रत्यानुपचारान् वेषं नेपथ्यं लीलां चेष्टाविशेषमनुगच्छन्ति, तच्चेति । देशान्तराद्यनुगमनं तत्त्वतो विद्याद्, अन्यथोपचारादिदर्शनेन तद्देशजेयमित्युपचर्यमाणादालिङ्गनादितो विगुणा स्यात्, तस्मात्संचारिगुणत्यागेन स्थायिदेशप्रचारैरेवावधार्य; प्रकृतिसात्म्येनोपचरेत् ॥ ३५ ॥

उपगूहनादिषु च रागवर्धनं पूर्वं पूर्वं विचित्रमुत्तरमुत्तरं च ॥ ३६ ॥

उपगूहनादिष्विति । आलिङ्गनचुम्बननखदशनच्छेद्यप्रहणनसीत्कृतेषु षट्सु बहिः कर्मसु पूर्वं पूर्वं रागवर्धनं, तत्र सीत्कृताच्छ्रुतिरमणीयात्प्रहणनं स्पर्शकरं रागवर्धनं, ततो दशनच्छेद्यमतिस्पर्शकरं, ततोऽपि परिहारेण नखच्छेद्यं, तस्मादपि चुम्बनं मृदुस्पर्शकरं, ततोऽपि सर्वाङ्गिकमालिङ्गनमतिस्पर्शकारीति, विचित्रमुत्तरोत्तरमिति, तत्रोपगूहनात्स्थूलकर्मणश्चुम्बनं कुटिलकर्म विचित्रं, ततो नखविलेखनं, तस्मादपि दशनच्छेद्यमतिकुटिलं, ततोऽपि प्रहणनं यतस्तद्धस्तलाघवान्मृदुपरिहारेण रागं दीपयति, ततोऽपि सीत्कृतं यदुपदेशेऽपि दुर्ग्रहमिति ॥ ३६ ॥

एवं देशसात्म्यात्परस्परमुपचरतोश्छेद्यकलहोऽपि स्यात्, तत्र प्रीति-

स्थिरीकरणार्थं चेष्टितमुच्यते, तद्द्विविधं—रहसि प्रकाशे च सेवने, तत्र पूर्वमधिकृत्याह—

वार्यमाणश्च पुरुषो यत्कुर्यात्तदनु क्षतम् ।
अमृष्यमाणा द्विगुणं तदेव प्रतियोजयेत् ॥ ३७ ॥

वार्यमाण इति । आङ्गिकेन वाचिकेन वाऽभिनयेन निषिध्यमानः प्रकृतिसात्म्याद्, यदा त्वनिषिध्यमानस्तदा कृते प्रतिकृतं कुर्यादित्ययमेव पक्षः, न द्विगुणयोजनं कलहो वा, द्यूतकलहोऽपि द्यूतमधिकृत्योक्तम्, इह सात्म्यं विशेषः, अमृष्यमाणेति । अक्षममाणा, द्विगुणं प्रयुक्तादधिकच्छेद्यं यत्तदेव न विजातीयम्, प्रतियोजयेत्=प्रतीपं योजयेत् ॥ ३७ ॥

कस्य किं द्विगुणमित्याह—

बिन्दोः प्रतिक्रिया माला मालायाश्चाभ्रखण्डकम् ।
इति क्रोधादिवाविष्टा कलहान्प्रतियोजयेत् ॥ ३८ ॥

बिन्दोरिति । मालेति बिन्दुमाला, तस्या अप्यभ्रखण्डकं प्रतीकारः, इत्येवं द्विगुणं प्रतीकारं बुद्ध्वा योजयेत्कलहं प्रति, तथाऽभ्रखण्डस्य वराहचर्वितकं, गूढस्योच्छूनकं, तस्य प्रवालमणिः, तस्यापि मणिमाला, तस्या अपि बिन्दुरिति, तत्र पूर्वाणि चत्वारि त्वचि स्थितानि, शेषाणि त्वचमतिक्रम्य; क्रोधादिवाविष्टेति । कृतककोपेन दर्शितावस्थाऽन्तरा, कलहान्तरं कृतककलहदर्शनार्थम् ॥ ३८ ॥

सकचग्रहमुन्नम्य मुखं तस्य ततः पिबेत् ।
निलीयेत दशेच्चैव तत्र तत्र मदेरिता ॥ ३९ ॥

मुखं पिबेदधरपानाख्येन चुम्बनेन, तत्र चायं विदग्धक्रमः, सकचग्रहमुन्नम्येति । पाणिनैकेन कचेषु द्वितीयेन चिबुके परिगृह्योत्तानीकृत्येत्यर्थः, निलीयेत दृढं संश्लिष्येद्, दशेच्च तत्र तत्र च्छेद्यस्थाने यत्र यत्र वा तेन दष्टा, मदेरिता=पानमदप्रेरिता, तदेव चेष्टितं सुखयति ॥ ३९ ॥

विधानान्तरमाह—

उन्नम्य कण्ठे कान्तस्य संश्रिता वक्षसः स्थलीम् ।
मणिमालां प्रयुञ्जीत यच्चान्यदपि लक्षितम् ॥ ४० ॥

उन्नम्येति । संश्रिता वक्षसः स्थलीमेकेन बाहुपाशेनावेष्ट्य कण्ठमुन्नम्य द्वितीयेन हस्तेन चिबुकं गृहीत्वा; मणिमालां प्रयुञ्जीत, गले स्व-

स्थाने कण्ठिकामिव, यच्चान्यदपि लक्षितं दशनच्छेद्यं मनोहारि, अत्रापि वैचित्र्यापेक्षेति सूचयति ॥ ४० ॥

प्रकाशे चेष्टितमाह—

दिवाऽपि जनसंबाधे नायकेन प्रदर्शितम्।
उद्दिश्य स्वकृतं चिह्नं हसेदन्यैरलक्षिता ॥ ४१ ॥

दिवाऽपीति। रात्रौ नायिकया यत्कृतं सिद्धं तद्दिवाऽपि नायकेन कथमस्मिञ्जनसमूहे प्रच्छाद्यमिति भावमाकारं ग्राहयेत्प्रदर्शयेद्, उद्दिश्य स्वयं कृतं चिह्नमिति दुष्टस्यायमेव निग्रहो युक्त इति भावं ग्राहयन्ती हसेद्, अन्यैरलक्षितेति। नायकेनाप्यलक्षितेति योज्यम्, अन्यथा द्वावप्यनागरकौ जनसम्बाधे स्यातामिति ॥ ४१ ॥

साऽपि तत्कृतानि चिह्नानि प्रदर्शयेदित्याह—

विकूणयन्तीव मुखं कुत्सयन्तीव नायकम्।
स्वगात्रस्थानि चिह्नानि सासूयेव प्रदर्शयेत् ॥ ४२ ॥

विकूणयन्तीव। व्यर्थचुम्बनार्थं सङ्कोचयन्तीव सङ्कोचस्येष्टत्वात्, कुत्सयन्तीव भ्रूनयनविकारैर्धिग्धिग्दुर्विदग्धमिति, 'तर्जयन्ती' इति पाठान्तरं, फलमस्य प्राप्स्यसीति तर्जनं, सासूयेवाक्षममाणेव ॥ ४२ ॥

परस्परानुकूल्येन तदेवं लज्जमानयोः।
संवत्सरशतेनापि प्रीतिर्न परिहीयते ॥ ४३ ॥

इति श्रीवात्स्यायनीये कामसूत्रे साम्प्रयोगिके द्वितीयेऽधिकरणे
दशनच्छेद्यविधयो देश्याश्चोपचाराः पञ्चमोऽध्यायः।
आदितो दशमः।

तदिति। तस्मात् संवत्सरशतेन पुरुषायुः प्रमाणेनेत्यर्थः, प्रीतिर्न परिहीयते स्थिरीभवतीत्यर्थः, भोजनमपि ह्येकरसमुपसेव्यमानं विरागं जनयति ॥ ४३ ॥

देश्या उपचारा द्वादशं प्रकरणम्।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे दशनच्छेद्यविधयो देश्या उपचाराश्च पञ्चमोऽध्यायः।

## षष्ठोऽध्यायः ।

एवं देशप्रकृतिसात्म्यापेक्षयाऽऽलिङ्गनाद्युपचाराज्ज्ञातरागयोः संवेशनयोग्यत्वात्संवेशनप्रकाराः, तथा संवेशनविशेषत्वाच्चित्ररतानीति प्रकरणद्वयमत्राध्याये ।

यदाह—

रागकाले विशालयन्त्येव जघनं मृगी संविशेदुच्चरते ॥ १ ॥

रागकाल इति । रागकालो यत्र स्तब्धलिङ्गता, साधनसम्बाधयोः संयोगार्थं संवेशनं, तच्च तदानीमेव युज्यते, तेन प्रमाणतो रतमधिकृत्य; संवेशनप्रकाराः, तेनात्र विषमरतेषु प्रमाणान्तरासङ्क्रान्तिर्द्रष्टव्या, विशालयन्त्येवेति । ऊर्वोर्विश्लेषणात् प्रसारयन्ती तत्प्रसारणादस्य वर्धनं, केवलं जघनं विवृतमुखम्भवति, उच्चरत इति । वृषेण सम्प्रयुज्यमाना मृगी संविशेच्छयीत, तस्याः संवृतरन्ध्रत्वाद्, उपलक्षणं चैतद्, उच्चतररते चाश्वेन सम्प्रयोक्ष्यमाणा जघनं विशालयन्तीव संविशेद्, अत्रातिदेशं वक्ष्यति ॥ १ ॥

अवह्रासयन्तीव हस्तिनी नीचरते ॥ २ ॥

अवह्रासयन्तीवेति । ऊर्वोः संश्लेषणात्सङ्कोचयन्तीव, यथा संवृतमुखं भवति, हस्तिनी नीचरते वृषेण सम्प्रयोक्ष्यमाणा संविशेदित्येव, तस्या बहलरन्ध्रत्वाद्, शशेन तु नीचतररतेऽवह्रासयन्तीव, अत्राप्यतिदेशं वक्ष्यति ॥ २ ॥

न्याय्यो यत्र योगस्तत्र समपृष्ठम् ॥ ३ ॥

यत्र यस्मिन्रते न्यायादनपेतो योगः स्वभावसिद्धत्वात् समरत इत्यर्थः, तत्र समपृष्ठं संविशेदित्येव क्रियाविशेषणमेतत्, सङ्कोचनप्रसारणाभावात्समं जघनपृष्ठं यस्यां क्रियायामिति ॥ ३ ॥

आभ्यां बडवा व्याख्याता ॥ ४ ॥

साऽप्युच्चरतेऽश्वेन संप्रयोक्ष्यमाणा विशालयन्तीव, शशेनावह्रासयन्तीव, न्याय्यो यत्र वृषेण तत्र समपृष्ठं संविशेदिति, आभ्यां=मृगीहस्तिनीभ्यां, व्याख्याता, यथा चोक्तम्—

'विवृतोरुकमुच्चे तु नीचे स्यात्संवृतोरुकम् ।
तथा स्थितोरुकं चापि समपृष्ठं समे रते' ॥ ४ ॥

संवेशनस्य प्रतिग्रहफलत्वात्प्रतिग्रहमाह—

तत्र जघनेन नायकं प्रतिगृह्णीयात् ॥ ५ ॥

तत्रेति । संकोचनप्रसारणभेदात्समपृष्ठाच्च त्रिविधे संवेशने जघ-

नेन स्वेन नायकं प्रतिगृह्णीयात्, स्तब्धलिङ्गं प्रतीच्छेदित्यर्थः ॥ ५ ॥

अपद्रव्याणि च सविशेषं नीचरते ॥ ६ ॥

अपद्रव्याणि चेति । वृषेण शशेन वा प्रयुज्यमानानि कृत्रिमसाधनानि वडवा हस्तिनी वा प्रतिगृह्णीयादित्येव, तत्रापि विशेषः–यदि समरतं साधनसदृशं कृत्रिमं तदा नावह्रासयन्ती विशालयन्ती वा, ततोऽप्यधिकं चेद्विशालयन्तीव प्रतिगृह्णीयादित्यर्थः, नीचरत इति । उच्चरतेऽपद्रव्यप्रयोगासम्भवात् ॥ ६ ॥

यया युक्त्या विवृतं संवृतं वा जघनं स्यात्तद्यथाक्रममाह—

उत्फुल्लकं विजृम्भितकमिन्द्राणिकं चेति त्रितयं मृग्याः प्रायेण॥७॥

उत्फुल्लकमिति । समरते लौकिकी युक्तिरुक्ता न शास्त्रीया, लोके हि ग्राम्यनागरभेदादुत्तानायाः संवेशनद्वयं प्रतीतं पार्श्वे च संपुटकं,- तत्त्रितयमपि समपृष्ठं घटयतीति, यथा चोक्तम्—

'ग्राम्यमासीनकान्तोरुविन्यस्तप्रमदोरुकम् ।
नागरं च नरोरुस्थं स्त्रीपादाम्भोरुहद्वयम् ॥'

त्रितयमिति । त्र्यवयवं संवेशनम्, प्रायेणेत्येकान्तेन ॥ ७ ॥

शिरो विनिपात्योर्ध्वं जघनमुत्फुल्लकम् ॥ ८ ॥

शिर इति । शिरोभागमधस्ताच्छय्यायां विनिपात्योत्तानमूर्ध्वं जघनं कुर्यादितिभेदमेवंरूपं पश्चाद्भागेनेत्यर्थः, यद्यपि तत्स्वतो भवति तथाऽप्यतिविस्तारणार्थमुपर्युपरिस्थितपृष्ठे त्रिकभागं विनिवेशयेत्, पादपार्ष्णी च स्फिचोर्बाह्यतः, एवं जघनस्योर्ध्वं विवृतत्वादुत्फुल्लमिवोत्फुल्लकम् ॥ ८ ॥

तत्रापसारं दद्यात् ॥ ९ ॥

तत्रेति । उत्फुल्लके, अपसारं दद्यादिति । नायकेन यन्त्रेण संयोज्यमाना कटिभागेनापसरेद्, नायको वा शनैः शनैः संयोज्यापसरेद्, यावदार्द्रसंबाधता न भवति, सहसोपसृप्ताया हि पीडा, नायकस्य च लिङ्गचर्मोद्वर्तनं, यदवपाटिकेति वैद्यैरुच्यते ॥ ९ ॥

अनीचे सक्थिनी तिर्यगवसज्य प्रतीच्छेदिति विजृम्भितकम्॥१०॥

अनीचे इति । सक्थिनी=ऊरू, तिर्यगवसज्येति । तिरश्चीने कृत्वा, तत्रापि शय्यायां पादयोरुत्तानविन्यासादपि तिरश्चीने भवतः, किं तु नीचैरित्याह—अनीचेति । प्रतीच्छेन्नायकमित्यर्थः, जृम्भितमिवेति । जघनमिति, विवृतास्यत्वाज्जृम्भितमिव ॥ १० ॥

पार्श्वयोः सममूरू विन्यस्य पार्श्वयोर्जानुनी निदध्यादित्य-भ्यासयोगादिन्द्राणी ॥ ११ ॥

पार्श्वयोरिति । जङ्घासंश्लिष्टावूरू पार्श्वयोः सममनुकायं विन्यस्य पार्श्वयोर्जानुनी निदध्यात्, कक्षावहिर्भागयोरित्यर्थः, एवं च बाहुमूलाभ्यामवष्टभ्य गृहीतत्वात्पूर्वस्माद्विवृततरं भवति, अभ्यासयोगादिति । सहसा निष्पादयितुमशक्यत्वादस्याः, इन्द्राणीति । शचीप्रोक्तत्वात्तत्संज्ञया व्यपदेशः, तत्राप्यपसारं दद्यादिति योज्यम् ॥ ११ ॥

तयोच्चतररतस्यापि परिग्रहः ॥ १२ ॥

तयेति । इन्द्राण्या, उच्चतररतस्यापीति । न केवलमिन्द्राण्या मृगी वृषं प्रतीच्छेत् प्रतिगृह्णीयाद्, अश्वमपि, तस्या धृतरागत्वाद्विवृतरागहेतुत्वात्, तत उच्चतररतेति । विशालयन्तीवेति सिद्धं भवति, तदुत्फुल्लकजृम्भितकाभ्यां तु मृगी वृषमेव, वडवाऽपि ताभ्यामेवाश्वमित्यर्थोक्तम्, पूर्वमतिदिष्टत्वात् ॥ १२ ॥

संपुटेन प्रतिग्रहो नीचरते ॥ १३ ॥

संपुटेनेति । हस्तिनी संपुटेन वक्ष्यमाणलक्षणेन वृषं प्रतिगृह्णीयादित्यर्थः ॥ १३ ॥

एतेन नीचतररतेऽपि संपुटकं पीडितकं वेष्टितकं वाडवकमिति हस्तिन्याः ॥ १४ ॥

नीचतररतेऽपीति । शशमपि प्रतिगृह्णीयादित्यर्थः, तस्य संवृतहेतुत्वात्, तेन च प्रतिगृहीते पीडितकादि प्रयोक्तव्यं, तेनाप्यवहासयन्तीवेति सिद्धं, वडवाऽपि संपुटकेन शशं प्रतिगृह्णीयादित्यर्थोक्तम्, पूर्वमतिदिष्टत्वात् ॥ १४ ॥

संपुटकयुक्तिमाह—

ऋजुप्रसारितावुभावप्युभयोश्चरणाविति संपुटः ॥ १५ ॥

ऋज्विति । प्रगुणं प्रसारितौ यथा यन्त्रयोगः स्याद्, उभयोरिति । स्त्रीपुंसयोः, संपुट इति । संपुट इवोभयोरेकत्र संश्लेषात् ॥ १५ ॥

स द्विविधः पार्श्वसंपुट उत्तानसंपुटश्च तथा कर्मयोगात् ॥१६॥

तथा कर्मयोगादिति । तेन प्रकारेण रतानुष्ठानयोगादित्यर्थः, तत्र पार्श्वसंविष्टयोः पार्श्वसंपुटः, उत्तानसंविष्टाया उपर्यर्वाक् संविष्टस्यैकः, विपर्ययेण द्वितीय इति द्विविध उत्तानसंपुटकोऽन्यतरेण व्यपदिश्यते, कथमत्र यन्त्रयोग इति नाशङ्कनीयं सुकरत्वात्, पार्श्वसंपुटके तु ना-

यकस्य कटिरुपधानिकायां तिष्ठेद्, नायिकायाश्च शयनीये, अन्यथा शयनीयस्थयोर्द्वयोः कटिभागयोर्विश्लेषाद्यन्त्रं कदा चिद्विघटेत, कात्यायनस्तु संपुटकमन्यथा प्राह—

'कुञ्चितस्तननार्यूरुसंक्रान्तनृकटिः पुरः ।
त्र्यस्रस्थनरयोगात्तु संमुखः संपुटः स्मृतः' ॥ इति,

अत्रासंहतोरुत्वाज्जघनावह्रासो न संभवति, अतो न नीचरते हस्तिन्याः, समरते तु स्याद्, यथास्थितोरुकतयाऽस्य लौकिकत्वात् ॥ १६ ॥

पार्श्वेण तु शयानो दक्षिणेन नारीमधिशयीतेति सार्वत्रिकमेतत्॥१७॥

पार्श्वेण तु शयान इति। निद्रां गन्तुं, दक्षिणेन नारीमिति। एनपा योगे द्वितीया, नार्या दक्षिणे भाग आत्मनो वामेन पार्श्वेणासनपरिणता शयनीयमधिशयीतेत्यर्थः, सार्वत्रिकमिति। सर्वास्वेव मृग्यादिनायिकास्वयं निद्राकाले भवत्यविरोधाद्, रतकाले तु तद्विपरीतो हस्तिन्या एव संकोचहेतुत्वाद्, वामहस्तेन तत्र गुह्यस्पर्शनादौ शिष्टानुज्ञातत्वात् ॥ १७ ॥

संपुटकप्रयुक्तयन्त्रैव दृढमूरू पीडयेदिति पीडितकम् ॥ १८ ॥

संपुटकप्रयुक्तयन्त्रैवेति। उत्तानसंपुटे पार्श्वसंपुटे वा, तत्प्रयुक्तयन्त्रा नायिका दृढं द्वावूरू परस्परं पीडयेत्ततोऽतिपीडनात्संपुटकमेव पीडितकमिति संवृताकारं भवतीति ॥ १८ ॥

ऊरू व्यत्यस्येदिति वेष्टितकम् ॥ १९ ॥

संपुटकप्रयुक्तयन्त्रैवेत्यर्थः। तत्राप्युत्तानसंपुटके वामं दक्षिणतो नयेद् दक्षिणं वामत इति, तदेवं परस्परोरुवेष्टनाज्जघनं पूर्वस्मात्संवृततरं भवति, तत्र स्वभावेन सिद्धत्वात् ॥ १९ ॥

बडवेव निष्ठुरमवगृह्णीयादिति बाडवकमाभ्यासिकम् ॥२०॥

निष्ठुरं=निश्चलम्, अवगृह्णीयात् संबाधौष्ठपुटेन साधनमित्यर्थः, बाडवकं=बडवाया इदं कर्म, आभ्यासिकं, सहसा सम्प्रयोगे प्रयोक्तुमशक्यत्वात् ॥ २० ॥

तदान्ध्रीषु प्रायेणेति संवेशनप्रकारा बाभ्रवीयाः ॥ २१ ॥

आन्ध्रीषु प्रायेण दृश्यते, तासां यत्नपरत्वात्, तस्याभ्यासोपायश्च संप्रदायनिरूप्यः, ततोऽभ्यासात्तन्निरपेक्षग्रहणमिति, बाभ्रवीयाः=बाभ्रव्येण प्रोक्ताः, सप्तैव संवेशनप्रकाराः ॥ २१ ॥

अनेन विकल्पवर्गस्य न्यूनतामाह—

सौवर्णनाभास्तूभावप्यूरू ऊर्ध्वाविति तद्भुग्नकम् ॥ २२ ॥

सौवर्णनाभास्तु । हस्तिन्या इति वर्तते, सुवर्णनाभेन प्रोक्ताः, अनेन द्वैविध्यमाह, उत्ताना नायिका द्वावप्यूरू संश्लिष्टावूर्ध्वावेवावस्थापयेद्, नायकोऽपि जान्वन्तरेण दोर्भ्यां तावाश्लिष्योपसर्पेत्, तद् भुग्नकमिति, ऊर्वोरूर्ध्वं निःसृतत्वात् ॥ २२ ॥

चरणावूर्ध्वं नायकोऽस्या धारयेदिति जृम्भितकम् ॥ २३ ॥

चरणावूर्ध्वमिति । नायिकाजानुसंधी स्कन्धयोर्विन्यस्य; चरणावूर्ध्वं नायकेन धारितौ भवत इति जृम्भितकम् ॥ २३ ॥

तत्कुञ्चितावुत्पीडितकम् ॥ २४ ॥

तत्कुञ्चितौ । धारयेदित्येव, नायकोरसि चरणौ निदध्याद्, नायकोऽपि बाहुपाशेन नायिकाया ग्रीवामावेष्ट्योपसर्पेद्, एवं चरणावूर्ध्वं-संकुचितावधस्तादुरसा धारितौ स्यातां, द्वयोश्चोरसि पीडनादुत्पीडितकम् ॥ २४ ॥

तदेकस्मिन्प्रसारितेऽर्धपीडितकम् ॥ २५ ॥

तदिति । पीडितकम्, एकस्मिंश्चरणे प्रसारिते व्यत्यासेनेति द्वितीयमप्यर्धपीडितकम् अर्धपीडनात् ॥ २५ ॥

नायकस्यांस एको द्वितीयकः प्रसारित इति पुनः पुनर्व्यत्यासेन वेणुदारितकम् ॥ २६ ॥

नायकस्यांसे स्कन्धे वामश्चरणः स्थितः, क्षणादनु तदधस्तात्प्रसारित इत्येकम्, पुनर्व्यत्यासेन दक्षिणस्कन्धे वामः प्रसारित इति द्वितीयं, वेणुदारितकमिति । वंशस्येव दारणं पाटनम् ॥ २६ ॥

एकः शिरस उपरि गच्छेद्द्वितीयः प्रसारित इति शूलाचितकमाभ्यासिकम् ॥ २७ ॥

एक इति । वामो दक्षिणो वा चरणः, शिरस इति । नायिकायाः, द्वितीय इति । दक्षिणो वामो वाऽधः, एवं द्विविधं शूलाचितकं, शूल इवारोपणाच्छूलभिन्नवच्छरीरस्य लक्ष्यमाणत्वाद्, आभ्यासिकम्, अन्यथा कथमुपरितनजङ्घाकाण्डः स्थगितकः स्यात् ॥ २७ ॥

संकुचितौ स्ववस्तिदेशे निदध्यादिति कार्कटकम् ॥ २८ ॥

संकुचितौ नायिकाचरणौ जानुसंकोचात्स्ववस्तिदेशे स्वनाभिमूले निदध्यान्नायकः, कार्कटकमिति । कर्कटस्येवेदं कर्म, यदग्रचरणौ तथा तिष्ठतः ॥ २८ ॥

ऊर्ध्वावूरू व्यत्यस्येदिति पीडितकम् ॥ २९ ॥

ऊर्ध्वावूरू व्यत्यस्येदिति । उत्तानं वामं दक्षिणतो नयेद्, दक्षिणं वामतः, पीडितकं जघनपीडनात् ॥ २९ ॥

जङ्घाव्यत्यासेन पद्मासनवत् ॥ ३० ॥

जङ्घाव्यत्यासेनेति । उत्ताना नायिका दक्षिणपादं वामे स्वोरुमूले निदध्याद्, वामं च दक्षिणे, पद्मासनमिति प्रतीतम् ॥ ३० ॥

पृष्ठं परिष्वजमानायाः पराङ्मुखेण परावृत्तकमाभ्यासिकम् ॥३१॥

पृष्ठमिति । यन्त्रमविश्लिष्य; पूर्वकायेन परावृत्तस्य नायकस्य पृष्ठमुपगूहमानायाः परावृत्तकम्, पराङ्मुखेण नायकेन संप्रयोगाद्, उपलक्षणं चैतत्, पृष्ठमुपगूहमानस्य पराङ्मुख्या परावृत्तकम्, आभ्यासिकं, सहसा कर्तुमशक्यत्वाद्, उभयकायं परिवृत्य; संविष्टायाः पृष्ठमुपगूहमानस्य पराङ्मुख्या परावृत्तकमाभ्यासिकमर्थोक्तम् ॥ ३१ ॥

एते संवेशनप्रकारा न चित्राः, लोके हि स्थले पृष्ठतः पार्श्वतो वा शयनं प्रतीतं, ततोऽन्यच्चित्रं, तदेतैरुपलक्षयेदिति दर्शयन्नाह—

जले च संविष्टोपविष्टस्थितात्मकांश्चित्रान्योगानुपलक्षयेत् तथा सुकरत्वादिति सुवर्णनाभः ॥ ३२ ॥

जले चेति । चकारात्स्थले च, तत्राप्सु क्रीडायां कूले शिरो निधाय; संविष्टयोः संवेशनात्मकोऽपि यः स्थलाभावाच्चित्रयोगस्तं संपुटेन परावृत्तकेन चोपलक्षयेद्, उपविष्टस्य नायकस्योपवेशनात्मकैस्तैः सर्वैरेव प्रकारैः, ऊर्ध्वस्थितायाः स्थितात्मकः स्थले शयनाभावाद्, चित्रो योगस्तंशूलाचितके, तथा सुकरत्वादिति : तैः प्रकारैः संयोगस्याप्सु सौकर्यात्॥३२॥

वार्तं तु तत् शिष्टैरपस्मृतत्वादिति वात्स्यायनः ॥ ३३ ॥

वार्तं त्विति । तथा सुकरत्वादिति सत्यं वार्तं तु तद्, असारमित्यर्थः । शिष्टैरपस्मृतत्वादिति । स्मृतिकारैर्निषिद्धत्वादित्यर्थः, तथा च गौतमीयवचनम्—'अप्सु मिथुनसंयोगे नरक, इति, प्रायश्चित्तविधाने भार्गववचनम्—

'रेतः सिक्त्वा जले चैव कृच्छ्रं चान्द्रायणं चरेद्' इति,
तस्मात्स्थलप्रयोज्यमेव चरेत् ॥ ३३ ॥

संवेशनप्रकारास्त्रयोदशं प्रकरणम् ॥

प्रकरणसम्बन्धमाह—

अथ चित्ररतानि ॥ ३४ ॥

अथेति। संवेशनप्रस्तावे तद्विशेषत्वात्स्थलप्रयोज्यानीत्युच्यन्ते॥३४॥

तत्रोर्ध्वमधिकृत्याह—

ऊर्ध्वस्थितयोर्यूनोः परस्परापाश्रययोः कुड्यस्तम्भापाश्रितयोर्वा स्थितरतम् ॥ ३५ ॥

परस्परापाश्रययोरिति । आश्रयान्तराभावाद्बाहुपाशेनान्योन्योपलग्नयोः, कुड्यस्तम्भापाश्रितयोरिति । नायिकायां कुड्ये स्तम्भे वाऽपाश्रितायां द्वितीयोऽपि तदाश्रयादाश्रित इत्युक्तं, स्थितरतं च द्वयोरूर्ध्वं स्थितत्वात्, करणत्रयमत्रान्तर्भूतं, यथोक्तम्—

'उत्क्षिप्तप्रमदापादमेकेन नरपाणिना ।
प्रसारणविशेषेण व्यायतं संमुखं स्मृतम् ॥
नारीपादतलन्यासान्नरहस्ततले तु यत् ।
कुञ्चितप्रमदाजानुद्वयं द्वितलसंज्ञितम् ॥
नरकूर्परविन्यस्तस्त्रीनिकुञ्चितजानुकम् ।
जानुकूर्परमुद्दिष्टमिति शुद्धो विधिः स्मृतः' इति ॥ ३५ ॥

कुड्यापाश्रितस्य कण्ठावसक्तबाहुपाशायास्तद्धस्तपञ्जरोपविष्टाया ऊरुपाशेन जघनमभिवेष्टयन्त्या कुड्ये चरणक्रमेण वलन्त्या-अवलम्बितकं रतम् ॥ ३६ ॥

कुड्यापाश्रितस्येत्युपलक्षणार्थत्वात्स्तम्भापाश्रितस्य नायकस्य कण्ठेऽवसक्तोऽवलग्नो बाहुपाशो यस्या इति विग्रहः, तद्धस्तपञ्जरेति । नायकस्य हस्ताभ्यां वेणीबन्धेन घटितपञ्जरे समुपविष्टाया ऊरुपाशेन जघनं नायकस्य वेष्टयन्त्याः, चरणक्रमेण वलन्त्या इति । कुड्ये स्तम्भे वा पुनः पुनश्चरणविक्षेपेण कटिं प्रेङ्खयन्त्याः, अवलम्बितकं, नायककण्ठान्नायिकाया अवलम्बनाद्, एतदुभयं वहायसिकत्वाच्चित्रम् ॥ ३६ ॥

भूमौ वा चतुष्पदवदास्थिताया वृषलीलयाऽवस्कन्दनं धैनुकम् ॥ ३७ ॥

चतुष्पदवदिति । सामान्यनिर्देशो वक्ष्यमाणापेक्षस्तत्र धेनुकावच्चतुर्भिर्गात्रैरधोमुखमवस्थितायाः, वृषलीलयेति । वृषचेष्टया नायकस्यावस्कन्दनं कटिभागेऽभिपतनं, धैनुकमिति । धेनुकाया इदम्, एतच्चामनुष्यधर्माचरणाच्चित्रम् ॥ ३७ ॥

तत्र पृष्ठमुरःकर्माणि लभते ॥ ३८ ॥

तत्रेति । धैनुके, पृष्ठमुरःकर्माणि लभत इति । यानि नायिकोरसि प्रहणनच्छेद्योपगूहनादीनि तानि पृष्ठे प्रयुञ्जीतेत्यर्थः ॥ ३८ ॥

एतेनैव योगेन शौनमैणेयं छागलं गर्दभाक्रान्तं मार्जारललि-

तकं व्याघ्रावस्कन्दनं गजोपमर्दितं वराहधृष्टकं तुरगाधिरूढकमिति यत्र यत्र विशेषो योगोऽपूर्वस्तत्तदुपलक्षयेत् ॥ ३९ ॥

एतेनेति। धैनुकयोगेन शौनादिकमुपलक्षयेदित्यर्थः, श्वादीनां चतुष्पदत्वात्तद्गतमनेन व्याख्यातमित्यवगच्छेदित्यर्थः, विशेषप्रतिपत्तौ तु कारणमाह—यत्र यत्रेति। यस्मिन्यस्मिन् येन येन विशेषेण स्वरगतेन च कायगतेन योगोऽपूर्वो दृश्यते तत्तदुपलक्षयेत्, तत्र शुनीवदवस्थिता श्वलीलया नायकस्यावस्कन्दनम्, एवं छगलीवच्छगललीलया च्छागलम्, एणीवदेणलीलयैणेयम्, 'एण्या ढञ्' ।४।३।१६। व्यापारस्यापि विकारत्वाद्, गर्दभीवद् गर्दभलीलयाऽऽक्रमणं गर्दभाक्रान्तकम्, मार्जारीवन्मार्जारलीलया च ललितकं मार्जारललितकं, व्याघ्रीवद्व्याघ्रलीलयाऽवस्कन्दितं व्याघ्रावस्कन्दनं, गजवद्गजलीलयोपमर्दनं गजोपमर्दितं, तुरगीवत्तुरगलीलयाऽधिरोहणं तुरगाधिरूढकम्, अत्र श्वादीनां स्वरकायगतं चेष्टितं प्रत्यक्षतोऽवगन्तव्यम्, अप्रत्यक्षीकृतस्य प्रयोक्तुमशक्यत्वात् ॥ ३९ ॥

मिश्रीकृतसद्भावाभ्यां द्वाभ्यां सह संघाटकं रतम् ॥ ४० ॥

मिश्रीकृतसद्भावाभ्यामिति। दंपत्योर्हि रतं, द्वाभ्यां तु परस्परोपजनितविश्वासाभ्यां नायिकाभ्यां सहैकस्य नायकस्य रतं चि संघाटकाख्यम्, एकशयने स्त्रीयुग्मस्य युगपत्संप्रयुज्यमानत्वाद्, यदव हि पुरुषोपसृप्तैरेकस्या रागापनयनं तदैवापरस्याश्चुम्बनादिना रागजननं, ततोऽस्या रागापनयनं प्रशान्तरागायाश्च रागजननमिति ॥ ४० ॥

बह्वीभिश्च सह गौयूथिकम् ॥ ४१ ॥

बह्वीभिश्च=मिश्रीकृतसद्भावाभिः, सहैकस्य चित्ररतं गौयूथिकं, वृषस्येव गोयूथे स्त्रीसमूहे वर्तनात् ॥ ४१ ॥

वारीक्रीडितकं छागलमैणेयमिति तत्कर्मानुकृतियोगात् ॥ ४२ ॥

वारीक्रीडितकमिति। वार्यां गजस्येव करिणीभिः स्त्रीभिः सह रमणात्, तथा छगलवदेणवच्च स्त्रीभिः सह छागलमैणेयमिति, तत्कर्मानुकृतियोगादिति। वृषादीनां गवादिषु यत्स्वरगतं कायगतं च कर्म तदनुकृतियोगात्तथा व्यपदिश्यत इत्यर्थः, यथैकस्य द्वाभ्यां बह्वीभिश्च तथा द्वाभ्यां नायकाभ्यां बहुभिश्चैकस्या रतं सम्भवति, तत्र नायकसंघाटकेनैकस्या वक्ष्यमाणयोगेन काम्यमानत्वात्संघाटकं रतं, द्वयोर्वा संविष्टयोः पुरुषायितेन काम्यमानत्वाद्, यथोक्तम्—

'ऊरुव्यत्याससंविष्टपरिवर्तितदेहयोः।
वृषयोरुन्नतं चिह्नं हस्तिन्याः पुरुषायिते ॥'

बहुभिश्च गौयूथिकं, वृषगोयूथस्येवैकस्यां गवि स्त्रियां नायकयूथस्य प्रवर्तनात्, तथा वारीक्रीडितकमित्यादि तत्कर्मानुकृतियोगात्तदेव गौयूथिकादिरतम् ॥ ४२ ॥

देशप्रवृत्तिं दर्शयन्नाह—

**ग्रामनारीविषये स्त्रीराज्ये च बाह्लीके बहवो युवानोऽन्तःपुरसधर्माण एकैकस्याः परिग्रहभूताः, तेषामेकैकशो युगपच्च यथासात्म्यं यथायोगं च रञ्जयेयुः ॥ ४३ ॥**

ग्रामनारीविषय इति। स्त्रीराज्यसमीप एव परतो ग्रामनारीविषयः, युवानो व्यवायक्षमाः, अन्तःपुरसधर्माणो रक्षणयोगादस्वतन्त्राः, एकस्या योषितः परिग्रहं गताः, खरवेगत्वान्नैकेन तुष्टिरिति, ते तां कथं रञ्जयेयुरित्याह-एकैकशो युगपच्चेति। एकैकेन कर्मणा यौगपद्येन चेत्यर्थः, यथासात्म्यं यथायोगं चेति। येन यस्या उपचारेण सात्म्यं यत्र यस्य च युज्यते प्रयोगस्तेन तामनुरञ्जयेयुः, तस्यास्तृप्तिं जनयेयुरित्यर्थः ॥ ४३ ॥

तदेवैकैकं कर्म यौगपद्यं च दर्शयन्नाह—

**एको धारयेदेनामन्यो निषेवेतान्यो जघनं मुखमन्यो मध्यमन्य इति वारं वारेण व्यतिकरेण चानुतिष्ठेयुः ॥ ४४ ॥**

एको धारयेदिति। यस्याङ्कमपाश्रित्य संविष्टा, मुखमन्यो निषेवेत चुम्बनदशननखक्षतैः, जघनमन्य उपसृप्तकैः, मध्यं मुखजघनयोश्चुम्बननखदशनच्छेद्यप्रहणनैरन्य इत्येकैकेन कर्मणा, युगपच्चेति। तत्रापि पुनर्विधानान्तरमाह–वारं वारेणानुतिष्ठेयुरिति। वारं नियोगं वारेण परिपाट्या, तत्र यो जघनं निषेवितवान्, स निवृत्तरागत्वाद्वारेण वारमनुतिष्ठेद्, वारेण वारिको मुखवारं तद्वारिको मध्यवारं तद्वारिकश्च जघनवारमिति, व्यतिकरेण चेति। द्वितीयकर्मसंयोजनेन च, तद्यथा—जघनसेवको जघनं मध्यं च निषेवेत, मध्यसेवको मध्यं मुखं च, तत्सेवकश्च मुखं मध्यं च, वारिको धारयन्मुखं च निषेवेतेति, अनेन विधिना तावदनुतिष्ठेयुर्यावत्सर्व एव जघनवारमनुप्राप्ताः ॥ ४४ ॥

**एतया गोष्ठीपरिग्रहा वेश्या राजयोषापरिग्रहाश्च व्याख्याताः ॥४५॥**

एतयेति। यथोक्तया स्त्रिया, अन्यत्रापि देशे सम्भवत्येतदतिदेशेन दर्शयति—गोष्ठीपरिग्रहा इति। विटैः सम्भूय परिगृह्यते या वेश्या, गोष्ठी येषां परिग्रह इति योषिच्छब्दसमानार्थो योषाशब्दः, संहत्यान्तःपुरिकाभिर्योषिद्भिर्ये परिगृह्यन्ते परपुरुषाः, वक्ष्यति च—

'संहत्य नव दशेत्येकैकं युवानं प्रच्छादयन्ति प्राच्यानाम्' इति,

वेश्यां विटाः, युवानं च स्त्रियः पूर्ववदनुरञ्जयेयुरित्यर्थः, बह्वीभिश्च गौयूथिकमित्येतत्स्वदारेषु नायकव्यापारमधिकृत्योक्तम् ॥ ४५ ॥

अधोरतं पायावपि दाक्षिणात्यानाम् ॥ ४६ ॥

इति चित्ररतानि ।

अधोरतमिति । अपानस्य जघनाधःस्थितत्वात्, तच्च स्त्रीपुंसविषयभेदेन द्विविधं, तदपि विमार्गमेहनाच्चित्रम्, औपरिष्टिकं तु तृतीयाप्रकृतिविषयत्वान्न चित्रं, स्त्रीपुंसयोश्च चित्रमेव, विमार्गमेहनाद्, दाक्षिणात्यानामिति । देशप्रवृत्तिं दर्शयति ॥ ४६ ॥

पुरुषोपसृप्तकानि पुरुषायिते वक्ष्यामः ॥ ४७ ॥

पुरुषोपसृप्तानि तु संवेशनानन्तरत्वादवसरप्राप्तान्यपि पुरुषायिते वक्ष्यामः ॥ ४७ ॥

तत्राप्युपयोगित्वाच्चित्रस्य वर्धनमाह—

भवतश्चात्र श्लोकौ—

पशूनां मृगजातीनां पतङ्गानां च विभ्रमैः ।
तैस्तैरुपायैश्चित्तज्ञो रतियोगान्विवर्धयेत् ॥ ४८ ॥

पशूनामिति । तत्राधोदशनाः पशवः, ऊर्ध्वाधोदशना मृगाः, पतङ्गाः=पक्षिणः, तैस्तैरिति । ये ये प्रत्यक्षत उपलब्धाः, विभ्रमैरिति । विचेष्टितैः स्वरकायगतैः, चित्तज्ञ इति । स्त्र्यभिप्रायं बुद्ध्वेत्यर्थः, रतियोगानिति । रत्यर्थान्योगान्, विवर्धयेदपरानपरान्प्रयोजयेदित्यर्थः ॥ ४८ ॥

तद्विवर्धने किं फलमित्याह—

तत्सात्म्याद्देशसात्म्याच्च तैस्तैर्भावैः प्रयोजितैः ।
स्त्रीणां स्नेहश्च रागश्च बहुमानश्च जायते ॥ ४९ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे संवेशनप्रकाराश्चित्ररतानि च षष्ठोऽध्यायः ।
आदित एकादशः ।

तत्सात्म्यादिति । नायिकायाः प्रकृतिसात्म्याद्, देशसात्म्यं प्रागुक्तं, तैस्तैरिति । पश्वादिविभ्रमैः, भावैरिति । भावहेतुत्वात्प्रयोजितैः, नायिकया प्रयोजितया तदभिप्रायेण हि नायकेन प्रयुज्यमानत्वाद्, भावैर्वा प्रयोजकैरिति योज्यं, स्नेहः=सक्तिः, रागस्तृप्तिः, बहुमानो गौरवं विदग्ध इति ॥ ४९ ॥

चित्ररतानि चतुर्दशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे संवेशनप्रकाराश्चित्ररतानि च षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः ।

एवं संविष्टाया यन्त्रयोगे प्राधान्येन प्रहणनमिति प्रहणनप्रयोगाः, प्रहणनोद्भवत्वाच्च सीत्कृतस्य तद्युक्ता एव सीत्कृतक्रमा इति प्रकरणद्वय मत्राध्याये, यथा प्रहणनस्य प्रयोग इति सूचनार्थं क्रमग्रहणम् ,

प्रहणनं द्वेषजननं कथं सुरतोपयोगीत्याह—

कलहरूपं सुरतमाचक्षते विवादात्मकत्वाद्वामशीलत्वाच्च कामस्य ॥ १ ॥

कलहरूपमिति । कलहसदृशमित्यर्थः, कथमित्याह—विवादात्मकत्वादिति । स्त्रीपुंसयोः स्वार्थसिद्धये परस्पराभिभवेन संप्रयुज्यमानत्वाद्विवादात्मकं, वामशीलत्वाच्चेति । प्रतिकूलस्वभावत्वात्कामस्य, यत्सुकुमारक्रमलब्धजन्मनोऽपि मनोभवस्य सुरते निर्दयोपक्रमेणातिबाह्यमानत्वात्, तथा चोक्तं-किरातार्जुनीये ९।४९

'आहृता नखपदैः परिरम्भाश्चुम्बितानि नखदन्तनिपातैः ।
सौकुमार्यगुणसम्भृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥,

अत्रापिशब्दो भिन्नक्रमः सौकुमार्यगुणसंभृतकीर्तिरपि सुरतेषु वाम एवेति, तेन हेतुफलभावेनावस्थानात्कामस्य स्वभावद्वयम्, एकः संप्रयोगेच्छालक्षणः, अन्यो विसृष्टिलक्षण इति ॥ १ ॥

तस्य रागवशात्प्रहणनमङ्गं स्कन्धौ शिरः स्तनान्तरं पृष्ठं जघनं पार्श्वे इति स्थानानि ॥ २ ॥

तस्य=सुरतस्य, प्रहणनमङ्गमुपकरणं, स्थानानीति । प्रहणनस्य ॥२॥

तच्चतुर्विधमपहस्तकं प्रसृतकं मुष्टिः समतलकमिति ॥ ३ ॥

तदिति । प्रहणनं घातश्चतुर्विधम् , अपहस्तकादिप्रहणनस्य चतुर्विधत्वात्, प्रहण्यते वा स्थानमनेनेति प्रहणनमपहस्तकादीनि, करणे ल्युट्, तत्रापहस्तको हस्तपृष्ठं प्रसृताङ्गुलि, प्रसृतकं वक्ष्यति, मुष्टिः प्रसिद्धः, समतलकं=सुस्थिरहस्ततलं, यस्य मुस्तकेति प्रसिद्धिः॥३॥

द्वितीयं प्रकरणं प्रहणनान्तर्गतमिति दर्शयन्नाह—

तदुद्भवं च सीत्कृतं तस्यातिरूपत्वात् तदनेकविधम् ॥ ४ ॥

तदुद्भवं चेति । तदुद्भवं प्रहणनादुद्भवतीति, कुत एतदित्याह–तस्यातिरूपत्वादिति । सीत्कृतं हि पीडया जन्यमानत्वात्तद्रूपमित्युक्तं, यथा कलहे प्रहणनात्पीडया सीत्कृतं क्रियते तथेहापि पीडाद्योतनार्थं यच्छब्दितं तत्सीत्कृतमिव सीत्कृतं पूर्वाचार्यैः संज्ञितं, न तु सीत्करणमेव सीत्कृतं, यदाह—तदिति । सीत्कृतमनेकविधं, हिंकारादिभेदात् ॥ ४ ॥

विरुतानि चाष्टौ ॥ ५ ॥

विरुतानीति । तानि मूलवर्गेण संगृहीतानि सीत्कृतप्रकरण एव ध्वनिस्वभावत्वादुक्तानि, तेषां च रतिजन्यत्वात्प्रहणने च मनोज्ञत्वात्प्रयोगः, सीत्कृतस्य तु प्रहणन एवेति विशेषः ॥ ५ ॥

हिंकारस्तनितकूजितरुदितसूत्कृतदूत्कृतफूत्कृतानि ॥ ६ ॥

तत्र हिंकारो यः सानुनासिकेन हिशब्देन क्रियते कण्ठनासिकाभ्यामूर्ध्वं गच्छन्मधुरो ध्वनिर्निष्पाद्यते, स्तनितं मेघस्येव यद्गम्भीरं ध्वनितं; तच्च कण्ठाद्धुंशब्देन निष्पाद्यते, रुदितं प्रतीतं तच्च मनोहारि स्यात्, सूत्कृतं सूत्करणं च श्वसितापरनाम, कूजितदूत्कृतफूत्कृतानां लक्षणं वक्ष्यति, सप्तैतान्यव्यक्ताक्षराणि, अम्बाऽर्थादयो गण एकोऽव्यक्ताक्षरः ॥ ६ ॥

अम्बाऽर्थाः शब्दाः, वारणार्था मोक्षणार्थाश्चालमर्थास्ते ते चार्थयोगात् ॥ ७ ॥

अम्बाऽर्था इति । अम्ब मातरित्यादयः, वारणार्था मा तिष्ठेत्यादयः, अलमर्था भवतु पर्याप्तमित्येवमादयः, मोक्षणार्थास्त्यज मुञ्चेत्यादयः, ते ते चार्थयोगादिति । अन्येऽपि पीडार्थयुक्ता मृताऽस्मि परित्रायस्वेत्येवमादयः ॥ ७ ॥

पारावतपरभृतहारीतशुकमधुकरदात्यूहहंसकारण्डवलावकविरुतानि सीत्कृतभूयिष्ठानि विकल्पशः प्रयुञ्जीत ॥ ८ ॥

पारावतादीनामिव विरुतानि पारावतविरुतान्यष्टौ, दात्यूहो यस्य 'डाउक' इति प्रसिद्धिः, सीत्कृतभूयिष्ठानीति । सीत्कृतबहुलानि, प्रहणनकालेऽपि सीत्कृतस्य प्राधान्यादन्तरा प्रयुञ्जीतेत्यर्थः, सीत्कृते हि स्वरान्तरसंश्लिष्टं मनोहारि स्याद्, विभाषाश्लिष्टगीतवत्, तत्रापि विकल्पशो विकल्पं विकल्पमेकैकमित्यर्थः ॥ ८ ॥

प्रहणनसीत्कृतयोर्यत्र देशेऽवस्थायां च प्रयोगस्तदुभयमाह—

उत्सङ्गोपविष्टायाः पृष्ठे मुष्टिना प्रहारः ॥ ९ ॥

उत्सङ्गोपविष्टाया इति । नायकस्योत्सङ्गे, पृष्ठे मुष्टिना प्रहारः, नान्यैरनुरूपत्वात् ॥ ९ ॥

तत्र सासूयाया इव स्तनितरुदितकूजितानि प्रतीघातश्च स्यात् ॥ १० ॥

तत्रेति । मुष्टिना प्रहारे, सासूयाया इव प्रहारमक्षममाणाया इव प्रयोक्त्र्यास्तदर्तिद्योतकानि स्तनितकूजितरुदितानि स्युस्तत्प्रहारानुरूपत्वात्, प्रतीघातश्चेति । मुष्टिनैव तत्पृष्ठे प्रतीघातः स्यात् ॥ १० ॥

युक्तयन्त्रायाः स्तनान्तरेऽपहस्तकेन प्रहरेत् ॥ ११ ॥

युक्तयन्त्रायाः=उत्तानायाः, स्तनान्तरे=स्तनयोर्मध्ये, अपहस्तकेन प्रहरेद् नान्यैरननुरूपत्वात् ॥ ११ ॥

मन्दोपक्रमं वर्धमानरागमापरिसमाप्तेः ॥ १२ ॥

मन्दोपक्रमं वर्धमानरागमिति क्रियाविशेषणम्, आरम्भे मन्दया वृत्त्या प्रहारः, ततो यथा रागो वर्धते तथाऽधिक एवेत्यर्थः, आपरिसमाप्तेस्तृप्तिं यावत्, स्तनान्तरे हि रागास्पदस्य हृदयस्यावस्थानाद्, योषितो हि त्रीणि रागस्थानानि-शिरो जघनं हृदयं चेति, तेषु दृश्यमानेषु चिरचण्डवेगाऽपि रागं मुञ्चति ॥ १२ ॥

तत्र हिंकारादीनामनियमेनाभ्यासेन विकल्पेन च तत्कालमेव प्रयोगः ॥ १३ ॥

तत्रेति । अपहस्तप्रहणने, हिंकारादीनां सप्तानाम्, अनियमेनेति । मृदुना हृदयस्य हन्यमानत्वात्सर्वेषामेवार्तिसूचकानां संभवः, विकल्पेन मृदुमध्यातिमात्रभेदेनाभ्यासेन च पौनःपुन्येन, तत्कालमेवेति । युगपदपहस्तप्रहणनकालमेव तस्य समाप्त्यवधिकः कालः ॥ १३ ॥

शिरसि किंचिदाकुञ्चिताङ्गुलिना करेण विवदन्त्याः फूत्कृत्य प्रहणनं तत्प्रसृतकम् ॥ १४ ॥

किंचिदाकुञ्चिताङ्गुलिना करेण फणाकारेणेत्यर्थः, विवदन्त्या इति । अपहस्तेनासुखायमाना यदि प्रहारान्तराकाङ्क्षया प्रत्यवतिष्ठेत, तदाऽस्याः प्रथमे रागास्पदे शिरसि तदनुरूपेण प्रसृतकेन प्रहणनमपरं मन्दोपक्रमं वर्धमानरागमापरिसमाप्तेर्विधेयम्, फूत्कृत्येति । रागदीपनार्थम् ॥ १४ ॥

तत्रान्तर्मुखेण कूजितं फूत्कृतम् ॥ १५ ॥

तत्रेति । प्रसृतकाघाते, कूजितं फूत्कृतं च नायिकायाः स्यात्, कथमित्याह—अन्तर्मुखेणेति । मुखस्यान्तः स्थानमन्तर्मुखं, तत्र कूजितं, तत्संवृतेन कूजितमित्यनेनाव्यक्तं शब्दितं, यदा विवृतेन जिह्वामूलेन च तत्फूत्कृतं, तस्यानुकार्यं वक्ष्यति-बदरस्येवेति ॥ १५ ॥

रतान्ते च श्वसितरुदिते वेणोरिव स्फुटतः शब्दानुकरणं दूत्कृतम् ॥ १६ ॥

रतान्ते च श्वसितरुदिते, तदानीं धातुक्षयाच्छ्रमोत्पत्तेः, श्वसितं रुदितं च मधुरं काङ्क्षया प्रयोक्तव्यं, वेणोरिव पुरुषव्यापारेण ग्रन्थिस्थाने स्फुटतस्तच्च दूत्कृतम् ॥ १६ ॥

अप्सु बदरस्येव निपततः फूत्कृतम् ॥ १७ ॥

तालव्यग्रादुपरिभागस्य जिह्वाऽग्रे संश्लेषादुत्पद्यते, बदरस्येवेति वृत्तगुटिकोपलक्षणार्थं, निपततः, शब्दानुकरणमिति वर्तते, यस्येदं लक्षणं—

'सलिले शर्करापातकाले निःस्तिमितध्वनिः' इति ॥ १७ ॥

सर्वत्र चुम्बनादिषूपक्रान्तायाः ससीत्कृतं तेनैव प्रत्युत्तरम् ॥ १८ ॥

चुम्बनादिषूपक्रान्ताया इति । चुम्बननखदशनच्छेद्येषु पुरुषेणाभियुक्तायाः, ससीत्कृतं तेनैव प्रत्युत्तरं येनैव चुम्बनादीनामन्यतमेनोपक्रान्ता, तेनैव हिंकारादिसहायेन प्रत्युत्तरयेदित्यर्थः, अनेन 'कृते प्रतिकृतं कुर्याद्' इति स्मरयति ॥ १८ ॥

रागवशात्प्रहणनाभ्यासे वारणमोक्षणालमर्थानां शब्दानामम्बाऽर्थानां च सतान्तश्वसितरुदितस्तनितमिश्रीकृतः प्रयोगो विरुतानां च रागावसानकाले जघनपार्श्वयोस्ताडनमित्यतित्वरया चापरिसमाप्तेः ॥ १९ ॥

रागवशात्प्रहणनाभ्यास इति । यदा रागस्योद्रेकान्नायकः पौनःपुन्येन प्रहरेत्तदा वारणार्थानां प्रयोगो युक्तः, किंरूप इत्याह—सतान्तेति । सह खिन्नाभ्यां श्वसितरुदिताभ्यां वर्तते यत्र स्तनितं तेन योजित इत्यर्थः, पारावतादिविरुतानां च प्रयोग एवंविध एव, रागावसानकाल इति । लिङ्गादासन्नवर्तिनी रतिरिति ज्ञात्वा जघने तृतीयरागास्पदे पार्श्वयोः कक्षाधस्ताडनं समतलेनेति पारिशेष्याद्, अन्ये 'समतलकेनेति पठन्त्येव, अतित्वरयेति । विश्रब्धिकया हि ताडने मार्गासन्ना रतिर्निवर्तते ॥ १६ ॥

तत्र लावकहंसविकूजितं त्वरयैवेते स्तननप्रहणनयोगाः ॥ २० ॥

तत्रेति । समतलकरताडने लावकहंसयोरिव कूजितं शब्दितं स्याद्, मृदुमधुरत्वात्, तच्च त्वरयैव, प्रहणनस्य त्वरितत्वात्, स्तननप्रहणनयोगा इति । सीत्कृतविरुतात्मनः शब्दितस्य प्रहणनस्य च प्रयोगा उक्ताः ॥२०॥

स्त्रीपुंसयोः प्रहणनसीत्कृतेषु कस्य किं सहजं तेज इत्याह—

भवतश्चात्र श्लोकौ—

पारुष्यं रभसत्वं च पौरुषं तेज उच्यते ।
अशक्तिरार्तिर्व्यावृत्तिरबलत्वं च योषितः ॥ २१ ॥

रागात्प्रयोगसात्म्याच्च व्यत्ययोऽपि क्व चिद्भवेत् ।
न चिरं तस्य चैवान्ते प्रकृतेरेव योजनम् ॥ २२ ॥

पारुष्यमिति । चेतसः शरीरस्य च कठोरता, रभसत्वमिति । अविमृश्यकारिता धाष्टर्यं च, एतदुभयं पुरुषस्येदं तेजो धर्म इत्यर्थः, तद्योगात्पुरुषः प्रहरति, अशक्तिर्हन्तुमसामर्थ्यं, हस्तसौकुमार्यादार्तिः पीडा, छत्या व्यावृत्तिः, पुरुषेण हन्तुं नियुक्तायाः स्त्रिया अबलत्वं निष्प्राणता, स्वयमोषदाहरणाद्, एते स्त्रैणा धर्मास्तद्युक्तत्वाद् , न प्रहणनं, सीत्कृतमेव तदुद्भवम् , अतः सीत्कृतप्रहणने विषयप्रतिनियते, क्व चिदिति । न सर्वत्र रते व्यत्ययोऽपि स्यात्; कारणमाह—रागप्रयोगसात्म्यादिति । रागस्य प्रकर्षेण योगाद्देशसात्म्याच्च स्त्री स्वधर्मास्त्यक्त्वा; पौरुषं तेजो-बिभ्रती प्रहन्ति, तदा पुरुषः स्त्रीप्रोत्साहनार्थं स्वधर्मं त्यक्त्वा; तद्धर्मानालम्ब्य; सीत्कृतविरुतानि कुर्यात् , तत्रापि न चिरं कियतीमपि कालकलां व्यत्ययः स्यात् , ततः किं स्यादित्याह—तस्य चैवेति । तस्यैव व्यत्ययस्यान्ते प्रकृतेरेव योजनं स्याद् , यथा स्वतेजसा स्त्रीपुंसयोर्वर्तनमित्यर्थः, तदिमौ व्यत्ययप्रकृतियोजनाभ्यां प्रवर्त्तेयातामासमाप्तेः, रागप्रयोगसात्म्याभावे तु प्राक्तन एव विधिः, तत्र व्यत्ययाभावात् ॥ २१ ॥२२॥

प्रहणनं चतुर्विधमुक्तं यथा तदष्टधा दर्शयन्नाह–

कीलामुरसि कर्तरीं शिरसि विद्धां कपोलयोः संदंशिकां स्तनयोः पार्श्वयोश्चेति पूर्वैः सह प्रहणनमष्टविधमिति दाक्षिणात्यानां, तद्युवतीनामुरसि कीलानि च तत्कृतानि दृश्यन्ते, देशसात्म्यमेतत् ॥ २३ ॥

कीलामुरसीति । तत्र मुष्टिरेव तर्जनीमध्यमयोर्बहिःपृष्ठभागेन निष्क्रान्तयोरुपर्यङ्गुष्ठयोजनात्कीला; तयाऽधोमुख्या ताडनं, कर्तरी द्विविधा —प्रसृतकुञ्चिताङ्गुलिभेदात् , तत्र प्रसृताङ्गुलिर्द्विविधा, हस्तेनैकेन भद्रकर्तरी, द्वाभ्यां संश्लिष्टाभ्यां यमलकर्तरी, या कुञ्चिताङ्गुल्यङ्गुष्ठाग्रोपरि न्यस्तकुञ्चिततर्जनीका सा शब्दकर्तरी प्रयुज्यमाना श्लथाङ्गुलित्वादमितशब्दवती भवति, कैश्चिदुत्पलपत्रिकेत्युच्यते, उभाभ्यामपि कनिष्ठिकाऽग्रभागेण शिरसि ताडनं, तर्जनीमध्यमयोर्मध्यमानामिकयोर्वा मध्येनाङ्गुष्ठं निष्कास्य बद्धा मुष्टिर्विद्धा तयाऽङ्गुष्ठकवदनया कपोलयोर्व्यधनमेव ताडनम् , मुष्टिरेव तर्जन्यङ्गुष्ठकाभ्यां तर्जनीमध्यमाभ्यां वा संदंशनात्संदंशिका, तया स्तनयोः पार्श्वयोश्च मलनपूर्वकं मांसस्याकर्षणमेव ताडनं, पूर्वैरित्यपहस्तादिभिः, अष्ट-

विधमिति दाक्षिणात्यानाम्, आचार्याणां तु चतुर्विधमस्ति, एतत्प्रत्यक्षेण दर्शयन्नाह—कीलानि चेति । तद्युवतीनां दाक्षिणात्यतरुणीनाम्, उरसीत्युपलक्षणम्, उरसि कीलाकृतं शिरसि सीमन्तमुखे कर्तरीकृतं, कपोलयोर्विद्धाकृतं, देशसात्म्यमेतद्, यद्रागवशात्तत्कृतंचिह्नं वैरूप्यकारणमपि श्लाघ्यते ॥ २३ ॥

तन्नान्यत्र प्रयोक्तव्यमित्याह—

कष्टमनार्यवृत्तमनादृत्यमिति वात्स्यायनः ॥ २४ ॥

कष्टमिति । दुःखावहं निर्दयकर्मत्वाद्, अनार्यवृत्तमसाधुचरितम्, अनादृत्यमित्यनादरणीयं, दोषावहत्वात् ॥ २४ ॥

तथाऽन्यदपि देशसात्म्यात्प्रयुक्तमत्र न प्रयुञ्जीत ॥ २५ ॥

तथाऽन्यदपि, प्रस्तराद्याहननं, देशसात्म्यात्प्रयुक्तं दाक्षिणात्यैः, अत्र नेति ॥ २५ ॥

आत्ययिकं तु तत्रापि परिहरेत् ॥ २६ ॥

आत्ययिकं विनाशाङ्गवैकल्यकरणं, तत्रापि परिहरेद् यत्रापि प्रयुक्तम् २६

तमेवात्ययं दर्शयन्नाह—

रतियोगे हि कीलया गणिकां चित्रसेनां चोलराजो जघान ॥ २७ ॥

रतियोग इति । रत्यर्थे योगे यन्त्रसंप्रयोगे, चोलराजश्चोलविषये राजा, तेन हि चित्रसेना गणिका रतारम्भे दृढमालिङ्गिता सौकुमार्याच्छरीरपीडामभजत्, तथा प्रदर्शितावस्थामपि तां सुकुमारोपक्रमां रागान्ध्यादगणिततद्बलः कीलयोरसि प्रयुक्तया व्यापादितवान् ॥ २७ ॥

कर्तर्या कुन्तलः शातकर्णिः शातवाहनो महादेवीं मलयवतीम् ॥ २८ ॥

कुन्तल इति । कुन्तलविषये जातत्वात्तत्समाख्यः, शातकर्णिः=शातकर्णस्यापत्यं, शातवाहन इति यस्य संज्ञा, स हि महादेवीं मलयवतीमचिरप्रतिविहितमान्द्यामजातबलामपि मदनोत्सवे गृहीतवेषां दृष्ट्वा; जातरागस्तामभिगच्छन्रागाक्षिप्तचेताः शिरसि कर्तर्याऽतिबलप्रयुक्तया जघान ॥ २८ ॥

नरदेवः कुपाणिर्विद्धया दुष्प्रयुक्तया नटीं काणां चकार ॥ २९ ॥

नरदेवः=पाण्ड्यराजस्य सेनापतिः, कुपाणिः शस्त्रप्रहारात्किणहस्तः, स हि राजकुले नटीं चित्रलेखां नृत्यन्तीं दृष्ट्वा जातरागः सन् प्रयोगे रागान्धो विद्धया कुपाणित्वाद्, दुष्प्रयुक्तया कपोलतलमप्राप्याक्षिप्राप्तया काणां चकार, संदंशिका नोदाहृता, स्वभावतोऽनात्ययिकत्वात् ॥ २९ ॥

यद्वशादयुक्तं न परिहरन्ति तद् दर्शयन्नाह—

भवन्ति चात्र श्लोकाः—

नास्त्यत्र गणना का चिन्न च शास्त्रपरिग्रहः ।
प्रवृत्ते रतिसंयोगे राग एवात्र कारणम् ॥ ३० ॥

नास्तीति । द्विविधो हि कामी शास्त्रतत्त्वज्ञस्तद्विपरीतश्च, तत्राशास्त्रतत्त्वज्ञस्यात्रास्मिन् प्रहणनविधौ न स्वभावतो गणनाऽहित का चिद् आत्ययिकमिदमपेक्षयेत्यर्थः, न च शास्त्रपरिग्रहः शास्त्रविहितानुष्ठानात्, तस्मादस्य प्रवृत्ते रतिसंयोगे राग एवात्र प्रहणनविधौ प्रयोक्तव्ये कारणं, नापरज्ञानं, शास्त्रतत्त्वज्ञस्य तु सत्यपि रागे प्रवृत्तिकारणे ज्ञानमपरं कारणं, ततश्च विमृश्यकारिणो गणना शास्त्रपरिग्रहश्चोभयमेव भवति, तस्मादुभयोरपि प्रवृत्तौ रागः कारणं, तत्रैकस्य ज्ञानपरिष्कृतोऽन्यस्य तद्विकल इति विशेषः ॥ ३० ॥

यदा चानयोरतिप्रवृद्धो रागस्तदा तद्वशादद्दृष्टश्रुता अपि प्रयागा भवन्तीति दर्शयन्नाह—

स्वप्नेष्वपि न दृश्यन्ते ते भावास्ते च विभ्रमाः ।
सुरतव्यवहारेषु ये स्युस्तत्क्षणकल्पिताः ॥ ३१ ॥

स्वप्नेष्वपीति । असंभाव्यवस्तुप्रकाशनयोग्येष्वपि, भावाः=अभिप्रायाः, विभ्रमाः=चेष्टितानि, सुरतव्यवहारेषु=परस्परचुम्बनाभिगमनादिव्यापारेषु, तत्क्षणकल्पिताः=तत्कालनिर्मिताः, न शास्त्रत इत्यर्थः ॥३१॥

तत्रैकस्य ज्ञानपरिष्कृतत्वाद्रतिजनन एवोत्पद्यन्ते, अन्यस्य ज्ञानवैकल्यादत्ययावहा अपीति, तस्मादयं ज्ञानविकलोऽतिप्रवृद्धाद्रागात्प्रवर्तमानोऽत्ययं न पश्यतीति दृष्टान्तेन दर्शयन्नाह—

यथा हि पञ्चमीं धारामास्थाय तुरगः पथि ।
स्थाणुं श्वभ्रं दरीं वाऽपि वेगान्धो न समीक्षते ॥ ३२ ॥
एवं सुरतसंमर्दे रागान्धौ कामिनावपि ।
चण्डवेगौ प्रवर्तेते समीक्षेते न चात्ययम् ॥ ३३ ॥

यथा हीति । यथाऽश्वस्य विक्रमो वल्गितमुपकण्ठमुपजवो जवश्चेति, पञ्चधारागतयस्तुरगशिक्षायामुक्ताः, तत्र पञ्चमीं जवाख्यां प्रकृष्टामास्थाय स्थित्वेत्यर्थः, तत्रस्थो हि वायुगतिर्भवत्यश्वः, श्वभ्रं=पौरुषं गर्तं, दरीं=दैवनिर्मिताम्, एवमिति । दार्ष्टान्तिकयोजनं, सुरतसङ्कुले, कामिनौ स्त्रीपुंसौ, 'पुमान्स्त्रिया' इत्येकशेषः ॥ ३२ ॥ ३३ ॥

यस्माज्ज्ञानवैकल्यादयुक्तं दृश्यते, तस्माज्ज्ञानप्रधानेन भवितव्यमिति दर्शयन्नाह—

तस्मान्मृदुत्वं चण्डत्वं युवत्या बलमेव च ।
आत्मनश्च बलं ज्ञात्वा तथा युञ्जीत शास्त्रवित् ॥ ३४ ॥

तस्मादिति । मृदुत्वं चण्डत्वमिति । मन्दवेगतां चण्डवेगतां चेत्यर्थः, बलं=प्राणः. आत्मनश्च मृदुत्वचण्डत्वे इति योज्यं, तथेति । मृद्वादिप्रकारेण, प्रयुञ्जीत प्रयोगान् शास्त्रविद्, अन्यथा शास्त्रज्ञेतरयोः को भेदः स्याद्, वक्ष्यति च—

'अस्य शास्त्रस्य तत्त्वज्ञो न स रागात्प्रवर्तते' इति ॥ ३४ ॥

मृद्वादिभेदेन प्रयोगयोजने सर्वे सर्वदा सर्वासु स्त्रीषु स्युरिति चेदाह—

न सर्वदा न सर्वासु प्रयोगाः सांप्रयोगिकाः ।
स्थाने देशे च काले च योग एषां विधीयते ॥ ३५ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे
प्रहणनप्रयोगास्तद्युक्ताश्च सीत्कृतक्रमाः सप्तमोऽध्यायः ।
आदितो द्वादशः ।

न सर्वदेति । तत्र स्थाने प्रयोगो यथा—अपहस्तस्य स्तनान्तरे, प्रसृतस्य शिरसीत्यादि, देश इति । प्रयोगविषय इत्यर्थः, यथा—मालव्यां प्रहणनस्याभीर्यामौपरिष्टकस्येत्यादि, युक्तयन्त्रायामपहस्तस्योत्सङ्गोपविष्टायां मुष्टिरित्यादि कालप्रयोग इति ॥ ३५ ॥

प्रहणनप्रयोगाः पञ्चदशं प्रकरणम् ।
तद्युक्ताश्च तदन्तर्गताः सीत्कृतक्रमाः षोडशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे प्रहणनयोगाः सीत्कृतक्रमाश्च सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

एवं प्रहणनादिव्यापारेण परिश्रान्ते नायके नायिका पुरुषवदाचरेदिति पुरुषायितं, तदुपयोगित्वाच्च तदन्तर्गतानि पुरुषोपसृप्तानीति प्रकरणद्वयमत्राध्याये ।

तत्र कारणान्याह—

नायकस्य संतताभ्यासात्परिश्रममुपलभ्य रागस्य चानुपशमम्, अनुमता तेन तमधोऽवपात्य पुरुषायितेन साहाय्यं दद्यात्

स्वाभिप्रायाद्वा विकल्पयोजनार्थिनी नायककुतूहलाद्वा ॥ १ ॥

नायकस्येति। संतताभ्यासादिति । रतस्य पौनःपुन्येनानुष्ठानात्, परिश्रमं सार्वाङ्गिकं समं, रागस्य चानुपशममशान्तिमुपलभ्य; तत्राप्यनुमता, तेनेति । नायकेन, अननुज्ञाता हि योषिद्भिसदृशमाचरन्ती निस्त्रपैव स्यात्, तमधोऽवपात्य=नायकमधस्तात्कृत्वा, एवं हि पुरुषवदाचरितं, तेन साहाय्यं सहायकर्म प्रतिपद्येत कार्यस्यानिष्पन्नत्वात्, स्वाभिप्रायाद्वेति। अननुमताऽपि तेन जातविस्रम्भा विकल्पं पुरुषायितभेदं योजयितुमर्थिनी तच्छीलत्वाद्, नायककुतूहलाद्वेति । नायकस्यात्र कौतुकमस्तीति ज्ञात्वा वा तेनाननुमताऽपरिश्रान्तस्यापि दद्यादित्येव ॥१॥

तत्र युक्तयन्त्रेणैवेतरेणोत्थाप्यमाना तमवपातयेदेवं च रतमविच्छिन्नरसं तथा प्रवृत्तमेव स्यादित्येकोऽयं मार्गः, पुनरारम्भेणादित एवोपक्रमेदिति द्वितीयः ॥ २ ॥

तत्रेति। पुरुषायिते द्विविधः क्रमः, तत्रायं प्रथमो यद् युक्तयन्त्रेणैवापरित्यक्तशल्यसंयोगेनैवेतरेण नायकेन व्यस्तस्थितेनासीनेन चोत्थाप्यमाना बाहुपाशसंदानिता सत्युपरि क्रियमाणा, तं नायकमवपातयेदिति। एवं सति रतमविच्छिन्नरसं तथा प्रवृत्तमेव स्याद्, यन्त्रं हि विश्लेष्य पुनः संधाने रतमपूर्वमेव स्याद्, न पूर्वप्रकारप्रवृत्तं यथा प्रवृत्तश्चात्र रागो विच्छिद्येत, तस्य चाकस्माद्विच्छेदे न सौमनस्यमित्यत्र कामिनः प्रमाणम्, अयं मार्गः श्रमवृद्धौ रागस्यानुपशमे द्रष्टव्यः, स्वाभिप्रायादिषु, पुनरारम्भेणेति। यदा रतस्य पुनरारम्भस्तदा तेनारम्भेण पुरुषवदादावेवोपक्रमेत प्रवर्त्तेत द्वितीयो मार्गः, नापरस्तृतीयो यदन्तरा यन्त्रं विश्लेष्य प्रयोक्तव्यम् ॥ २ ॥

पुरुषायितं द्विविधम्, बाह्यमाभ्यन्तरं च, तत्र प्रथममधिकृत्याह—

सा प्रकीर्यमाणकेशकुसुमा श्वासविच्छिन्नहासिनी वक्त्रसंसर्गार्थं स्तनाभ्यामुरः पीडयन्ती पुनः पुनः शिरो नमयन्ती याश्चेष्टाः पूर्वमसौ दर्शितवांस्ता एव प्रतिकुर्वीत पातिता प्रतिपातयामीति हसन्ती तर्जयन्ती प्रतिघ्नती च ब्रूयात् पुनश्च व्रीडां दर्शयेच्छ्रमं विरामाभीप्सां च, पुरुषोपसृप्तैरेवोपसर्पेत् ॥ ३ ॥

सेति। स्वशिरसः प्रकीर्यमाणानि केशकुसुमानि चेष्टमानया ययेति विग्रहः, श्वासेन विच्छिन्नो यो हासः सोऽस्ति यस्याः, असदृशव्यापारेण जातश्रमत्वाद्, वक्त्रसंसर्गार्थं लज्जया न तु चुम्बनदशनच्छेद्या-

र्थं, स्तनाभ्यामुरो नायकस्य, पीडयन्तीति । स्तनोपगूहनमेतत्, पुनः-पुनः शिरो नमयन्ती लज्जया, सर्वमेतत्स्त्रैणेन तेजसा चेष्टितमुक्तम्, पौंस्नेनाह-या इति । चेष्टायाश्चुम्बनादिव्यापारात् पूर्वमसौ दर्शितवान् पारुष्यरभसत्वाभ्यां ता एव प्रतीपं कुर्वीत, तदेव स्फुटयन्नाह—पातिते-ति । यथाऽहं त्वया निर्दयरतेन क्लेशिता तथाऽहं त्वामपि प्रतीपं पातयामीति ब्रूयादिति सबन्धः, तत्रापि परिहारेऽन्यत्रापि प्रयुक्तं हसन्ती, राभसिकतया तर्जयन्ती तर्जन्या, प्रतिघ्नती चात्यर्थमपहस्तादिना, तदुभयं पारुष्यं दर्शयति, ततश्चासौ स्त्रैणतेजः प्रख्यापनार्थमव्रीडिता-ऽपि व्रीडाम्, अश्रान्ताऽपि श्रमं, रन्तुमिच्छन्त्यपि विरामाभीप्सामुपेत्य दर्शयेत्, पुरुषवदाचरितं हि योषितः पुरुषायितं, ततश्च पुरुषस्य योषिति यदुपसर्पणमुपसृप्तं तदभ्याचरन्त्या पुरुषायितं, प्रायशश्च पुरुषोपसृप्तान्नान्यत्पुरुषायितमिति नियमयन्नाह—पुरुषोपसृप्तैरेवोपसर्पेदिति ॥ ३ ॥

इतः प्रभृति पुरुषोपसृप्ताख्यं प्रकरणमिति दर्शयति –

तानि च वक्ष्यामः ॥ ४ ॥

तानि द्विविधानि, बाह्यान्याभ्यन्तराणि च ॥ ४ ॥

तत्र बाह्यान्याह–

पुरुषः शयनस्थाया योषितस्तद्वचनव्याक्षिप्तचित्ताया इव नीवीं विश्लेषयेत्, तत्र विवदमानां कपोलचुम्बनेन पर्याकुलयेत्, स्थिरलिङ्गश्च तत्र तत्रैनां परिस्पृशेत्, प्रथमसंगता चेत्संहतोर्वोरन्तरे घट्टनं, कन्यायाश्च तथा स्तनयोः संहतयोर्हस्तयोः-कक्षयोरंसयोर्ग्रीवायामिति च, स्वैरिण्यां यथासात्म्यं यथायोगं च, अलके चुम्बनार्थमेनां निर्दयमवलम्बेत हनुदेशे चाङ्गुलिसंपुटेन, तत्रेतरस्या व्रीडा निमीलनं च प्रथमसमागमे कन्यायाश्च ॥ ५ ॥

यदा पुरुषः प्रयोक्ता तदा पुरुषोपसृप्तकं, स्त्री चेत्पुरुषायितमिति दर्शनार्थं पुरुषग्रहणम्, एवं च पुरुषायितेन सहास्य वचनं, शयनस्थाया इति । शयनात्प्राग्रतारम्भं प्रकरणं वक्ष्यति, तद्वचनव्याक्षिप्तचित्ताया इवेति । नायकोक्तिभिरन्यचित्ताया नायिकायाः, लज्जाख्यापनार्थं दर्शनीयेति वाऽर्थः, नीवी=निवसनबन्धनं, तत्रेति । विश्लेषणे विवदमानां कर्तुमददतीं कपोलचुम्बनेन समन्तादाकुलं यद् यथा नीवी सुखेन

स्रंसते, स्थिरलिङ्गश्चेति । जातरागत्वात्स्तब्धलिङ्गः, तस्यां च जातरागायां सिद्धं कार्यं, न चेदत्राह—तत्र तत्रेति । कक्षोरुस्तनादिष्वेनां नायिकां रागजननार्थं हस्तेन, परिस्पृशेदिति । एतदसकृन्नायकेन संगतायामतिविस्रब्धायामुक्तं, यदि प्रथमसंगता तदाऽस्या नीवीस्रंसनस्पर्शनं नास्त्येव, लज्जया संहतयोश्चोर्वोरन्तरे च संधौ हस्तेन घट्टनं चलनं, यथा विवृतौ स्यातां, कन्यायाश्चेति । कन्याविस्रम्भणेन विस्रब्धाया अप्यस्या लज्जया संहतयोरन्तरे घट्टनं नीवीस्रंसनं स्पर्शनं च, अस्या अधिकमाह—स्तनयोः संहतयोर्भुजमध्या सूच्या हस्तयोः परस्पराश्लिष्टयोः प्रत्येकं वा बद्धमुष्ट्याः, कक्षयोः प्रत्येकं कृतसंकोचयोः, अंसयोर्हस्तयोजनाद् ग्रीवाबाहुशिखरयोजनाद्वा संहतयोः, ग्रीवायां हस्तपाशसंश्लेषात्संहतायां, घट्टनमित्येव, स्वैरिण्यामिति । या नायिका रूढविस्रम्भत्वात्सुरते निस्त्रपं यथेष्टचारिणी सा स्वैरिणी=अभियोक्त्रीत्यर्थः, तस्याः, यथासात्म्यं यथायोगं चेति । यद्येन सात्म्यं यच्च यत्र युज्यते तत्तस्य स्पर्शनमित्यर्थः, चुम्बनार्थमेनामिति । कृतक्षान्ति पूर्वोक्तां स्वैरिणीं चाङ्के निर्दयमवलम्बेत, हस्तेन दृढं गृह्णीयाद्, यथा तद्वदनमाकृष्य चुम्बेत, हनुदेशे वाऽङ्गुलिसम्पुटेन तर्जन्यङ्गुष्ठकलितेन चुम्बनार्थन्निर्दयमवलम्बेतेत्येव, तत्रेत्यवलम्बने, इतरस्या इति । नायिकायाः, विधिमाह—या प्रथमसंगता कन्या च तस्या व्रीडा लज्जा निमीलनं चाक्ष्णोः स्याद्, न तदतिविस्रब्धायाः स्वैरिण्याश्चेत्येवं नीवीविस्रंसनस्पर्शनघट्टनावलम्बनैश्चतुर्भिर्बाह्यैरुपसृप्तः शयनस्थां विश्वास्य सांप्रयोगिकांश्चुम्बनादीन्प्रयुञ्जीत ॥ ५ ॥

आभ्यन्तराण्यभिधातुमाह—

रतिसंयोगे चैषा कथमनुरज्यत इति प्रवृत्त्या परीक्षेत ॥ ६ ॥

रतिसंयोगे चेति । रत्यर्थे यन्त्रसंयोगे सत्येनामिति, बाह्यैरुपसृप्तां प्रवृत्त्या चेष्टया परीक्ष्य यथा कथं चिदाभ्यन्तरैरुपसर्पेदित्यर्थः ॥ ६ ॥

तत्र प्रवृत्तिमाह—

युक्तयन्त्रेणोपसृप्यमाणा यतो दृष्टिमावर्तयेत्तत एवैनां पीडयेदेतद्रहस्यं युवतीनामिति सुवर्णनाभः ॥ ७ ॥

युक्तयन्त्रेणेति । यत इति । यत्र संबाधस्यान्तरं भागं लक्षीकृत्य साधनेनोपसृप्यमाणा तत्स्पर्शसुखाद्, दृष्टिमावर्तयेद्=दृष्टिमण्डलं भ्रमयेत, तत एवेति । तामाश्रित्य पीडयेत्, तस्मिन्नेव साधनेनात्यर्थमुपसर्पेत्,

तत्र हि पीडनाद् द्रुतं रतिमधिगच्छति, एतद्रहस्यं स्त्रीभिरप्रकाश्यत्वात्, तथा हि रतिप्राप्त्यर्थमन्यैः प्रकारान्तरमुक्तं शास्त्रकृतः सुवर्णनाभमतमभिमतमप्रतिषिद्धत्वाद्, अत्र च रतिवर्धनमेको बहव इति केषांचित्प्रदेशविवादः, तत्रोपसृप्यमाणा यस्मिन्नेकस्मिन्नियते वा देशे स्पृष्टा दृष्टिमावर्तयेत्तस्मिन्नेव पीडयेदित्येकः प्रकारः, बहुषु वा यस्मिन् यस्मिन्नुपसृप्यमाणा दृष्टिमावर्तयेत्तस्मिंस्तस्मिन्नेव पीडयेदिति द्वितीयः, तत्रापि यस्मिन्नत्यर्थं दृष्टिमावर्तयेत्तस्मिन्नत्यर्थमेव पीडयेदिति बोद्धव्यम्, एतेन नाडीप्रदेशा अप्यन्यतन्त्रोक्ता व्याख्याताः, तेषामनेनैव प्रकारेण ज्ञायमानत्वात् ॥ ७ ॥

उपसृप्यमाणाया भावस्य तिस्रोऽवस्थाः—प्राप्तः, प्रत्यासन्नः, संधुक्ष्यमाणश्चेति त्रयाणां लक्षणमाह—

**गात्राणां स्रंसनं नेत्रनिमीलनं व्रीडानाशः समधिका च रतियोजनेति स्त्रीणां भावलक्षणम् ॥ ८ ॥**

तत्र गात्रावसादो नेत्रनिमीलनं च प्राप्तस्य लिङ्गं, व्रीडानाशो लज्जानिवृत्तिः, रतियोजनेति। रत्यर्थं योजना यन्त्रयोजनेत्यर्थः, सा स्वजघनस्य नायकजघनेनात्यन्तलगनात्, समधिकेति, प्रत्यासन्नभावलक्षणमिति, प्राप्तप्रत्यासन्नस्येत्यर्थः ॥ ८ ॥

सन्धुक्ष्यमाणस्याह—

**हस्तौ विधुनोति स्विद्यति दशत्युत्थातुं न ददाति पादेनाहन्ति रतावसाने च पुरुषातिवर्तिनी ॥ ९ ॥**

हस्ताविति। विधुनोति कम्पयति, उत्थातुं न ददाति यन्त्रयोगात्, पुरुषातिवर्तिनीति। पुरुषस्य रतिप्राप्तौ तमतिक्रम्य; स्वजघनव्यापारेण वर्तत इत्यर्थः ॥ ९ ॥

**तस्याः प्राग्यन्त्रयोगात्करेण संबाधं गज इव क्षोभयेदामृदुभावात् ततो यन्त्रयोजनम् ॥ १० ॥**

तस्याश्चेष्टितमीदृशं बुद्ध्वा यन्त्रयोगात्प्राग् न तु स्वयं रतमधिगम्य; पश्चात्तदानीमस्या रतं विच्छिन्नरसं स्यात्, सम्बाधो भागतश्चतुर्विधः, यथोक्तम्—

'अन्तः पद्मदलस्पर्शं गुटिकावच्च योषितः ।
वलिभं च वराङ्गं स्याद्गोजिह्वाकर्कशं तथा' इति ॥

तत्राद्यं त्यक्त्वा शेषं कण्डूतिबहलत्वात्करेण क्षोभयेद्, आमृदुभावादिति। यावन्मृदुतां गतं, ततो यन्त्रयोजनम्, मृदुभूते हि तस्मि-

न्नुपसृप्यमाणा द्रुतं रतिमधिगच्छति, गज इवेति। करौपम्यार्थं, गजाकारेणेत्यर्थः, तथा चोक्तम्—

'अनामिकाप्रदेशिन्यौ श्लिष्टाग्रे ज्येष्ठया सह।
गजहस्ताग्रसादृश्यात्तत्संज्ञं कृत्रिमं स्मृतम्' इति॥

एवं च करग्रहणं कृत्रिमसाधनोपलक्षणार्थं, तेन कृत्रिमेणाभ्यन्तराण्युपसृप्तानि द्रष्टव्यानि॥ १०॥

तान्याह—

उपसृप्तकं मन्थनं हुलोऽवमर्दनं पीडितकं निर्घातो वराहघातो-वृषाघातश्चटकविलसितं संपुट इति पुरुषोपसृप्तानि ॥ ११ ॥

लिङ्गेन सम्बाधस्य मिश्रणात्सर्वमेवोपसृप्तकम्॥ ११॥

न्याय्यमृजु संमिश्रणमुपसृप्तकम् ॥ १२ ॥

तत्र यदृजु प्रगुणं न्याय्यमागोपालाङ्गनाप्रसिद्धं मिश्रणं तद्, उपसृप्तकमिति। तत्र कन्प्रत्ययेन विशेषसंज्ञां दर्शयति॥ १२॥

हस्तेन लिङ्गं सर्वतो भ्रमयेदिति मन्थनम् ॥ १३ ॥

हस्तेन लिङ्गं गृहीत्वा सम्बाधाभ्यन्तरे सर्वतो मथनन्निव भ्रमयेत्॥ १३॥

नीचीकृत्य जघनमुपरिष्टाद्घट्टयेदिति हुलः ॥ १४ ॥

नीचीकृत्य जघनमिति। स्वकटिमधः कृत्वा, उपरिष्टादिति। अभ्यन्तरस्योर्ध्वभागे भगं बहुलेनैव लिङ्गेनावघट्टयेत्॥ १४॥

तदेव विपरीतं सरभसमवमर्दनम् ॥ १५ ॥

तदेवेति। घट्टनं, विपरीतमुच्चीकृत्य जघनमधस्तादिति, विशेषश्चापरो यः, सरभसमिति। रभसेन मृद्नीयादित्यर्थः, अधोभागस्य कण्डूतिबहुलत्वात्॥ १५॥

लिङ्गेन समाहत्य पीडयंश्चिरमवतिष्ठेतेति पीडितकम् ॥ १६ ॥

लिङ्गेनेति। वेगादामूलं प्रवेश्यमानेन समाहत्य पीडयन्भगमवतिष्ठेत, चिरमिति। यावन्तं कालं लिङ्गोन्नमनावनमनानि कर्तुं समर्थः॥ १६॥

सुदूरमुत्कृष्य वेगेन स्वजघनमवपातयेदिति निर्घातः ॥ १७ ॥

सुदूरमिति। प्रवेशितं लिङ्गमाबन्धमाकृष्य वेगेन जघन एव निर्घातवत्क्षिपेत्॥ १७॥

एकत एव भूयिष्ठमवलिखेदिति वराहघातः ॥ १८ ॥

एकत एवेति । एकस्मिन्नेव पार्श्वे भूयिष्ठं बहून्वारान् वराहवद्दंष्ट्रयाऽवलिखेत् ॥ १८ ॥

स एवोभयतः पर्यायेण वृषाघातः ॥ १९ ॥

स एवेति । वराहस्य घातः, उभयत इति । उभयपार्श्वयोः परिपाट्या वृषभवच्छृङ्गाभ्यामवलिखेत् ॥ १९ ॥

सकृन्मिश्रितमनिष्क्रमय्य द्विस्त्रिश्चतुरिति घट्टयेदिति चटकविलसितं रागावसानिकम् ॥ २० ॥

सकृन्मिश्रितमिति । एकवारं प्रवेशितं लिङ्गमनिष्क्रमय्यानिष्कास्य बहिरभ्यन्तरमेव किंचिदाकृष्याकृष्य चटकवत्तत्र लिङ्गं संघट्टयेद्, द्विस्त्रिर्वा प्रघर्षणं, चतुरिति । रागावसानिकमेतद्, विसृष्टयवस्थायामेवंस्वभावत्वात् ॥ २० ॥

व्याख्यातं करणं संपुटमिति ॥ २१ ॥

व्याख्यातमिति । करणं संपुटं, तच्च व्याख्यातम्—'ऋजुप्रसारितावुभयोश्चरणौ' इति तत्र लिङ्गमनिष्क्रमय्य जघनेन जघनमवगूह्य यत्संमिश्रणं तदपि संपुटमित्युक्तम् ॥ २१ ॥

तेषां स्त्रीसात्म्याद्विकल्पेन प्रयोगः ॥ २२ ॥

तेषामिति । उपसृप्तकादीनां, स्त्रीसात्म्यादिति । येन यस्याः सात्म्यं तेन तस्यां प्रयोगः, विकल्पेन मृदुमध्यातिमात्रभेदेन, तत्र पुरुषोपसृप्तेषु यद्बाह्यं नीवीविश्लेषणादिकं तद् द्वितीये मार्गे नायककक्षावन्धविश्लेषणादिबाह्यं पुरुषायितं, यच्चाभ्यन्तरमुपसृप्तं तन्मार्गद्वयेऽप्याभ्यन्तरं पुरुषायितं द्रष्टव्यम् ॥ २२ ॥

पुरुषोपसृप्तं प्रकरणमुक्त्वा विशेषाभिधित्सया पुनः पुरुषायितमाह—

पुरुषायिते तु संदंशो भ्रमरकः प्रेङ्खोलितमित्यधिकानि ॥२३॥

पुरुषायिते त्विति । आभ्यन्तरे पुरुषायिते प्रवर्तमानायास्त्रीण्यधिकानि ॥ २३ ॥

वाडवेन लिङ्गमवगृह्य निष्कर्षन्त्या पीडयन्त्या वा चिराय स्थानं संदंशः ॥ २४ ॥

बाडवेनेति । वराङ्गौष्ठसंदंशेन लिङ्गमवगृह्य, निष्कर्षन्त्या अन्तः समाकर्षन्त्याः स्थानमवस्थितिः ॥ २४ ॥

युक्तयन्त्रा चक्रवद् भ्रमेदिति भ्रमरक आभ्यासिकः ॥ २५ ॥

युक्तयन्त्रेति । भगप्रवेशितलिङ्गा कुलालचक्रवत्कुञ्चितचरणा नायकाङ्के हस्ताभ्यां शरीरावष्टम्भं कृत्वा भ्रमेद्, अयमभ्यासाद्भवति ॥ २५ ॥

तत्रेतरः स्वजघनमुत्क्षिपेत् ॥ २६ ॥

तत्रेति । भ्रमरके, इतरो नायको यन्त्राविश्लेषार्थं भ्रमरकसौकर्यार्थं च स्वजघनमूर्ध्वं क्षिपेत् ॥ २६ ॥

जघनमेव दोलायमानं सर्वतो भ्रमयेदिति प्रेङ्खोलितम् ॥ २७ ॥

दोलायमानमिति। पृष्ठतो नीत्वाऽग्रतो नयेद्,एकं पार्श्वं नीत्वा द्वितीयमित्येवं, तत्प्रेङ्खोलितकम्, मण्डलेन तु भ्रमितं मन्थनान्तर्भूतं, तेषां-पुरुषसात्म्याद्विकल्पेन च प्रयोग इत्यत्रापि योज्यम् ॥ २७ ॥

युक्तयन्त्रैव ललाटे ललाटं निधाय विश्राम्येत् ॥ २८ ॥

युक्तयन्त्रैव विश्राम्येद् न विश्लिष्टयन्त्रा रागस्यानुपशान्तत्वाद्, ललाटे ललाटं निधायेति । श्रमापनयनकारणम् ॥ २८ ॥

विश्रान्तायां च पुरुषस्य पुनरावर्तनमिति पुरुषायितानि ॥ २९ ॥

पुनरावर्तनं=पुनरुपरि गमनमित्यर्थः, रत्यधिगमात्तु परिश्रान्तायां-पुनरावर्तनमित्यर्थोक्तं, यथा रतपरिश्रान्तेन साहायकार्थं पुरुषायितेऽनुमन्यते, तथा तत्स्वभावप्रतिपत्त्यर्थमिति ॥ २९ ॥

तत्र नियोज्येति दर्शयन्नाह—

भवन्ति चात्र श्लोकाः—

प्रच्छादितस्वभावाऽपि गूढाकाराऽपि कामिनी ।
विवृणोत्येव भावं स्वं रागादुपरिवर्तिनी ॥ ३० ॥

प्रच्छादितस्वभावाऽपीति । लज्जया प्रच्छादितोऽभिप्रायो यया, कथमित्याह—गूढाकारेति । अभिप्रायसूचकस्याकारस्य गोपितत्वात्, साऽप्युपरिवर्तिनी कामिनी कामयमाना स्वभावमात्मीयमभिप्रायं रागात्प्रकाशयति न गूहितं शक्नोत्यतो नियोज्या ॥ ३० ॥

तदेव स्फुटयन्नाह—

यथाशीला भवेन्नारी यथा च रतिलालसा ।
तस्या एव विचेष्टाभिस्तत्सर्वमुपलक्षयेत् ॥ ३१ ॥

यथाशीलेति । यादृशः स्वभावो यस्याः, यथा च रतिलालसा, येन प्रकारेण रतौ जाततृष्णा, तस्या उपरिवर्तिन्या विचेष्टाभिस्तत्प्रकाराभिः, तत्सर्वमिति । शीलं रतिप्रकारं च सर्वमुपलक्षयेद्, येनोत्तरकाले तथैव सुरते समुपक्रमेत ॥ ३१ ॥

तत्रापवादमाह—

न त्वेवर्तौ न प्रसूतां न मृगीं न च गर्भिणीम् ।
न चातिव्यायतां नारीं योजयेत्पुरुषायिते ॥ ३२ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे
पुरुषोपसृप्तानि पुरुषायितं चाष्टमोऽध्यायः ॥
आदितस्त्रयोदशः ।

न त्वेवेति । ऋतौ न योजयेद्, गर्भाग्रहणभयात्, पुनरावर्तने च गर्भग्रहणाद्दारकदारिके व्यस्तशीले स्यातां, न प्रसूतामचिरप्रसूताम् प्रदरकटिनिर्गमभयाद्, न मृगीं वृषाश्वयोरवपाटिकाभयाद्, न गर्भिणीं गर्भस्रावभयाद्, नातिव्यायतामतिस्थूलां व्यापारयितुमशक्यत्वात् ॥ ३२ ॥

पुरुषायितं सप्तदशं प्रकरणम् ।
तदन्तर्गतानि पुरुषोपसृप्तान्यष्टादशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे पुरुषायितं पुरुषोपसृप्तानि चाष्टमोऽध्यायः ।

## नवमोऽध्यायः ॥

आलिङ्गनादिपुरुषायितान्तं चतसृषु नायिकासूक्तं, 'तृतीयाप्रकृतिः पञ्चमीत्येके' इत्युक्तं, तद्विषयमौपरिष्टकमुच्यते द्विविधेत्यादिना—

द्विविधा तृतीयाप्रकृतिः स्त्रीरूपिणी पुरुषरूपिणी च ॥ १ ॥

तृतीयाप्रकृतिः=नपुंसकं, स्त्रीरूपिणी=स्त्रीसंस्थाना स्तनादियोगात्, पुरुषसंस्थाना श्मश्रुलोमादियोगाद्, यद्वृत्तिमाश्रित्यौपरिष्टकमनयोस्तदुच्यते ॥ १ ॥

तत्र पूर्वमधिकृत्याह—

तत्र स्त्रीरूपिणी स्त्रिया वेषमालापं लीलां भावं मृदुत्वं भीरुत्वं मुग्धतामसहिष्णुतां व्रीडां चानुकुर्वीत ॥ २ ॥

तत्रेति । तयोः सम्यक्स्त्रीत्वख्यापनार्थं तावत्स्त्रीधर्मानुकरणं, तत्र वेषः केशपरिधानादिविन्यासेन, आलापं=काकल्यनुगतं, लीलां=मन्थरादिगमनम्, भावं=हासादिकम्, मृदुत्वम्=अकार्कश्यम्, भीरुत्वं=भयशीलताम्, मुग्धताम्=ऋजुताम्, असहिष्णुतां=प्रहणनवातातपाद्यक्षमताम्, व्रीडां=लज्जाम्, अनुकुर्वीत ॥ २ ॥

**तस्या वदने जघनकर्म तदौपरिष्टकमाचक्षते ॥ ३ ॥**

तस्या इति । स्त्रीधर्माननुकुर्वत्याः, वदने=मुखे, जघनकर्मेति । स्वरूपाख्यानं, भगे लिङ्गेन यत्कर्म तन्मुखे क्रियमाणमौपरिष्टकम्, आचक्षत इति । पूर्वाचार्यकृतेयं संज्ञा, उपरिष्टान्मुखे भवतीत्यण्--'अव्ययानां भमात्रे टिलोपः' पश्चात् 'संज्ञायां कन्', 'अमेहक्वतसित्रेभ्य एव' इति परिगणनात्त्यन्न भवति ॥ ३ ॥

फलमाह—

**सा ततो रतिमाभिमानिकीं वृत्तिं च लिप्सेद् वेश्यावच्चारितं प्रकाशयेदिति स्त्रीरूपिणी ॥ ४ ॥**

सा तत इति । औपरिष्टकाद्रतिं प्रीतिमाभिमानिकीं प्रागुक्तलक्षणाम्, वृत्तिं=जीविकाम् भाटीलाभाद्, चरितमिति । वेश्याया वृत्तं वैशिके वक्ष्यति, तद्वेश्येव प्रकाशयन्ती गम्यैरभिगम्यमाना रतिं वृत्तिं च प्राप्नोति ॥ ४ ॥

द्वितीयामधिकृत्याह—

**पुरुषरूपिणी तु प्रच्छन्नकामा पुरुषं लिप्समाना संवाहकभावमुपजीवेत् ॥ ५ ॥**

तुशब्दो विशेषणार्थः, रतिरौपरिष्टकं च तुल्यं; वृत्तं तु पृथगिति यदाह-प्रच्छन्नकामेति । आभिमानिकी प्रीतिः कामः, स प्रच्छन्नो यस्याः सा पुरुषरूपिणीत्वात्पुरुषेण सहसा न सम्प्रयुज्यत इति लब्धुमिच्छन्ती, संवाहकभावमुपजीवेदिति । लोकेऽङ्गमर्दनकर्मणा जीवेदित्यर्थः ॥ ५ ॥

एवमपि विश्वासाभावात्कथं रतिरिति विश्वासनार्थमाह—

**संवाहने परिष्वजमानेव गात्रैरूरू नायकस्य मृद्नीयात्, प्रसृतपरिचया चोरुमूलं सजघनमतिसंस्पृशेत् ॥ ६ ॥**

संवाहने संविष्टस्य नायकस्योरू स्वगात्रैरुपवृत्तपरिचयत्वादुपगूहमानेव मृद्नीयाद्, एवं मृद्नती प्रसृतपरिचया चेदूरुमूलमपि संस्पृशेत्, सजघनमिति । लिङ्गस्थानं त्यक्त्वा सह जघनस्य स्तोकेन भागेनोरुमूलमित्यर्थः ॥ ६ ॥

**तत्र स्थिरलिङ्गतामुपलभ्य चास्य पाणिमन्थेन परिघट्टयेत् चापलमस्य कुत्सयन्तीव हसेत् ॥ ७ ॥**

स्थिरलिङ्गतामिति । सजघनभागोरुमूलसंस्पर्शात्स्तब्धलिङ्गताम्, पाणिमन्थेनेति । आगोपालादिप्रतीतेन लिङ्गं घट्टयेद्, न यथा कथञ्चित्,

चापलं कुत्सयन्तीवेति । ईदृशस्त्वं चपलो यदूरुस्पर्शमात्रेण स्तब्धलिङ्गो ऽसीति निन्दयन्ती स्वाभिप्रायख्यापनार्थं हसेद् न तु रुष्यात् ॥ ७ ॥

कृतलक्षणेनाप्युपलब्धवैकृतेनापि न चोद्यत इति चेत्? स्वयमुपक्रमेत पुरुषेण च चोद्यमाना विवदेत कृच्छ्रेण चाभ्युपगच्छेत् ॥८॥

कृतलक्षणेनापीति । स्तब्धलिङ्गत्वं रागस्य लक्षणं तत्कृतं यस्य नायकस्य, उपलब्धवैकृतेनेति । ज्ञातमुखचापलेन यदि न चोद्यते कुरु मुखचापलमिति, तदा तस्मिन्स्वयमेव विना चोदनयोपक्रमेत, पुरुषेण तूपलब्धवैकृतेनानुपलब्धवैकृतेन वा चोद्यमाना नाहमेवंविधकर्मेति सहसाङ्गीऽकारप्रतिषेधार्थं विवदेत, तदेव स्फुटयति—कृच्छ्रेण चेति । स्त्रीरूपिणी तु प्रकटकामत्वादचोदिताऽप्यादित एवोपक्रमेत ॥ ८ ॥

तस्य क्रियाभेदाद् भेदमाह—

तत्र कर्माष्टविधं समुच्चयप्रयोज्यं निमितं पार्श्वतो दष्टं बहिःसन्दंशोऽन्तःसन्दंशश्चुम्बितकं परिमृष्टकमाम्रचूषितकं सङ्गर इति ॥९॥

तत्रेति । औपरिष्टके, समुच्चयप्रयोज्यमिति । क्रमेण सर्वं समुच्चयेन योज्यमित्यर्थः ॥ ९ ॥

तत्रापि नात्माभिप्रायेणेत्याह—

तेष्वेकैकमभ्युपगम्य विरामाभीप्सां दर्शयेत् ॥ १० ॥

तेष्विति । निमितादिषु, एकैकं प्रथमात्प्रभृत्यभ्युपगम्य कृत्वा; परित्यागेच्छां दर्शयेत्, कौतुकजननार्थमभ्यर्थनयाऽपरं प्रयोक्ष्यामीति ॥१०॥

नायकेऽस्मिन्नभ्युपगते किं प्रतिपद्यत इत्याह—

इतरश्च पूर्वस्मिन्नभ्युपगते तदुत्तरमेवापरं निर्दिशेत् तस्मिन्नपि सिद्धे तदुत्तरमिति ॥ ११ ॥

इतरश्चेति । नायकः, पूर्वस्मिन्निति । निमिते, तदुत्तरमिति । तस्मान्निमितादन्तरं पार्श्वतो दष्टं, निर्दिशेदिदं च कुर्विति, तस्मिन्नपि पार्श्वतो दष्टे क्रियया सिद्धे तदुत्तरं बहिःसन्दंशमिति, अनेन क्रमेण सर्वं समुच्चयेन निर्दिशेत्, स्वरागपरिसमाप्त्यर्थं, तस्माच्चाभिमानिकसुखजननार्थं नायिकाऽपि तथैव प्रयुञ्जीतेत्ययं चोदनायां विधिः, स्वयमुपक्रमे तु स्वाभिप्रायेणैव समुच्चयप्रयोज्यम् ॥ ११ ॥

तत्कर्म द्विविधम्—बाह्यमाभ्यन्तरं च, तत्र बाह्यमाह—

करावलम्बितमोष्ठयोरुपरि विन्यस्तमपविध्य मुखं विधुनुयात् तन्निमितम् ॥ १२ ॥

करावलम्बितमिति। अवनमनवारणार्थं करेण गृहीतम्, ओष्ठयोरुपरि विन्यस्तमग्रभागेनापविध्योष्ठेन वर्तुलीकृतेनावष्टभ्य; मुखं स्वं विधुनुयात्कम्पयेद्, ओष्ठयोरुपरि विन्यस्तत्वान्निमितम् ॥ १२ ॥

हस्तेनाग्रमवच्छाद्य पार्श्वतो निर्दशनमोष्ठाभ्यामवपीड्य भवत्वेतावदिति सान्त्वयेत् तत्पार्श्वतो दष्टम् ॥ १३ ॥

हस्तेनावच्छाद्य मुष्टिग्रहणेन, ततः पार्श्वतो लिङ्गमोष्ठाभ्यामवपीड्य, निर्दशनमिति। क्रियाविशेषं, दन्तवर्जमित्यर्थः, दन्तैस्तु ग्रहणमस्ति, यदाह—भवत्वेतावदिति। एतावदेवास्तु यद् ग्रहणं, नापरं खण्डनमिति सान्त्वयेत् ॥ १३ ॥

भूयश्चोदिता संमीलितौष्ठी तस्याग्रं निष्पीड्य कर्षयन्तीव मुञ्चेदिति बहिःसन्दंशः ॥ १४ ॥

भूयश्चोदितेति। पार्श्वतो दष्टे सञ्चोदिता पुनरन्यत्र चोदिता, स्वयमुपक्रमे त्वचोदितैव संमीलितौष्ठी लिङ्गस्याग्रमन्तः प्रवेश्य; मीलितावोष्ठौ यया सा, ताभ्यामेव निष्पीड्य कर्षयन्तीव मुञ्चेदिति। ओष्ठाभ्यामेवास्य कर्षणं कुर्वाणेव त्यजेदित्यर्थः, बहिःसन्दंशश्चर्मणो बहिःसन्दंशनात् ॥ १४ ॥

आभ्यन्तरमाह—

तस्मिन्नेवाभ्यर्थनया किञ्चिदधिकं प्रवेशयेत् साऽपि चाग्रमोष्ठाभ्यां निष्पीड्य निष्ठीवेदित्यन्तःसन्दंशः ॥ १५ ॥

तस्मिन्निति। बहिःसन्दंशे क्रियमाणे, अभ्यर्थनया याचनया, किञ्चिदधिकमिति। निष्कास्य ग्रन्थिं यावन्नायकः प्रवेशयेदित्ययं चोदनापक्षः, स्वयमुपक्रमे तु किञ्चिदधिकं प्रवेश्याग्रं मणिबन्धमोष्ठाभ्यां निष्पीड्य; निष्ठीवेद्=निरस्येद्, अन्तःसन्दंशो निष्कोशितस्य संदंशनात् ॥ १५ ॥

करालम्बितस्यौष्ठवद्ग्रहणं चुम्बितकम् ॥ १६ ॥

ओष्ठवदिति। यथाऽधरौष्ठस्यौष्ठाभ्यां ग्रहणं, तथा निष्कोशितस्येति चुम्बितकं, समग्रहणाख्यम् ॥ १६ ॥

तत्कृत्वा जिह्वाऽग्रेण सर्वतो घट्टनमग्रे च व्यधनमिति परिमृष्टकम् ॥ १७ ॥

तदिति। चुम्बितकं कृत्वा, अन्यथा ह्ययोगाद् जिह्वाऽग्रेणान्तः परिभ्रमता सर्वतो घट्टयेत्स्पृशेद्, अग्रे च व्यधनं स्रोतःस्थाने ताडनं जिह्वाऽग्रेणैव, परिमृष्टकं समन्तात् स्पर्शनात् ॥ १७ ॥

तथाभूतमेव रागवशादर्धप्रविष्टं निर्दयमवपीड्यावपीड्य मुञ्चेदित्याम्रचूषितकम् ॥ १८ ॥

तथाभूतमेवेति । निष्कोशितमेव, रागवशादिति । नायकस्य रागाधिक्यात्, तदर्धप्रविष्टं ग्रन्थिमतीत्य प्रविष्टं, निर्दयमत्यन्तम्, अवपीड्यावपीड्येति । जिह्वौष्ठपुटेन द्विस्त्रिरवपीड्यावपीड्य मुञ्चेदभ्यन्तर एव, तदाम्रस्येव चूषितकम् ॥ १८ ॥

पुरुषाभिप्रायादेव गिरेत्पीडयेच्चापरिसमाप्तेरिति संगरः ॥ १९ ॥

पुरुषाभिप्रायादेवेति । पुरुषाभिप्रायमेव बुद्ध्वा; प्रत्यासन्नाऽस्य रतिरिति, गिरेत् पीडयेच्चेति । जिह्वाव्यापारेण पीडयित्वा गिरेद्, ओष्ठव्यापारेण पीडयेद्, आसमाप्तेरिति । शुक्रविसृष्टिं यावत्, सङ्गरः-समन्ताद् गिरणात् ॥ १९ ॥

यथार्थं चात्र स्तननप्रहणनयोः प्रयोग इत्यौपरिष्टकम् ॥२०॥

यथार्थमिति । यथा रागो निमितादिषु मृदुमध्याधिमात्रादिभेदेन स्थितस्तथा स्तननप्रहणनयोः प्रयोगः, आलिङ्गनादीनामत्रासम्भवाद्, इत्यौपरिष्टकमिति । एवं विषयस्वरूपफलवृत्तिप्रकारैरौपरिष्टकमुक्तम्॥२०॥

देशसात्म्यवशादविषयेऽप्यस्य वृत्तिरिति दर्शयन्नाह—

कुलटाः स्वैरिण्यः परिचारिकाः संवाहिकाश्चाप्येतत्प्रयोजयन्ति॥२१॥

कुलटा इति । यः स्वकुलादन्यद्देशसदृशमटन्त्यो भ्रष्टशीलास्ताः-कुलटाः, याः सदृशमसदृशं वा कुलमविचार्य; स्वच्छन्दचारिण्यस्ताः-स्वैरिण्यः, या अन्यपूर्वा वा मुक्तप्रग्रहा नायकमुपचरन्ति ताः परिचारिकाः, याः संवाहनकर्मणा जीवन्ति ताः संवाहिकाः, एतत्प्रयोजयन्तीत्यौपरिष्टकं कारयन्ति, न केवलं तृतीया प्रकृतिरित्यपिशब्दार्थः ॥२१॥

तदेतत्तु न कार्यं समयविरोधादसभ्यत्वाच्च पुनरपि ह्यासां वदनसंसर्गे स्वयमेवार्तिं प्रपद्येतेत्याचार्याः ॥ २२ ॥

तदेतत्तु न कार्यमिति । प्रयोज्यमानमपि, समयविरोधादिति । धर्मशास्त्रे प्रतिषिद्धमेतद्, 'न मुखे मेहेत' इति, असभ्यत्वाच्चेति । सद्भिर्गर्हितत्वादसभ्यत्वं, तस्मादसभ्यत्वात्, प्रयोक्तुरप्यसभ्यत्वं दृष्ट एव दोषः, अयं चापर इत्याह—पुनरपि हीति । यदि हि कुलटाऽऽदीनां मुखे जघनकर्म कुर्यात्तदा पुनरपि जघनकर्मकाले रागवशाद्वदनस्य संसर्गे संस्पर्शे सत्यर्तिं प्रतिपद्येत दुःखमधिगच्छेद्, विचलितोऽस्मीति, स्वयमेवेति । न तत्र नायिकाऽपि ॥ २२ ॥

वेश्याकामिनोऽयमदोषोऽन्यतोऽपि परिहार्यः स्यादिति वात्स्यायनः ॥ २३ ॥

वेश्याकामिन इति । कुलटाऽऽदयोऽपि वेश्याविशेषाः, तत्कामिनो नायकस्यादोषोऽयमिति, समयविरोधादित्ययं दोषो न भवतीत्यर्थः; पत्न्यानने चौपरिष्टकादौ दोषः, 'न मुखे मेहेत' इति, यदाह वसिष्ठः—

'यस्तु पाणिगृहीतायां मुखे मैथुनमाचरेत् ।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च' ॥ इति,

अन्यतोऽपि परिहार्य इति । असभ्यत्वाद्वदनसंसर्गाच्च, असभ्यत्वमतिश्चेत्ययं दोषः परिहार्यः, गुप्त्या वक्त्रसंरक्षणाच्च, कस्य चिद्देशप्रवृत्तेरदोषत्वादपरिहार्य इत्यपिशब्दात् ॥ २३ ॥

उभयमपि देशप्रवृत्त्या दर्शयन्नाह—

तस्माद्यास्त्वौपरिष्टकमाचरन्ति न ताभिः सह संसृज्यन्ते प्राच्याः ॥ २४ ॥

तस्मादिति । यतश्चैवं तस्मान्न संसृज्यन्त इति संबन्धः, यास्त्विति । या वेश्यास्त्वौपरिष्टकमाचरन्ति मुखे जघनकर्म कुर्वन्ति, न ताभिः सह संसृज्यन्ते संप्रयुज्यन्ते, मा भूत्तद्वदनसंसर्ग इति, अन्याभिरदृष्टदोषत्वात्संसृज्यन्त एवेत्यर्थोक्तम्, प्राच्या अङ्गात्पूर्वेण ॥ २४ ॥

वेश्याभिरेव न संसृज्यन्त आहिच्छत्रिकाः संसृष्टा अपि मुखकर्म तासां परिहरन्ति ॥ २५ ॥

आहिच्छत्रिकाः=अहिच्छत्रभवाः, न संसृज्यन्ते, अदृष्टमश्रुतमप्यौपरिष्टकं तासु संभाव्यत इति, संसृष्टा अपि त एव कथं चिद्रागवशाद्, मुखकर्म चुम्बनम् ॥ २६ ॥

निरपेक्षाः साकेताः संसृज्यन्ते ॥ २६ ॥

साकेताः=आयोध्यिकाः, ते निरपेक्षाः, वेश्यानां संप्रयोगे मुखकर्मणि च शौचाशौचविकल्पाभावात् ॥ २६ ॥

न तु स्वयमौपरिष्टकमाचरन्ति नागरकाः ॥ २७ ॥

नागरकाः=पाटलिपुत्रकाः, संप्रयुज्यन्ते वेश्याभिः न तु स्वयं तासां मुखे जघनकर्म कुर्वन्ति, मा भूद्वदनसंसर्ग इति, प्रयोजितास्त्वाचरन्ति वदनसंसर्गवर्जम् ॥ २७ ॥

सर्वमविशङ्कया प्रयोजयन्ति सौरसेनाः ॥ २८ ॥

सर्वमिति । संप्रयोगमौपरिष्टकं मुखकर्म च, अविशङ्कयेति । सर्वं शुची-

त्यभिप्रायेणेत्यर्थः, सौरसेनाः कौशाम्ब्या दक्षिणतः कूले ये निवसन्ति ॥२८॥

शङ्कायां हि स्वभार्यास्वप्यनाश्वासतामेव दर्शयन्नाह—

एवं ह्याहुः को हि योषितां शीलं शौचमाचारं चरित्रं प्रत्ययं वचनं वा श्रद्धातुमर्हति, निसर्गादेव हि मलिनदृष्टयो भवन्त्येता न परित्याज्याः, तस्मादासां स्मृतित एव शौचमन्वेष्टव्यम् ॥२९॥

एवं ह्याह—

'वत्सः प्रस्नवने मेध्यः श्वा मृगग्रहणे शुचिः ।
शकुनिः फलपाते तु स्त्रीमुखं रतिसंगमे ॥ इति ॥

एवं हीति । शीलं=स्वभावं, शौचम्=अशुचिद्रव्यविश्लेषणम्, आचारं=त्रयीकर्मानुष्ठानं, चरित्रं=कुलक्रमागतां स्थितिं, प्रत्ययं=विश्वासं, वचनं=वलितकं, कः श्रद्धातुमर्हति, परमार्थतः प्रत्येतुं नवेत्यर्थः, कुत इत्याह-निसर्गादेवेति । आत्मलाभादेव नान्यस्माद्, मलिनदृष्टयः=मलिनबुद्धयः, यल्लोकशास्त्रविरुद्धमप्याचरन्ति, न च परित्याज्या एवंभूता अपि, पुरुषार्थहेतुत्वात्, तस्माद्रतविधौ स्मृतित एव शौचमन्वेष्टव्यं लोके स्मृतेः प्रामाण्यात्, तां स्मृतिमाह—एवं हीति । आह-स्मृतिकारः, मुखवर्जं गौः सर्वतो मेध्येत्युक्तं, प्रस्नवनकाले तु मुखं शुचि तत्स्पृष्टं-क्षीरमपि, श्वपक्ष्युच्छिष्टं त्यजेदित्युक्तम्; मृगग्रहणे फलपातकाले च मुखस्य शुचित्वान्मांसं फलं च शुचि, तथा, रतिसङ्गमे=रत्यर्थसङ्गमे, स्त्रीमुखं कृतौपरिष्टकमन्यद्वा मेध्यं, नान्यदा सर्वाशुचिनिधानत्वादिति, अस्मिन्स्मृत्यर्थे सर्वत्र चुम्बनप्रसङ्ग इति ॥ २९ ॥

स्वमतं दर्शयन्नाह—

शिष्टविप्रतिपत्तेः स्मृतिवाक्यस्य च सावकाशत्वाद्देशस्थितेरात्मनश्च वृत्तिप्रत्ययानुरूपं प्रवर्तेतेति वात्स्यायनः ॥ ३० ॥

शिष्टविप्रतिपत्तेरिति । शिष्टानां प्राच्याहिच्छत्रिकनागरकाणां विप्रतिपत्तिर्दृश्यते, यथोक्तम्प्राक्, तस्माद्रतिसङ्गमेऽपि स्त्रीमुखन्न मेध्यं, शिष्टाचारस्य प्रामाण्याद्, यद्येवं विगीता स्मृतिरप्रामाण्यिका स्याद्, यथोक्तम्—

'विरुद्धा च विगीता च दृष्टार्था दृष्टकारणा ।
स्मृतिर्न श्रुतिमूला स्याद्या चैषा भवनश्रुतिः' इति ।

अत्रोत्तरमाह—सावकाशत्वादिति । पत्नीमेवाधिकृत्येत्युक्तम्—'स्त्रीमुखं रतिसङ्गमे' इति, यद्येवं वेश्यासु चुम्बनविकल्पानर्थक्यमित्यत्र

पाक्षिकमभ्यनुज्ञानमाह—देशस्थितेरिति। यो यस्मिन्देश आचारस्तदनुरूपं प्रवर्तेत, देशाचारस्य तत्रत्यानां प्रामाण्याद्, वृत्तिप्रत्ययानुरूपमिति। यथा सौमनस्यं यथा च विश्वासस्तथा प्रवर्तेत न शास्त्रेणैव केवलेनेति ॥ ३० ॥

इदं स्त्रीविषयमसाधारणमौपरिष्टकमुक्तं स्त्रिया एव कर्तृत्वात्, पुरुषविषयमाह—

भवन्ति चात्र श्लोकाः—

प्रमृष्टकुण्डलाश्चापि युवानः परिचारकाः।
केषांचिदेव कुर्वन्ति नराणामौपरिष्टकम् ॥ ३१ ॥

प्रमृष्टकुण्डला इति। उज्ज्वले कुण्डले येषामिति, नेपथ्योपलक्षणं-गृहीतनेपथ्या इत्यर्थः, युवानः प्राप्तरागत्वात्कर्तुं कुशला नटस्वरूपाः, नान्ये दोषाद् , यथोक्तम्—

'अजातश्मश्रवश्चेटा विश्वास्या मुखकर्मणि।
योज्या गृहीतनेपथ्या नेतरे श्मश्रुदोषतः' इति।

केषांचिदिति। ये मन्दरागा गतवयसोऽतिव्यायता ये च स्त्रीष्वलब्धवृत्तयः ॥ ३१ ॥

इदमप्यसाधारणम् एकस्यैव कर्तृत्वात्, द्वयोः कर्तृत्वे साधारणं, यदाह—

तथा नागरकाः केचिदन्योन्यस्य हितैषिणः।
कुर्वन्ति रूढविश्वासाः परस्परपरिग्रहम् ॥ ३२ ॥

तथेति। नागरका ये नागरवृत्तावधिकृताः, केचिदिति। योषाप्रायाः, हितैषिणः, विसृष्टिसुखकारित्वाद्, रूढविश्वासा मैत्र्या, परस्परपरिग्रहमिति। मम तावत्कुरु पश्चात्तवापि करिष्यामीति, युगपद्वा देहव्यत्यासेन रागात्कालमनपेक्षमाणाविति द्विविधं साधारणं-नागरका इत्युपलक्षणं, स्त्रियोऽपि कुर्वन्ति, यथोक्तम्—

'अन्तःपुरगताः काश्चित् स्त्रियश्चाप्राप्तभाण्डकाः।
भगे ह्यन्योन्यविश्वासात्कुर्वन्ति मुखचापलम्' इति ॥ ३२ ॥

पुरुषाश्च तथा स्त्रीषु कर्मैतत्किल कुर्वते।
व्यासस्तस्य च विज्ञेयो मुखचुम्बनवद्विधिः ॥ ३३ ॥

तथा स्त्रीष्विति। यथा स्त्रियः पुरुषेषु तथा स्त्रीषु पुरुषाः परिचारका नायका वा केचिद्भगे मुखेन कर्म कुर्वन्ति, किलेति। संभावना-

यां, तस्य चेति । पुरुषकर्तृकस्य, व्यासः प्रकारः, मुखचुम्बनवदिति । कन्याचुम्बने निमितादिना, अन्यत्र समादिग्रहणेन यो विधिः सोऽस्यापि यथासम्भवं विज्ञेयः ॥ ३३ ॥

तत्र परिचारके कर्तर्यसाधारणं नायके तु साधारणमपि संभवति, यच्च युगपत्परिपाट्या वा, तत्र युगपत्कथमित्याह—

परिवर्तितदेहौ तु स्त्रीपुंसौ यत्परस्परम् ।

युगपत्सम्प्रयुज्येते स कामः काकिलः स्मृतः ॥ ३४ ॥

परिवर्तितदेहाविति । पार्श्वसंपुटे पुमान् स्त्रिया ऊर्वोः शिरो निधत्ते स्त्री च पुंस इति युगपत्संप्रयुज्येते, एकस्मिन्काले मुखेन परस्परोपस्थेन्द्रिय-ग्रहणात्, काकिलः स्मृत इति । स्त्री पुमांश्च काक इव काकः, मुखेना-मेध्यग्रहणात्, तौ विद्येते यस्मिन्, काम इति । पिच्छादिषु द्रष्टव्यं, ककनं वा काको लौल्यं, 'कक लौल्ये' इति धातुपाठात्, तद्विद्यते ययोः स्त्रीपुंसयोरितीनिप्रत्ययः, तौ लात्यादत्त इति ॥ ३४ ॥

एतेन नरयोर्योषितोश्च परिवर्तितदेहयोर्व्याख्यातः, तत्र साधारणा-साधारणयोरसाधारणं श्रेयः, ततोऽपि परिचारकविषयं वेश्याविषयं हि खलसंसर्गादपरिशुद्धमिति दर्शयन्नाह—

तस्माद् गुणवतस्त्यक्त्वा चतुरांस्त्यागिनो वरान् ।

वेश्याः खलेषु रज्यन्ते दासहास्तिपकादिषु ॥ ३५ ॥

तस्मादिति । गुणवतः=नायकगुणयुक्तान्, चतुरान्=लोकयात्राकु-शलान्, त्यागिनः=दानशूरान्, वरान्=अभिजनाद्युपेतान्, खलेषु=नी-चेषु, तानेव दर्शयति—दासहस्तिपकादिष्विति । रज्यन्त इति । स्वभावा-ख्यानम्, अशिष्टधर्माचरणाद्वा, तेषु च रक्ता अपरचरितमपि प्रकाश-यन्ति ॥ ३५ ॥

न त्वेतद्ब्राह्मणो विद्वान्मन्त्री वा राजधूर्धरः ।

गृहीतप्रत्ययो वाऽपि कारयेदौपरिष्टकम् ॥ ३६ ॥

न त्वेतदिति । नैवं वेश्याभिः कारयेद्, ब्राह्मणो विद्वान्, श्रुतिस्मृत्य-र्थतत्त्वज्ञः, मन्त्री राजधूर्धरः प्राधान्येन यो राज्यं संवाहयति, समा-सान्तोऽत्रानित्यत्वान्न भवति, अन्यो वा कश्चिद् गृहीतप्रत्ययो-लोके विश्वास्यः, तासु क्रियमाणं लोके लब्धसमाख्यानं-गौरवं व्या-वर्तयति, अतो मा भूद्वदनसंस्पर्शदोषः, असभ्यत्वदोषस्तु दुर्निवारो-नेतरेषामविवक्षितत्वात् ॥ ३६ ॥

ननु च व्यासस्तन्मुखचुम्बनवद्विधिरिति शास्त्रेऽभिहितत्वात्साधा-

रणस्यापि प्रयोगप्रसङ्ग इत्याह—

न शास्त्रमस्तीत्येतावत्प्रयोगे कारणं भवेत् ।
शास्त्रार्थान्व्यापिनो विद्यात्प्रयोगांस्त्वेकदेशिकान् ॥ ३७ ॥

न शास्त्रमिति । अभिधायकं शास्त्रमस्तीति नैतावत्प्रयोगे कारणं, शास्त्रार्थान्व्यापिन इति । आलिङ्गनादेरर्थस्य रत्यौपयिकत्वात्, सर्वानेव कामिनोऽधिकृत्य प्रवृत्तत्वात्, प्रयोगानेकदेशिकान्, कस्य चिदेवार्थस्य शिष्टैः प्रवर्तनात् ॥ ३७ ॥

अयं च न्यायोऽन्यत्रापीत्याह—

रसवीर्यविपाका हि श्वमांसस्यापि वैद्यके ।
कीर्तिता इति तत्किं स्याद्भक्षणीयं विचक्षणैः ॥ ३८ ॥

रसवीर्यविपाका इति । रसो मधुरादिः, वीर्यं सामर्थ्यम्, पाक उपयुक्तस्य परिणामो मधुरादिः, श्वमांसस्यापि कीर्तिता इति व्यापित्वं रसादीनां, किम् भक्षणीयं विचक्षणैरित्येकदेशित्वम् ॥ ३८ ॥

यद्येवं शिष्टपरिहृतत्वादिहोपदेशानर्थक्यमित्याह—

सन्त्येव पुरुषाः केचित्सन्ति देशास्तथाविधाः ।
सन्ति कालाश्च तेष्वेते योगा न स्युर्निरर्थकाः ॥ ३९ ॥

सन्त्येवेति। सन्ति तादृशाः पुरुषा ये शुच्यशुचिषु निर्विकल्पाः, देशास्तथाविधा लाटसिन्धुविषयादयः, काला औपरिष्टकसात्म्याः, स्त्र्यायत्ता यदायत्तजीवितादयः, योगा इति । मुखचुम्बनवद्विधयः ॥ ३९ ॥

तस्माद्देशं च कालं च प्रयोगं शास्त्रमेव च ।
आत्मानं चापि संप्रेक्ष्य योगान्युञ्जीत वा न वा ॥ ४० ॥

तस्मादिति । यतश्चैवं तस्मात्साधारणस्य वा यथास्वं देशकालौ संवीक्ष्य, प्रयोगमुपायं च प्रयुज्यतेऽनेनेति, शास्त्रमभिधायकम्, आत्मानं च, कतरन्मे युक्तमिति, न वा प्रयुञ्जीतोभयमपि विद्वान् स्त्रमात्मानं संवीक्ष्य ॥ ४० ॥

अथ वा नायं पुरुषादिनियम इत्याह—

अर्थस्यास्य रहस्यत्वाच्चलत्वान्मनसस्तथा ।
कः कदा किं कुतः कुर्यादिति को ज्ञातुमर्हति ॥ ४१ ॥

इति श्रीवात्स्यायनीये कामसूत्रे साम्प्रयोगिके द्वितीयेऽधिकरण-
औपरिष्टकं नवमोऽध्यायः ।
आदितश्चतुर्दशः ।

अर्थस्येति । औपरिष्टकस्य रहसि भवत्वात् चित्तस्यास्थिरत्वात्, विशेषतो रागसंयुक्तस्य, कः कुर्याद् विद्वानितरो वेति, कदा किंमत्तावस्थायामितरस्यां वेति, किं कुर्यात् साधारणमसाधारणं लौकिकं वा सम्प्रयोगमिति, कुतो हेतोः किं रागाद्देशप्रवृत्तेर्वेति, को ज्ञातुमर्हति नैवेत्यर्थः ॥ ४ ॥ औपरिष्टकमेकोनविंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां साम्प्रयोगिके द्वितीयेऽधिकरण औपरिष्टकं नवमोऽध्यायः ।

## दशमोऽध्यायः ।

एवमौपरिष्टकान्तं रतमुक्तं, तस्यारम्भेऽवसाने च किं प्रतिपत्तव्यमिति तदुद्भवं रतारम्भावसानिकमुच्यते, तत्र यद्यपि प्रीतिविशेषानन्तरं रतारम्भिकं युक्तं रतावसानिकं चेहैव तथाभूतत्वादनुष्ठानक्रमस्येति, तथाऽपि प्रतीतिसम्भवत्वादालिङ्गनादीनां तदभिधानं तदनन्तरं च प्रतीकन्यायेन सर्वशेषतया रतारम्भः, तत्प्रतिबद्धत्वाच्चावसानिकम् ।

तत्र पूर्वमधिकृत्याह—

नागरकः सह मित्रजनेन परिचारकैश्च कृतपुष्पोपहारः सञ्चारितसुराभिधूपे रत्यावासे प्रसाधिते वासगृहे कृतस्नानप्रसाधनां युक्त्या पीतां स्त्रियं सान्त्वनैः पुनः पानेन चोपक्रमेत ॥ १ ॥

दक्षिणतश्चास्या उपवेशनम् ॥ २ ॥

केशहस्ते वस्त्रान्ते नीव्यामित्यवलम्बनम् ॥ ३ ॥

रत्यर्थं सव्येन बाहुनाऽनुद्धतः परिष्वङ्गः ॥ ४ ॥

पूर्वप्रकरणसंबद्धैः परिहासाऽनुरागैर्वचोभिरनुवृत्तिः ॥ ५ ॥

गूढाश्लीलानां च वस्तूनां समस्यया परिभाषणम् ॥ ६ ॥

सनृत्तमनृत्तं वा गीतं वादित्रम् ॥ ७ ॥

कलासु संकथाः ॥ ८ ॥

पुनः पानेनोपच्छन्दनम् ॥ ९ ॥

जातानुरागायां कुसुमानुलेपनताम्बूलदानेन च शेषजनविसृष्टिः ॥ १० ॥

विजने च यथोक्तैरालिङ्गनादिभिरेनामुद्धर्षयेत् ॥ ११ ॥

ततो नीवीविश्लेषणादि यथोक्तमुपक्रमेतेत्ययं रतारम्भः॥१२॥

नागरक इति । नागरकवृत्ताधिकृतः, तत्र मित्रजनेन पीठमर्दादिना परिचारकैस्ताम्बूलदायकसरककर्मान्तकारिभिः सहोपक्रमेतेति सम्बन्धः, पुष्पोपहारः पुष्पप्रकारः. रत्यावास इति। रत्यर्थो य आवासो बाह्यं वासगृहं, तत्र हि शयनीयं प्रकल्पेतेत्ययं वासगृहसंस्कारः, स्त्रिया द्विविधः—स्नानं नेपथ्यग्रहणं चेति शरीरसंस्कारः, असंस्कृताया दर्शनमपि प्रतिषिद्धं, युक्त्या पीतामिति । मनःसंस्कारः, नातिपीतां विभ्रमकरत्वात्, पीतमस्या विद्यत इति मत्वर्थो द्रष्टव्यः, यथा पीता गावः, प्रथमं सान्त्वनैः प्रियवाक्यैः कुशलप्रश्नादिभिरुपक्रमेत, पुनः पानेन सरकः पीयतामिति, तत्र दक्षिणे पार्श्वेऽस्या उपवेशनं, स्त्री वामपार्श्वे उपविशेद्, येन दक्षिणहस्तेन चषको वामेन च बाहुना परिष्वङ्गः, तत्र प्रथमं केशहस्तादिष्ववलम्बनं संस्पर्शनं, ततः सव्येन वामेन परिष्वङ्गः, अनुद्धत इति । यथा नोद्विजते, पूर्वप्रकरणसम्बद्धैरिति । अतिक्रान्तेन प्रस्तावेन युक्तैः 'स्मरसि सुभगे यदावयोस्तत्र तत्र परिहासोऽनुरागश्चासीद्' इत्येवं वचोभिरनुवर्तनं गूढाश्लीलानां चेति । यद्गूढं दुर्बोधमश्लीलं ग्राम्यं लोकप्रतीतं वस्तु गाथास्कन्धकादिषु निबद्धं तस्योभयस्यापि बुभुत्सायां समस्यया संक्षेपेण परिभाषणम्, परिकथनमित्यर्थः, सनृत्तमनृत्तं वा गीतमिति । या नृत्ताभिज्ञा तत्समक्षं गीतार्थमाङ्गिकाद्यभिनयेन प्रकाशयेद्, आसीननृत्तं स्याद्, इतरस्या गीतमेव केवलं, वादित्रमिति । नागदन्तावसक्तां वीणामादाय; तत्रान्यस्यासम्भवात्, कलासु सङ्कथाः, शेषास्वालेख्यादिषु कौशलख्यापनार्थम्, एवमावर्ज्य पुनः पानेनोपच्छन्दनं प्रोत्साहननं, जातरागायां च यथोक्तानुष्ठानेन ताम्बूलदानसम्प्रेषणोपायः, शेषजना मित्रपरिचारकादयः, यथोक्तैरिति । रतात्प्रागुक्तानि यानि, उद्धर्षयेदुत्कृष्टेन हर्षेण योजयेद्, यथा शयनीयं प्रतिपद्यते, तत इति । उत्तरकाले शयनीयगताया नीवीविश्लेषणायोपक्रमेत, इतः प्रभृति बाह्यं पुरुषोपसृप्तमिति ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

रतावसानिकं रागमतिवाह्यासंस्तुतयोरिव सव्रीडयोः परस्परमपश्यतोः पृथक्पृथगाचारभूमिगमनम् ॥ १३ ॥

प्रतिनिवृत्य च व्रीडायमानयोरुचितदेशोपविष्टयोस्ताम्बूल-

ग्रहणमच्छीकृतं चन्दनमन्यद्वाऽनुलेपनं तस्या गात्रे स्वयमेव निवेशयेत् ॥ १४ ॥

सव्येन बाहुना चैनां परिरभ्य चषकहस्तः सान्त्वयन्पाययेत् ॥ १५ ॥

जलानुपानं वा खण्डखाद्यकमन्यद्वा प्रकृतिसात्म्ययुक्तमुभावप्युपयुञ्जीयाताम् ॥ १६ ॥

अच्छरसकयूषमम्लयवागूं भृष्टमांसोपदंशानि पानकानि चूतफलानि शुष्कमांसं मातुलुङ्गचक्रकाणि सशर्कराणि च यथादेशसात्म्यं च ॥ १७ ॥

तत्र मधुरमिदं मृदु विशदमिति च विदश्य विदश्य तत्तदुपाहरेत् १८

हर्म्यतलस्थितयोर्वा चन्द्रिकासेवनार्थमासनम् ॥ १९ ॥

तत्रानुकूलाभिः कथाभिरनुवर्तेत ॥ २० ॥

तदङ्कसंलीनायाश्चन्द्रमसं पश्यन्त्या नक्षत्रपङ्क्तिव्यक्तीकरणम् ॥ २१ ॥

अरुन्धतीध्रुवसप्तर्षिमालादर्शनं चेति रतावसानिकम् ॥ २२ ॥

रतावसानिकमिति । वक्ष्यत इति शेषः, रागमतिवाह्य=रतिमनुभूय, असंस्तुतयोरिवेति । अपरिचितयोर्यथा व्रीडा तद्वत्सव्रीडयोरविनयाचरणाद्, एवं परस्परमपश्यतोः, तदवस्थदर्शनाद्वैराग्यमपि स्यादतः पृथक्पृथगाचारभूमिगमनं, नैकत्र शौचभूमौ शौचं कार्यमित्यर्थः, प्रतिनिवृत्याचारभूमेर्व्रीडायमानयोः, एकान्तेनापरित्यक्तलज्जत्वाद्, उचितदेशस्तदानीं शयनीयमपास्यान्यदेशः, ताम्बूलस्य ग्रहणं भक्षणं, तदानीं मुखस्याश्रीकत्वाद्वैरस्याच्च, तत्र क्षीणप्रधानधातुत्वाच्छरीरस्य बृंहणं बाह्यमाभ्यन्तरं च, तत्र बाह्यं ग्रीष्मकाले, अच्छीकृतं चन्दनमन्यद्वाऽनुलेपनं कालौपयिकं, स्वयमित्यनुरागख्यापनार्थं, निवेशयेत् पश्चादात्मन इत्यर्थः, आभ्यन्तरं पानादि, तत्रापि परिरभ्यालिङ्ग्य, चषको मद्यभाजनं, सान्त्वयन्प्रियाणि ब्रुवन् पाययेद्, जलानुपानं वा खण्डखाद्यकं बृंहणीयत्वाद्, अन्यद्वा तिलगर्भोत्करादिप्रकृतिसात्म्ययुक्तमुभावप्युपयुञ्जीयाताम्, अच्छरसकयूषमिति, यूषं द्विविधं-मांसनिर्यूहं व्रीहिनिर्यूहं च, बृंहणीयत्वान्मांसनिर्यूहं रसकयूषमच्छमुपयुञ्जीयाताम्, अम्लयवागूं मांससिद्धाम्, बृंहणीयत्वात्, भृष्टं भर्जितं मांसं तदेवोपदंशो येषां पानकानां, चूतफलानि पक्वानि, 'शुष्कमांसं बलबृंहणत्वाद्, मातुलुङ्गचक्रकाणीति । बीजपूरमीषदपनीतत्वक्कं खण्डशः कृत्तं श-

र्करायुक्तं, हृद्यत्वात्, यथादेशसात्म्यमिति । यस्मिन्देशे येन सात्म्यं तत्रेति । भक्ष्याद्युपयोगेऽनुरागख्यापनार्थो विधिः, विदश्य विदश्येति । उपलक्षणं चैतत्, इदं मृष्टमिदं वृष्यमित्यास्वाद्यास्वाद्य पानमपि तत्तदुपाहरेद्, हर्म्यतलस्थितयोर्वेति । यदि वासगृहस्थितयोरासने तापश्चन्द्रिका चोदिता, तदा तदुपरि सौधस्थितयोरूर्ध्वमासनं, तत्सेवनं च तापापनयनार्थं, यदि च तापेन न तत्र ताम्बूलग्रहणाद्यनुष्ठितं तदानीमिहानुष्ठेयं, तत्रेति । हर्म्यतले, भुक्तविरसत्वात्कामस्य बृंहणानन्तरं कामजननार्थं तदनुकूलाभिः कथाभिरनुवर्तेत, तदङ्कसंलीनायाश्चेति । आसीनस्य नायकस्याङ्के न्यस्तदेहाया नियतं गगनतले दृष्टिः, तत्र चन्द्रमसं नयनानन्दजननम् पश्यन्त्याः प्रसङ्गान्नक्षत्रपङ्क्तिव्यक्तीकरणं, प्रायशः स्त्रीणां नक्षत्रपङ्क्तिष्वपरिचयात्, इयमरुन्धती भगवती सूक्ष्मा य एनां न पश्यति स षण्मासान्म्रियते, अयं ध्रुवः पञ्चदशतारकः, यद्दर्शनाद्दिवसगतं पापमपैति, एते च सप्तर्षयः पङ्क्त्या स्थिता इति सन्दर्शयेत् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

द्वयमप्यधिकृत्याह—

तत्रैतद्भवति--

अवसानेऽपि च प्रीतिरुपचारैरुपस्कृता ।
सविस्रम्भकथायोगै रतिं जनयते पराम् ॥ २३ ॥
परस्परप्रीतिकरैरात्मभावानुवर्तनैः ।
क्षणात्क्रोधपरावृत्तैः क्षणात्प्रीतिविलोकितैः ॥ २४ ॥
हल्लीसकक्रीडनकैर्गायनैर्नाट्यरासकैः ।
रागलोलार्द्रनयनैश्चन्द्रमण्डलवीक्षणैः ॥ २५ ॥
आद्ये संदर्शने जाते पूर्वं ये स्युर्मनोरथाः ।
पुनर्वियोगे दुःखं च तस्य सर्वस्य कीर्तनैः ॥ २६ ॥
कीर्तनान्ते च रागेण परिष्वङ्गैः सचुम्बनैः ।
तैस्तैश्च भावैः संयुक्तो यूनो रागो विवर्धते ॥ २७ ॥

तत्रेति । आरम्भेऽवसाने चोभयत्राप्येतद्वक्ष्यमाणकं भवति, अवसानेऽपीति । अपिशब्दादारम्भेऽपीति, प्रीतिः, स्त्रियाः पुंसश्च स्नेहः, उपचारैः स्रग्गन्धादिभिः पानादिभिश्च, उपस्कृतेत्यभिवर्धिता, सविस्रम्भकथायोगैरिति । सविश्वासाभिः कथाभिः सविश्वासैश्च योगैः, रतिं वि·

सृष्टिलक्षणां परामुत्कृष्टां जनयते, कारणस्य तथाविधत्वात्, तत्र विस्रम्भयोगमधिकृत्याह—परस्परप्रीतिकरैरिति । स्त्रीपुंसयोस्तदन्ते सुखकरैः, कैरित्याह–आत्मभावानुवर्तनैरिति । आत्माभिप्रायेण यान्यनुवर्तनान्यालिङ्गनादीनि, अनुवर्त्यन्ते एभिरिति कृत्वा, क्षणात्क्रोधपरावृत्तैः क्षणात्प्रीतिविलोकनैरिति । अन्तरा प्रणयकलहात्क्षणक्रोधेन यानि परावर्तनानि पुनः प्रसादात्क्षणं प्रीत्या यानि विलोकनानि तैः, स्नेहो विवर्धत इति प्रतिपदं योज्यं, हल्लीसकक्रीडनकैरिति । हल्लीसकक्रीडनं येषु गीतेषु, यथोक्तम् ।

'मण्डलेन च यत्स्त्रीणां नृत्तं हल्लीसकं तु तत् ।
नेता तत्र भवेदेको गोपस्त्रीणां यथा हरिः ॥'

नाट्यरासकैरन्योन्यदेशीयैः, तेषां श्राव्यत्वाद्गीतविशेषणमेतद्, रागलोलार्द्रनयनैरिति । रागेण चञ्चलानि सबाष्पाणि च नयनानि येषु गीतकेषु, अनेन रक्तकण्ठत्वं दर्शयति, चन्द्रमण्डलवीक्षणैरिति । मनोहारिवस्तूपलक्षणम्, एतेऽनुवर्तनादयो विस्रम्भयोगाः, विश्वासेन प्रयुज्यमानत्वाद्, विस्रम्भकथामधिकृत्याह—आद्य इति । प्रथमे मनोरथाः कदाऽनेन वा सङ्गमोऽस्त्वित्यादयः, पुनर्वियोगे सन्तप्तयोर्दुःखमस्वास्थ्यं कीर्तनान्ते चेति । पुनर्विस्रम्भयोगस्यावर्तनमिति दर्शयति, तैस्तैरिति । अन्यैरपि विस्रम्भयोगैर्भावसंयुक्तैः, यून इत्येकशेषनिर्देशाद्, यूनो युवत्याश्च ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥

रतारम्भावसानिकमेकोनविंशं प्रकरणम् ॥

आरम्भावसानयो रतावयवत्वात्तद्ग्रहणे यथा रतं त्र्यवस्थं तथा व्यवस्था स्वाभाविकादिरागभेदादपि विशिष्यत इत्यतो रतविशेषा उच्यन्ते—

**रागवदाहार्यरागं कृत्रिमरागं व्यवहितरागं पोटारतं खलरतमयन्त्रितरतमिति रतविशेषाः ॥ २८ ॥**

रागवदित्यादिना स्वभाविक आहार्यः कृत्रिमो दर्पजो विस्रम्भजश्चेति रागविशेषाः, तद्भेदाद्रागवदादयोऽपि रतविशेषाः ॥ २८ ॥

एषां लक्षणमुपचारं चाह—

**संदर्शनात्प्रभृत्युभयोरपि प्रवृद्धरागयोः प्रयत्नकृते समागमे प्रवासप्रत्यागमने वा कलहवियोगयोगे तद्रागवत् ॥ २९ ॥**

सन्दर्शनादिति । प्रथमदर्शनात्प्रभृति चक्षुःप्रीत्याद्यवस्थावशात्प्रवृद्धरागयोर्दूतसम्प्रेषणादिप्रयत्नात्कृते समागमे यद्रतं, यच्च प्रवा-

सात्प्रत्यागमने विरहिणोरुत्कण्ठितयोः, यच्च प्रणयकलहे प्रशान्ते प्रसन्नयो रतं तद्रागवत्, स्वाभाविकस्य रागस्यातिशयेन योगात् ॥ २९ ॥

तत्रात्माभिप्रायाद्यावदर्थं च प्रवृत्तिः ॥ ३० ॥

यावदर्थमिति । प्रवृद्धरागत्वान्न किञ्चित्क्षमते, केवलं स्वाभिप्रायवशात्तयोर्यावद्रति प्रवृत्तिः ॥ ३० ॥

मध्यस्थरागयोरारब्धं यदनुरज्यते तदाहार्यरागम् ॥ ३१ ॥

मध्यस्थरागयोरिति । इच्छामात्रस्योत्पन्नत्वाच्चक्षुःप्रीतिरेव न मनःसम्प्रयोगादयोऽवस्था इत्यतो मध्यस्थो रागः, तयोर्यदारब्धरतमारम्भकेण विधिनाऽनुरज्यत इति पश्चाद्रागेण संश्लिष्यते कारणेन कार्योपचारान्मिथुनमेव रतमित्युक्तम्, आहार्यरागं तत्र रागस्योत्पाद्यमानत्वात् ॥ ३१ ॥

तत्र चतुःषष्टिकैर्योगैः सात्म्यानुविद्धैः संधुक्ष्य संधुक्ष्य रागं प्रवर्तेत तत्कार्यहेतोरन्यत्र सक्तयोर्वा कृत्रिमरागम् ॥ ३२ ॥

तत्र चतुःषष्टिकैरिति । आलिङ्गनादिभिर्योगैः, सात्म्यानुविद्धैर्यस्य यैः सात्म्यं तद्युक्तैः, रागमिच्छामात्रमात्मनः स्त्रियाश्च सन्दीप्य प्रवर्तेत, कार्यहेतोरिति । अर्थादानादनर्थप्रतीकाराद्वा न रागाद्, अन्यत्र सक्तयोर्वेति । अन्यस्मिन्पुंसि स्त्री सक्ता, पुमानप्यन्यस्यां स्त्रियां तयोर्यदनुरोधाद्रतं कृत्रिमरागम्, उभयत्रापि स्वाभाविकरागस्यानुत्पत्तेः ॥ ३२ ॥

तत्र समुच्चयेन योगाञ्शास्त्रतः पश्येत् ॥ ३३ ॥

समुच्चयेनेति । न विकल्पेन द्वयोर्योगयोरन्यतरयोगे स्वाभाविकरागस्यानुत्पत्तेः, यस्मात्समुच्चयेन सर्वानेवालिङ्गनादिप्रयोगान् प्रयागकाले पश्येत्, तत्रापि शास्त्रतः, तत्रापि स्थानकालस्वभावानामपेक्षयेत्यर्थः ॥ ३३ ॥

पुरुषस्तु हृदयप्रियामन्यां मनसि निधाय व्यवहरेत् संप्रयोगात्प्रभृति रतिं यावदतस्तद्व्यवहितरागम् ॥ ३४ ॥

पुरुष इति । योऽन्यप्रसक्तोऽप्यभावितसन्तानस्तस्यापरस्यामपि राग उत्पद्यत एवास्वाभाविकत्वात्कृत्रिम इत्युच्यते, यस्तु सम्भावितसन्तानः सोऽन्यस्यां न रमते रागाभावाद्, यदा तु तामेव हृदयप्रियामिष्टां मनसाऽभिध्याय; चेतसि रागमुत्पाद्य, सम्प्रयोगात्प्रभृति रतिं यावद्व्यवहरेत्प्रवर्त्तेत तदा तद्व्यवहितरागमित्युच्यते हृदयप्रियया रागस्य व्यवहितत्वाद्, एवं योषिदपि हृदये प्रियं निधायेति योज्यम्, अत्र स-

मुच्चयेन योगानित्ययमेवोपचारः ॥ ३४ ॥

स्वाभाविकाहार्यकृत्रिमभेदात्त्रयो नायका नायिकाश्च, तत्र सदृशसंयोगे त्रीणि शुद्धानि, विपर्यये षट् सङ्कीर्णानि, तत्र सङ्कीर्णानेवोपचारान्योजयेद्, एतत् सर्वं समानप्रतिपत्त्योः स्त्रीपुंसयोः, हीनाधिकयोर्दर्पजाद्विशेषमाह—

न्यूनायां कुम्भदास्यां परिचारिकायां वा यावदर्थं सम्प्रयोगस्तत्पोटारतम् ॥ ३६ ॥

न्यूनायां कुम्भदास्यामिति । अधमायां परिचारिकायां वा न्यूनायां न समायां चन्द्रापीडस्येव पत्त्रलेखायां यावद्रति, पोटारतमिति । उभयव्यञ्जना पोटा नपुंसकम् ॥ ३५ ॥

तत्रोपचारान्नाद्रियेत ॥ ३६ ॥

तस्यामुपचारानालिङ्गनादीन्नाद्रियेत, अरञ्जनीयत्वात्, केवलं दर्पादुत्पन्नो रागोऽपनेयः ॥ ३७ ॥

तथा वेश्याया ग्रामीणेन सह यावदर्थं खलरतम् ॥ ३७ ॥

तथेति । यथा नायकस्यासादृश्यात् सम्प्रयोगः, वेश्याया इति । गणिकाया रूपाजीवायाः न कुम्भदास्याः, अभिप्रेतमलभमानाया दर्पाद्ग्रामीणेन कर्षकादिना सम्प्रयोगः खलरतं, ग्रामीणस्य खलत्वेन विगोपनकरत्वात् ॥ ३७ ॥

ग्रामव्रजप्रत्यन्तयोषिद्भिश्च नागरकस्य ॥ ३८ ॥

तथा ग्रामादियोषिद्भिर्नागरकस्य पत्तनवासिनो दर्पाद्यावदर्थं सम्प्रयोगः खलरतं, न पोटारतं विगोपनस्यापि तत्र सम्भवात्, तत्र, ग्रामयोषितः=कर्षकादिस्त्रियः, व्रजयोषितः गोप्यः, प्रत्यन्तयोषितः=शबर्यादयः ॥ ३८ ॥

विस्रम्भरागाद्विशेषमाह—

उत्पन्नविस्रम्भयोश्च परस्परानुकूल्यादयन्त्रितरतमिति रतानि ॥ ३९ ॥

उत्पन्नविस्रम्भयोश्चेति । चिरकालसम्प्रयोगाज्जातविश्वासयोः परस्परानुकूल्यादिति । स्त्रिया आनुकूल्येन पुमानारभेत, तदानुकूल्येन च स्त्री, अयन्त्रितरतं यन्त्रणाऽभावात्, तच्च चित्ररतं पुरुषायितादिभेदादनेकविधमिति बहुवचनेन दर्शयति—रतानीति ॥ ३९ ॥

इति रतविशेषा एकविंशतितमं प्रकरणम् ।

प्रणयकलहं वक्ष्यामः—

यथा जातविस्रम्भयोरयन्त्रितरतं तथा प्रणयात्कलहोऽपीति प्रणयकलह उच्यते, तत्र कलहकारणमाह—

वर्धमानप्रणया तु नायिका सपत्नीनामग्रहणं तदाश्रयमालापं वा गोत्रस्खलितं वा न मर्षयेद् नायकव्यलीकं च ॥ ४० ॥

वर्धमानप्रणया त्विति । यथा यथा विश्वासो वर्धते तथा तथा मृदुमध्याधिमात्रेण न मर्षयेदित्यर्थः, प्रायशश्च नायको विप्रियकारी तन्मूलश्च कलह इति दर्शयन्नाह—नायिकेति । नायकस्य विप्रियकरणं वाचा क्रियया वा, तत्र वाचा सपत्नीनामग्रहणं, तदाश्रयमिति । अगृहीत्वैव नाम सपत्नीसम्बद्धं गुणसूचकमालापं गोत्रस्खलितं तन्नाम्ना नायिकाऽऽह्वानं, नायकव्यलीकमिति । सपत्न्या गृहगमनं ताम्बूलादिप्रेषणं संयोगादिकं नायकस्यापराधं न मर्षयेत्, क्रियया विप्रियकरणमेतत् ॥ ४० ॥

अमर्षेण वाऽनुष्ठानादित्याह—

तत्र सुभृशः कलहो रुदितमायासः शिरोरुहाणामवक्षोदनं प्रहणनमासनाच्छयनाद्वा मह्यां पतनं माल्यभूषणावमोक्षो भूमौ शय्या च ॥ ४१ ॥

तत्रेति । सपत्नीनामग्रहणादिषु, अनुष्ठानं वाचा क्रियया च, तत्र वाचा कलहः सुभृशोऽतीव महान् पुनर्मैवं कार्षीरिति, क्रियया रुदितादि, आयासः शरीरवेदनाकम्पादिजः, अवक्षोदनं विधूननम्, प्रहणनमात्मनः, अन्ये नायकस्य शिरोरुहावलम्बनं प्रहणनं चेत्याहुः, मह्यामिति । आसनादिति । यतः पतिताया न दुःखोत्पत्तिः, माल्यभूषणयोरपिनद्धयोर्मोक्षणं त्यागः, भूमौ शय्या, न तेन सह शयनम् ॥ ४१ ॥

स नायकोऽपि सापराधत्वात्किं प्रतिपद्येतेत्याह—

तत्र युक्तरूपेण साम्ना पादपतनेन वा प्रसन्नमनास्तामनुनयन्नुपक्रम्य शयनमारोहयेत् ॥ ४२ ॥

तत्रेति । तस्मिन्ननुष्ठाने, साम्नेति । प्रियवचनेन; तस्य युक्तरूपताऽपराधविशेषात्, पादपतनं नायकविशेषात्, प्रसन्नमना इति । अप्रदर्शितविकारः, मा भूत्क्षते क्षार इति, तामिति । भूमौ सुप्ताम्, अनुनयन् प्रसादयन्, उपक्रम्योत्थापयितुं, शयनमारोहयेत्, प्रिये ! प्रसीदोत्तिष्ठ शयनमध्यास्यतामिति ॥ ४२ ॥

तस्य च वचनमुत्तरेण योजयन्ती विवृद्धक्रोधा सकचग्रहम-

स्यास्यमुन्नमय्य पादेन बाहौ शिरसि वक्षसि पृष्ठे वा सकृद्द्विस्त्रिरवहन्यात् ॥ ४३ ॥

द्वारदेशं गच्छेत्तत्रचोपविश्याश्रुकरणमिति ॥ ४४ ॥

अतिक्रुद्धाऽपि तु न द्वारदेशाद् भूयो गच्छेद् दोषवत्त्वादिति दत्तकः ॥ ४५ ॥

तस्य चेति । अनुनयतः, वचनमुत्तरेण योजयन्ती तत्कालोचितेन, विवृद्धक्रोधा पुनःपुनरपराधस्मरणात्, सकचग्रहमस्यास्यं मुखमुन्नमय्य, किंचिद्भावितचेष्टितो नेति ज्ञातुं सकृदवहत्य, द्विस्त्रिरिति । क्रोधवशात्, तदानीं शिरसि पादताडनमपि न दोषाय, सौभाग्यचिह्नं तदिति नागरकवृद्धाः, तत्र चेति । द्वारदेशे, अश्रुकरणमश्रुविमोचनं, न भूयो न बहिः, दोषवत्त्वाद् भूयोगमनस्य कोपव्याजेनान्यत्र गमनाशङ्कोत्पत्तेः, दत्तकग्रहणं पूजार्थं, तन्मतस्याप्रतिषिद्धत्वात् ॥ ४३ ॥ ४४ ॥ ४५ ॥

तत्र युक्तितोऽनुनीयमाना प्रसादमाकाङ्क्षेत प्रसन्नाऽपि तु सकषायैरेव वाक्यैरेनं तुदतीव प्रसन्ना रतिकाङ्क्षिणी नायकेन परिरभ्येत ॥ ४६ ॥

तत्रेति । अश्रुकरणे पादताडनं क्रोधस्यावधिरिति मन्यमानो नायकः पुनस्तां युक्त्याऽनुनयेत्, सा तेन युक्तितोऽनुनीयमाना पादपतनंप्रसादनोपायस्यावधिरिति मन्यमाना प्रसादमाकाङ्क्षेत, ततः प्रसन्ना नायकेनालिङ्ग्यते तत्रापि सकलुषैः सासूयैर्वाक्यैरेनं नायक तुदती व्यथयन्ती, प्रसन्ना रतिकाङ्क्षिणी प्रसन्ना रतिमाकाङ्क्षमाणा, अन्यथा न यदि परिरभ्येत तदाऽतिभूमिं गतात्कोपान्नायकोऽप्यप्रसन्न इति मतोऽयंकुलयुवत्याः पुनर्भुवश्च विधिः ॥ ४६ ॥

वेश्यायाः परपरिगृहीतायाश्च विशेषमाह—

स्वभवनस्था तु निमित्तात्कलहिता तथाविधचेष्टैव नायकमभिगच्छेत् ॥ ४७ ॥

स्वभवनस्था त्विति । निमित्तात्पूर्वोक्तात्, कलहितेति । कलहः संजातो यस्याः, कृतकलहेत्यर्थः, वाचिकममर्षणमेतत्, कायिकमाह—तथाविधचेष्टैवेति । असूयासूचकैर्दुर्निरीक्षणभ्रूभङ्गादिभिः, नायकमभिगच्छेदिति, तस्य समीपे ढौकेतेत्यर्थः ॥ ४७ ॥

तत्र पीठमर्दविटविदूषकैर्नायकप्रयुक्तैरुपशमितरोषा तैरेवा-

नुनीता तैः सहैव तद्भवनमाधिगच्छेत्तत्र च वसेदिति प्रणयकलहः ॥ ४८

तत्र तस्मिन्कोपानुष्ठाने, नायकप्रयुक्तैस्तस्याः प्रत्यानयने, उपशमितरोषा साम्ना तैरेवानुनीता, अपादपतनेन नायकेन बहिः स्त्रीषु पादपतनस्य प्रतिषिद्धत्वात्, सहैव गच्छेत् स्वगौरवोत्पादनार्थं, तत्रैव च वसेद् नायकभवने तां रात्रिं रागसंधुक्षणार्थम् ॥ ४८ ॥

अधिकरणार्थमुपसंहरति—

भवन्ति चात्र श्लोकाः

एवमेतां चतुःषष्टिं बाभ्रव्येण प्रकीर्तिताम् ।
प्रयुञ्जानो वरस्त्रीषु सिद्धिं गच्छति नायकः ॥ ४९ ॥

एवमिति । चतुःषष्टिमालिङ्गनादिकाम्, बाभ्रव्येण पाञ्चालेन, वरस्त्रीषु तद्विज्ञासु, सिद्धिं गच्छति सौभाग्यमाप्नोति, तस्माच्चतुःषष्टिरालिङ्गनादीनां ज्ञातव्या, अन्यथा ह्यपरिज्ञानेऽन्यशास्त्रपरिज्ञानेऽपि न केवलं सिद्धिं नाधिगच्छति, अन्यत्रापि नात्यर्थं पूज्यते ॥ ४९ ॥

अस्यास्तु परिज्ञानेऽन्यशास्त्रापरिज्ञानेऽपि केवलं सिद्धः पूज्यश्चान्यत्राप्यग्रणीः स्यादिति दर्शयन्नाह—

ब्रुवन्नप्यन्यशास्त्राणि चतुःषष्टिविवर्जितः ।
विद्वत्संसदि नात्यर्थं कथासु परिपूज्यते ॥ ५० ॥

ब्रुवन्नपीति । अर्थतः प्रयोगतश्च कथयन्, विद्वत्संसदीति । त्रिवर्गप्रतिपत्तौ येऽधिकृतास्ते विद्वांसः, तत्सभायां, कथासु त्रिवर्गस्य ॥ ५० ॥

वर्जितोऽप्यन्यविज्ञानैरेतया यस्त्वलंकृतः ।
स गोष्ठ्यां नरनारीणां कथास्वग्रं विगाहते ॥ ५१ ॥

अन्यविज्ञानैर्व्याकरणादिशास्त्रपरिज्ञानैः, एतयेति । चतुःषष्ट्या, अलंकृतः प्रयोगतोऽर्थतश्च ज्ञातत्वाद्, गोष्ठ्यां नरनारीणामासनबन्धेऽन्यशास्त्रं नाधिक्रियते, कथासु कामसूत्रस्य, अग्रं विगाहते, अग्रणीर्भवतीत्यर्थः ॥ ५१ ॥

ननु चतुःषष्टेरपूज्यत्वात्कथं ज्ञाता विद्वत्संसदि पूज्यत इति चेदाह—

विद्वद्भिः पूजितामेनां खलैरपि सुपूजिताम् ।
पूजितां गणिकासङ्घैर्नन्दिनीं को न पूजयेत् ॥ ५२ ॥

विद्वद्भिरिति । त्रिवर्गवेदिभिः स्त्रीसंरक्षणोपायत्वात्पूजितां, खलैरपि सुपूजितां, वस्तुतस्तथाविधत्वात्, पूजितां गणिकासंघैः, जीविकोपा-

यत्वाद्, एवं च कृत्वा नन्दिनीत्युच्यत इत्याह—नन्दिनीमिति । नन्दनं-नन्दः पूजा, सा विद्यते यस्या इति ॥ ५२ ॥

यथेयमनुगतार्था संज्ञा तथाऽन्याऽपीत्याह—

नन्दिनी सुभगा सिद्धा सुभगङ्करणीति च ।
नारीप्रियेति चाचार्यैः शास्त्रेष्वेषा निरुच्यते ॥ ५३ ॥

नन्दिनीति । सुभगा सर्वैर्गृहिभिरनुष्ठीयमानत्वात्, सिद्धा विद्येव वशङ्करणी, सुभगङ्करणी स्त्रीपुंसयोः सौभाग्यकरणाद्, नारीप्रिया विशेषतस्तत्सुखकरणाद्, एवमनेकार्थसाधिका, कस्तां न पूजयेत् ॥ ५३ ॥

अतो ज्ञाताऽपि तद्योगात्पूज्यः, विशेषतो नायिकानामित्याह—

कन्याभिः परयोषिद्भिर्गणिकाभिश्च भावतः ।
वीक्ष्यते बहुमानेन चतुःषष्टिविचक्षणः ॥ ५४ ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे रतारम्भावसानिकं रतविशेषाः प्रणयकलहश्च दशमोऽध्यायः ।

आदितः पञ्चदश ।

कन्याभिरिति । पुनर्भूः परयोषित्येवान्तर्भूता, सैव हि विधवा पुनर्भवतीति, वेश्येति वक्तव्ये गणिकाग्रहणं योषिदपि चतुःषष्टिविचक्षणेति दर्शनार्थम्, भावत इति । भावेन हेतुना, बहुमानेन गौरवेण ॥ ५४ ॥

प्रणयकलहो द्वाविंशं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां सांप्रयोगिके द्वितीयेऽधिकरणे रतारम्भावसानिकं रतविशेषाः प्रणयकलहश्च दशमोऽध्यायः ।

## समाप्तमिदं सांप्रयोगिकं द्वितीयमधिकरणम्।

# कन्यासम्प्रयुक्तकं नाम तृतीयमधिकरणम् ।

## प्रथमोऽध्यायः ।

चतुःषष्टिविचक्षणः कन्याभिर्भावितो वीक्ष्यमाणोऽपि न समागमं विना सम्प्रयुज्यत इति तत्समागमोपाय आवाप उच्यते, समन्तादावाप्यन्ते स्त्रियोऽनेनेति, तत्र कन्यायाः प्रधानत्वात्कन्यासम्प्रयुक्तकमुच्यते, तत्रोद्वापा अष्टौ विवाहाः—ब्राह्मः प्राजापत्य आर्षो दैवो गान्धर्व आसुरः पैशाचो राक्षस इति, तत्र पूर्वे चत्वारो धर्म्या इति तदर्थं वरणसंविधानप्रकरणमुच्यते, किमर्थमेवमनुष्ठीयत इति चेद् ? आह—

सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः सम्बन्धः पक्षवृद्धिरनुपस्कृता रतिश्च ॥ १ ॥

सवर्णायामिति । ब्राह्मणादीनां यथास्वं सवर्णायाम्, अनन्यपूर्वायामिति । मनसा कर्मणा वचसा वाऽन्यस्मै या न दत्ता, तत्र हि प्रगूढमपत्यं तदस्यैवेति स्मृत्यर्थः, शास्त्रत इति । शास्त्रोक्तेन वरणपूर्वेण परिणयविधिनाऽधिगतायां स्वीकृतायां सत्यां धर्मः पत्नीसंयोगाख्य इत्यादिप्रवर्तनं च, अर्थो यौतुकलाभाद् गार्हस्थ्यानुष्ठानाच्च, पुत्रा दृष्टादृष्टार्थाः, सम्बन्धः सहैकभोजनादिहेतुः, पक्षवृद्धिरिति । स्वपक्षस्य वृद्धिः पक्षान्तरलाभाद्, अनुपस्कृता रतिरकृत्रिमा विश्वासातिशययोगात् ॥ १ ॥

यतश्चैवम्—

तस्मात्कन्यामभिजनोपेतां मातापितृमतीं त्रिवर्षात्प्रभृति न्यूनवयसं श्लाघ्याचारे धनवति पक्षवति कुले सम्बन्धिप्रिये सम्बन्धिभिराकुले प्रसूतां प्रभूतमातापितृपक्षां रूपशीललक्षणसम्पन्नामन्यूनानधिकाविनष्टदन्तनखकर्णकेशाक्षिस्तनीमरोगिप्रकृतिशरीरां तथाविध एव श्रुतवाञ्शीलयेत् ॥ २ ॥

तस्मात्कन्यां शीलयेदिति सम्बन्धः, अशीलितायां वरणासम्भवात्, तत्र शीलनमभिजनतः सनाथतो वयसः कुलाचारतो द्रव्यतोऽनुरागतो रूपतः शीलतो बाह्यलक्षणत आरोग्यतश्चेति, यथाक्रममाह—अभिजनः कुलम्, मातापितृमतीं सनाथत्वात्, त्रिवर्षादिति । वर्षत्रयात्प्रभृति न्यूनवयसं, नैकेन द्वाभ्यां वाऽपि समवयसमधिकव-

यसं वा, श्लाघ्यः स्पृहणीय आचारो यस्मिन्कुले, धनवति धनधान्याढ्ये, सम्बन्धिप्रियेऽनुरागिणि, पक्षवति, सम्बन्धिभिराकुले, प्रभूतमातापितृपक्षामित्यनेनातिसनाथतां दर्शयति, रूपं शरीरस्य शोभनो यो वर्णः संस्थानं च, शीलं सुस्वभावता, लक्षणमवैधव्यादिसूचकम्, अन्यूनेति । तत्प्रत्येकं योज्यं, यथासम्भवमन्यूनमनधिकमनष्टं च दन्तादि यस्याः, अवयवरूपेणापि युक्तामित्यर्थः, कन्यायां दन्तादीनां प्रधानावयवत्वाद्, अरोगिप्रकृतिशरीरामिति । स्वभावतो न रोगवच्छरीरं यस्या इत्यर्थः, तथाविध एवेति । अभिजनाद्युपेतोऽन्यथा ह्यगम्य एव स्याद्, विशेषमाह—श्रुतवानिति । गृहीतविद्य इत्यर्थः, शीलयेन्मनसि समादध्याद्, शील समाधाविति धातुपाठात् ॥ २ ॥

यां गृहीत्वा कृतिनमात्मानं मन्येत न च समानैर्निन्द्येत तस्यां प्रवृत्तिरिति घोटकमुखः ॥ ३ ॥

गृहीत्वा परिणीय, कृतिनं कृतार्थं, न च समानैर्निन्द्येत, कुत्साजनकं कृतमनेनेति, प्रवृत्तिर्वरणसंविधानं, घोटकमुखग्रहणमधिकरणप्रावीण्यख्यापनार्थम् ॥ ३ ॥

वरणं द्विविधम्—पौरुषेण दवेन च विधिना, तत्र पूर्वमधिकृत्याह—

तस्या वरणे मातापितरौ संबन्धिनश्च प्रयतेरन् मित्राणि च गृहीतवाक्यान्युभयसंबद्धानि ॥ ४ ॥

तस्या इति । शीलितायाः, वरणे=याचने, मातापितरौ नायकेन मित्रजनमभिधाय प्रेरितौ प्रयतेतां, वरयितृपुरुषप्रेरणेन संबन्धिनो ये नायककुले संबन्धं कृतवन्तः, मित्राणि च नायकस्य प्रयतेरन्नित्येव, गृहीतवाक्यानि, तद्वचनस्यानतिक्रमणीयत्वाद्, उभयकुलसंबद्धानि मातृसम्बन्धेन पितृसम्बन्धेन च ॥ ४ ॥

तान्यन्येषां वरयितॄणां दोषान्प्रत्यक्षानागामिकांश्च श्रावयेयुः ॥ ५ ॥

कौलान्पौरुषेयानभिप्रायसंबर्धकांश्च नायकगुणान् विशेषतश्च कन्यामातुरनुकूलांस्तदात्वायतियुक्तान्दर्शयेयुः ॥ ६ ॥

तानीति । मित्राणि, अन्येषामिति । नायकादन्ये ये वरयितारः, वरईप्सायामदन्तश्चौरादिकः, प्रत्यक्षान्दोषान्विरूपकान्धकुब्जत्वादीन्, आगमिकान्सामुद्रोक्तान्, आगामिकानिति पाठान्तरम्, भाविन इत्य-

र्थः, श्रावयेयुः, तस्याः पितरावित्यर्थात्,

कौलान्कुले भवान्, शीलशौण्डीर्यादीन् नायकगुणान्, पौरुषेयान् पुरुषकारनिष्पन्नाञ् शास्त्रकलाग्रहणादीन्, अभिप्रायसंबर्धकांश्चेति। पित्रोः कन्यादानाभिप्रायं संबर्धयन्ति ये, विशेषतः कन्यामातुर्येऽनुकूला भवन्ति ते बाल्यवयस्त्वादयः, तदात्वायतियुक्तानिति। वर्तमानेनानागतेन च कालेन फलदानात्संयुतान्, 'तत्कालस्तु तदात्वं स्यादायतिः काल उत्तरः' इत्यमरः, दर्शयेयुः, मित्त्राणीत्येव ॥ ५-६ ॥

दैवमधिकृत्याह—

दैवचिन्तकरूपश्च शकुननिमित्तग्रहलग्नबललक्षणदर्शनेन नायकस्य भविष्यन्तमर्थसंयोगं कल्याणमनुवर्णयेत् ॥ ७ ॥

दैवचिन्तकरूपश्चेति। सांवत्सरव्यञ्जनो नायकप्रहितः, शान्तायां दिशि रटतः काकादेः शकुनस्य निमित्तस्य तज्जात्यादेः, शुभग्रहाणां लग्नादुपचयस्थानेषु स्थितानां यद् बलं दिक्कालस्थानस्वभावैस्तस्य दर्शनेन, लक्षणस्य शङ्खचक्रादेर्दर्शनेन भविष्यन्तमनागतमर्थसंयोगं सैनापत्याध्यक्ष्यपत्तनादिलाभं, कल्याणमिति। कल्याणहेतुत्वाद्, अर्थानुबन्धमित्यर्थः ॥ ७ ॥

अपरे पुनरस्यान्यतो विशिष्टेन कन्यालाभेन कन्यामातरमुन्मादयेयुः ॥ ८ ॥

अपर इति। दैवचिन्तकरूपाः, अस्य नायकस्य, अन्यत इति। यतो व्रियते कन्या ततोऽन्यस्माद्, विशिष्टेनेति। अमुष्य सेनापतेरर्थरूपवती दुहिताऽस्मै दातुमिष्यते; येन वयं ह्यस्तने नक्षत्रसंयोगं पृष्टा इत्यनेन कन्यामातरमुन्मादयेयुरनुरञ्जयेयुः, येनानुरक्ता दुहितरं दद्यात् ॥ ८ ॥

दैवनिमित्तशकुनोपश्रुतीनामानुलोम्येन कन्यां वरयेद्दद्याच्च ॥९॥

दैवनिमित्तशकुनोपश्रुतीनामिति। पूर्वजन्मकृतं शुभमशुभं वा कर्म दैवं, तस्याभिव्यञ्जकत्वान्नक्षत्रग्रहा अपि दैवमुच्यते, अस्यानुकूल्येन षट्काष्टकादियोगाभावात्, किमियमूढा कल्याणकरी नेति ? शास्त्रोक्तं निमित्तं; शुकुनपृच्छा च कार्या; निशीथे चोपश्रुतिर्ग्राह्या, तेषामानुकूल्येन वरयेद् दीयमानामीप्सेत, दद्याच्च कन्यापक्षः ॥ ९ ॥

न यदृच्छया केवलमानुष्येति घोटकमुखः ॥ १० ॥

केवलमानुषयेति। केवलं मानुषं कर्म यस्यां यदृच्छायामभिजन-

सामर्थ्यादिकमस्ति तया, नैवान्येच्छया वरयेद्याचचेत्यर्थः, घोटकमुख इति । परमतमभिमतमप्रतिषिद्धत्वात् ॥ १० ॥

वरणकाले कन्यां दृष्ट्वा निमित्तं पश्येदिति दर्शयन्नाह—

सुप्तां रुदतीं निष्क्रान्तां वरणे परिवर्जयेत् ॥ ११ ॥

सुप्तामिति । शयनमल्पायुषं सूचयति, रुदतीं दुःखभागिनीं, निष्क्रान्तां गृहान्निष्क्रामन्तीं गृहत्यागिनीं दृष्ट्वा, वरणकाले वरयिता वर्जयेत् ॥ ११ ॥

अप्रशस्तनामधेयां च गुप्तां दत्तां घोनां पृषतामृषभां विनतां विकटां विमुण्डां शुचिदूषितां सांकरिकीं राकां फलिनीं मित्रां स्वनुजां वर्षकरीं च वर्जयेत् ॥ १२ ॥

अप्रशस्तनामधेयामिति । भङ्गिका विभ्राटिकेति, गुप्तामप्रदर्शितामाशङ्क्यमानदोषां, दत्तामित्यनन्यपूर्वामित्यस्य, घोनादयश्च लक्षणसरूपन्नामित्यस्य प्रपञ्चोऽवश्यत्यागार्थः, तत्र घोनां कपिलां पतिघ्नीम्, पृषतां शुक्लबिन्दुयुतामर्थहानिकरीं पतिघ्नीं च, ऋषभां पुरुषसंस्थानां दुःशीलां, विनतां स्कन्धदेशावनतां दुःशीलां, विकटामसंहतोरूं दुःखभागिनीं, विमुण्डां बृहल्ललाटां पतिघ्नीं, शुचिदूषितां पितुर्मृतस्य दत्तोल्कां क्रियया न प्रशस्तां, सांकरिकीं पुरुषदूषितां, तस्यां पत्नीयोगो न धर्मः, राकां जातरजसं रजसा क्षतयोनित्वाद्, फलिनीं मूकां संव्यवहारबाह्याम्, मित्रां मित्रत्वेन गृहीतामगम्यां, स्वनुजामिति । त्रिवर्षात्प्रभृति न्यूनवयसमित्यस्य शेषः, सुष्ठु पश्चाज्जातामित्यर्थः, यथोक्तम्—

'चतुर्थादष्टमं यावत्कनिष्ठा वत्सरे वरात् ।
कन्यां परिणयेच्छस्तां नेतराऽतिवयाश्च या' ॥

वर्षकरीं स्विद्यत्करचरणां पतिघ्नीम् ॥ १२ ॥

नक्षत्राख्यां नदीनाम्नीं वृक्षनाम्नीं च गर्हिताम् ।
लकाररेफोपान्तां च वरणे परिवर्जयेत् ॥ १३ ॥

नक्षत्राख्यां श्रवणां विशाखामित्येवमादि, नदीनाम गङ्गायमुनेत्यादि, वृक्षनाम जम्बूः प्रियङ्गुरित्यादि, लकाररेफोपान्तां चेति । लकाररेफावन्ताक्षरसमीपे नाम्नि यस्याः, कमलू विमलू चारू तारू चेति ॥ १३ ॥

यस्यां मनश्चक्षुषोर्निबन्धनं तस्यामृद्धिर्नेतरामाद्रियेतेत्येके ॥ १४ ॥

मनश्चक्षुषोर्निबन्धनमिति केषाञ्चिन्मतं, यस्यामभिजनादिसद्भावे-

ऽपि मनःसङ्गश्चक्षुःप्रीतिश्चोभयमपरमस्ति, तस्यां पत्न्यां सत्यां सिद्धिस्त्रिवर्गप्राप्तिरित्ययमुत्तमः पक्षः, नेतरामिति। यस्यां नास्ति न तामाद्रियेतेत्यधमः पक्षः, केवलमभिजनाद्यपेक्षां वरयेत्, पूर्वामादरेणेति विशेषः, दोषेषु तु मनश्चक्षुर्निबन्धनेऽप्युपेक्षा, तत्रापि दोषाणां गौरवलाघवं परीक्ष्यमिति ॥ १४ ॥

कन्यापक्षे वरणनिमित्तं संविधानमाह—

तस्मात्प्रदानसमये कन्यामुदारवेषां स्थापयेयुरापराह्णिकञ्च ॥१५॥

तस्मादिति। यतः सुप्ताद्यनिमित्तात्कन्या न व्रियते तस्मात्, प्रदानसमय इति। उपलक्षणार्थत्वाद्वरणकालेऽपि प्रसाधितां स्थापयेयुः कन्योपक्षीयाः, आपराह्णिकमिति। प्रदानात्प्रागपराह्णभवं विधिं स्थापयेयुरित्येव ॥ १५ ॥

तमाह—

नित्यं प्रसाधितायाः सखीभिः सह क्रीडा यज्ञविवाहादिषु जनसन्द्रावेषु प्रायत्निकं दर्शनं तथोत्सवेषु च पण्यसधर्मत्वात् ॥१६॥

नित्यमिति। सखीभिः सह क्रीडा रथ्याचत्वरादिषु, यज्ञविवाहादिषु चान्यदीयेषु, जनसंद्रावेष्विति। जनाः संभूय द्रवन्ति येषु, प्रायत्निकमिति। प्रयत्नसाध्यम्, परिचाराधिष्ठितत्वात्कौतुकेन लोको यत्नेन पश्यति, तथोत्सवेषु च वसन्तकादिषु जनसंद्रावेषु प्रायत्निकम्, पण्यसधर्मत्वादिति। विक्रेतव्यतुल्यं कौतुकेन हि लोको यत्नेन पश्यति, न दृश्यमाना पण्यवद् व्रियेत ॥ १६ ॥

वरयितॄणां च लक्षणमुपचारं चाह—

वरणार्थमुपगतांश्च भद्रदर्शनान्प्रदक्षिणवाचश्च तत्सम्बन्धिसङ्गतान्पुरुषान्मङ्गलैः प्रतिगृह्णीयुः ॥ १७ ॥

वरणार्थमिति। अहीनाङ्गत्वान्मङ्गलाचारयुक्तत्वात्, प्रदक्षिणवाच इति। अनुकूलवाचः, तत्सम्बन्धिसंगतानिति। यत्प्रागुक्तं मित्राणि सम्बन्धिनश्चेति तैः सहेत्यर्थः, मङ्गलैर्दध्यक्षतादिभिः प्रतिगृह्णीयुः कन्यापक्षीयाः ॥ १७ ॥

कन्यां चैषामलंकृतामन्यापदेशेन दर्शयेयुः ॥ १८ ॥

अन्यापदेशेनेति। अन्यकार्यमपदिश्य न तूपेत्य दर्शयेद्, दानस्यानिश्चितत्वात् ॥ १८ ॥

दैवं परीक्षणं चावाधिं स्थापयेयुरापदाननिश्चयात् ॥ १९ ॥

दैवं परीक्षणं चेति। यावत्प्रदानं न निश्चीयते तावद् दैवं प्रजापत्यधीनमिति, परीक्षणं च मित्त्रस्वजनैः सह निरूपयाम इत्यवधिं स्थापयेयुः,

अन्यस्त्वाह—

'गोष्ठसीताह्रदवृक्षश्मशानेरिणदेवतः।
चतुष्पथाच्च मृत्पिण्डैः कुर्याद् दैवपरीक्षणम्' ॥ १९ ॥

स्नानादिषु नियुज्यमाना वरयितारः सर्वं भविष्यतीत्युक्त्वा न तदहरेवाभ्युपगच्छेयुः ॥ २० ॥

स्नानादिषु नियुज्यमानाः कन्यापक्षीयाः, वरयितार इति। वृण्वन्ति ये, सर्वमिति। स्नानादिकम्, भविष्यति प्रजापतावनुकूले, न तदहरेवेति। तं दिवसं स्नानादिभिर्नाङ्गीकुर्युः ॥ २० ॥

देशप्रवृत्तिसात्म्याद्वा ब्राह्मप्राजापत्यार्षदैवानामन्यतमेन विवाहेन शास्त्रतः परिणयेदिति वरणविधानम् ॥ २१ ॥

देशप्रवृत्तिसात्म्याद्वेति। यस्मिन्देशे या प्रवृत्तिस्तदानुकूल्यादित्यर्थः, ब्राह्मप्राजापत्यार्षदैवानामिति। एषां धर्म्यत्वाद्, अन्यतमेन,

तथा चोक्तम्—

'सकृदाहूय कन्यां तु ब्राह्मे दद्यात्स्वलंकृताम्।
सह धर्मं चरेत्येवं प्राजापत्योऽभिधीयते ॥
वसुगोमिथुनं दत्त्वा विवाहस्त्वार्ष उच्यते।
अन्तर्वेद्यां तु दैवः स्यादृत्विजे कर्म कुर्वते' ॥

शास्त्रत इति। गृह्योक्तेन विधिना ॥ २१ ॥

वरणसंविधानं त्रयोविंशं प्रकरणम् ॥

अभिजनादिभिः शीलितायामप्यनिश्चिते सम्बन्धे वरणाभावात्सम्बन्धनिश्चय उच्यते—

भवन्ति चात्र श्लोकाः—

समस्याद्याः सहक्रीडा विवाहाः सङ्गतानि च।
तादृशैरेव कार्याणि नोत्तमैर्नापि वाऽधमैः ॥ २२ ॥

समस्याद्या इति। सम्भूय क्रीडामादिं कृत्वा क्रीडाः, सङ्गतानि सख्यानि, तादृशैरिति। समानैः तुल्यजात्यभिजनद्रव्यायतित्वात् ॥ २२ ॥

तेन समानाधमोत्तमसम्बन्धिभेदात्सम्बन्धस्त्रिविधः, तस्य कार्यद्वा·

रेण लक्षणमाह—

कन्यां गृहीत्वा वर्तेत प्रेष्यवद्यत्र नायकः।
तं विद्यादुच्चसम्बन्धं परित्यक्तं मनस्विभिः॥ २३॥

कन्यामिति। गृहीत्वा=परिणीय, प्रेष्यवद्=भृत्यवद्, द्रव्यायत्यभावाद्, उच्चसम्बन्धमिति। अधिकेन सम्बन्धिना, परित्यक्तं मनस्विभिः, ये तु नैवं ते कुर्वन्त्येव॥ २३॥

स्वामिवद्विचरेद्यत्र बान्धवैः स्वैः पुरस्कृतः।
अश्लाघ्यो हीनसम्बन्धः सोऽपि सद्भिर्विनिन्द्यते॥ २४॥

स्वामिवदिति। कन्यां गृहीत्वा प्रभुवद्विचरेद्, द्रव्यायतिमत्त्वाद्, बान्धवैः श्वशुरश्यालकादिभिः प्रेष्यभूतैः परिवृतः, अश्लाघ्य इति। अश्लाघनीयस्तदनुरूपलोकाचाराभावात्, सद्भिरिति। लोकव्यवहारज्ञैः॥२४॥

परस्परसुखास्वादा क्रीडा यत्र प्रयुज्यते।
विशेषयन्ती चान्योन्यं सम्बन्धः स विधीयते॥ २५॥

परस्परसुखास्वादेति। वरपक्षस्य कन्यापक्षस्य च सुखानुभवो यस्यां परस्परप्रयुक्तायां क्रीडायां, विशेषयन्ती चान्योन्यं प्रयुज्यते यस्मिन्सः; सम्बन्धो विधीयत इति। सद्भिः क्रियत इत्यर्थः, पूर्वौ तु न विधीयेते इत्यर्थोक्तम्॥ २५॥

तयोरपि कः श्रेयानित्याह—

कृत्वाऽपि चोच्चसम्बन्धं पश्चाज्ज्ञातिषु संनमेत्।
न त्वेव हीनसम्बन्धं कुर्यात्सद्भिर्विनिन्दितम्॥ २६॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे
वरणविधानं सम्बन्धनिश्चयश्च प्रथमोऽध्यायः।

कृत्वाऽपीति। ज्ञातिषु संनमेदिति। ज्ञातिगृहे स्वयं यायाद्, न श्वशुरगृह इत्यर्थः, न त्वेवेत्येकान्तेनैव प्रतिषेधः॥ २६॥

सम्बन्धनिश्चयश्चतुर्विंशं प्रकरणम्॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां कन्यासम्प्रयुक्तके तृतीयेऽधिकरणे वरणविधानं सम्बन्धनिश्चयश्च प्रथमोऽध्यायः।

## द्वितीयोऽध्यायः ।

एवमधिगताऽप्यविश्वासिता न संप्रयोगार्हेति; कन्याविस्रम्भणमुच्यते, तत्र विवाहानन्तरं मङ्गलाचारमाह—

**संगतयोस्त्रिरात्रमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जमाहारस्तथा सप्ताहं सतूर्यमङ्गलस्नानं प्रसाधनं सहभोजनं च प्रेक्षा संबन्धिनां च पूजनमिति सार्ववर्णिकम् ॥ १ ॥**

संगतयोरिति । परिणयात्प्राप्तसमागमयोः, त्रिरात्रमिति । रात्रिग्रहणं रात्रिकर्मप्रदर्शनार्थम्, अधःशय्या भूमौ शयनं, न खट्वायाम्, ब्रह्मचर्यं यावच्चतुर्थिकाहोमो न क्रियते दिवामैथुनस्य प्रतिषिद्धत्वात्, क्षारः फाणितगुडादिः, लवणं सैन्धवादि, तद्वर्जं भोजनं मधुक्षीरघृतसंस्कृतप्रायं, तच्च नक्तं स्याद्, रात्रिकर्मवर्गे पठितत्वात्, तथा सप्ताहमिति । यथा त्र्यहं, तदूर्ध्वमपराणि सप्ताहानीत्यर्थः, अहर्ग्रहणं दिनकर्मप्रदर्शनार्थं, सवाद्यं समङ्गलं सगीतं स्नानं च, प्रसाधनं मण्डनं, सहभोजनं चेति । एकस्मिन्स्थाने, पूर्वत्रापि सहभोजनं किं तु व्रतस्थत्वात्क्षारलवणवर्जं नक्तं च तदिति, प्रेक्षा संबन्धिनां नटादीनां च दर्शनम्, पूजनं च गन्धमाल्यादिभिः, सार्ववर्णिकमिति । चतुर्ष्वपि ब्राह्मणादिवर्णेषु भवमविरुद्धत्वाद्, एतच्च लोके दशरात्रिकमित्युच्यते, तथा चोक्तं—

> 'कन्यावेश्मनि निर्वर्त्य राजवद्दशरात्रिकम् ।
> सभार्यः स्वगृहं यायात्स्थितेर्वा कुलदेशयोः' इति ॥ १ ॥

विस्रम्भणोपायमाह—

**तस्मिन्नेतां निशि विजने मृदुभिरुपचारैरुपक्रमेत ॥ ३ ॥**

तस्मिन्निति । दशरात्रिके, कन्या द्विविधा, संसर्गयोग्या; इतरा च, पूर्वस्या विस्रम्भणं रतापेक्षया, द्वितीयाया भयलज्जाऽपगमापेक्षया, निशि मन्दसाध्वसत्वाद्, विजने कौतुकगृहे लज्जाऽपगमाद्, मृदुभिरुपचारैरिति । अनुद्वेगकरैरालापस्पर्शनादिभिः ॥ ३ ॥

किमर्थमुपक्रम्यत इत्याह—

**त्रिरात्रमवचनं हि स्तम्भमिव नायकं पश्यन्ती कन्या निर्विद्येत परिभवेच्च तृतीयामिव प्रकृतिमिति बाभ्रवीयाः ॥ ४ ॥**

त्रिरात्रमिति । स्तम्भमिव मूकं निश्चेष्टं तत्र निर्वचनं पश्यन्ती निर्विद्येत, मूकेन ग्राम्येण चाहमूढेति खिद्येत्, परिभवेच्चेति । निश्चेष्टत्वा-

नपुंसकमिति, तिरस्कारबुद्धिं तत्र कुर्यात् ॥ ४ ॥
अस्मिन्पक्षे सर्वस्याविशङ्कया करणे प्राप्ते प्रतिषेधमाह—

उपक्रमेत विस्रम्भयेच्च, न तु ब्रह्मचर्यमतिवर्तेतेति वात्स्यायनः॥५॥

उपक्रमेत यथा न निर्विद्येत, विस्रम्भयेच्च यथा सम्प्रयोगेऽनुकूला भवति न तु ब्रह्मचर्यमतिवर्तेत; अनुकूलायामप्यकाले व्रतखण्डनस्याधर्मत्वात् ॥ ५ ॥

उपक्रममाणश्च न प्रसह्य किञ्चिदाचरेत् ॥ ६ ॥

उपक्रममाणश्चेत्यादिना मृदुभिरुपचारैरित्यस्य प्रपञ्चः, न प्रसह्य किञ्चिदिति । स्पर्शनमपि नाभिभूय कुर्यादित्यर्थः ॥ ६ ॥

किमर्थमित्याह—

कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः, तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सम्प्रयोगद्वेषिण्यो भवन्ति तस्मात्साम्नैवोपचरेत् ॥ ६ ॥

कुसुमसधर्माण इति । कुसुमतुल्याः, योषित इति । सर्वा एव, विशेषतः कन्याः, सुकुमारोपक्रमा इति । मृदुरुपक्रमः स्पर्शनादिलक्षणो यासु, अनधिगतविश्वासैरिति । लब्धविश्वासैस्तु प्रसह्योपक्रमो न दोषाय, सम्प्रयोगद्वेषिण्यो जातानिच्छकत्वात्, तस्मात्साम्नेति । मृदुना, सर्वोपचाराणामयं प्राथमिको विधिः ॥ ६ ॥

तत्रालब्धप्रसरस्योपचारयोगासम्भवात्तदुपायमाह—

युक्त्याऽपि तु यतः प्रसरमुपलभेत तेनैवानुप्रविशेत् ॥ ७ ॥

युक्त्येति । कया चिदर्थयुक्त्या तत्कालभाविन्या, यतः प्रसरमिति । तत्सख्या सह सम्भाषणे क्रीडने वाऽऽत्मनोऽवकाशमुपलभेत, तेनव सम्भाषणेन क्रीडनेन वा द्वारेण तामनुप्रविशेत् ॥ ७ ॥

ततो लब्धप्रसरस्य प्रथममुपगूहनेनोपक्रम इत्याह—

तत्प्रियेणालिङ्गनेनाचरितेन नातिकालत्वात् ॥ ८ ॥

तत्प्रियेणेति । कथं तत्प्रियमित्याह—नातिकालत्वादिति । यद्दत्वाऽनन्तरमेवापनीयते तस्यानुद्वेजनकरत्वात् ॥ ८ ॥

पूर्वकायेन चोपक्रमेत विषह्यत्वात् ॥ ९ ॥

पूर्वकायेन चेति । तस्या यो नाभेरूर्ध्वभागस्तेन प्रथममुपक्रमेत, विषह्यत्वादिति । तेनोपक्रमः शक्यते सोढुं नाधरकायेनोद्वेजनकरत्वात्॥९॥

दीपालोके विगाढयौवनायाः पूर्वसंस्तुतायाः, बालाया अपू-

वायाश्चान्धकारे ॥ १० ॥

दीपालोके कौतुकगृहवर्तिनि, विगाढयौवनापूर्वसंस्तुतयोर्भयलज्जाऽभावाद्, बालाऽपूर्वयोरन्धकारे लज्जाऽऽधिक्याद्, विगाढयौवनाऽप्यन्यशुभलक्षणयोगादूढा लघुदोषत्वात् ॥ १० ॥

अङ्गीकृतपरिष्वङ्गायाश्च वदनेन ताम्बूलदानं तदप्रतिपद्यमानां च सान्त्वनैर्वाक्यैः शपथैः प्रतियाचितैः पादपतनैश्च ग्राहयेद् व्रीडायुक्ताऽपि योषिदत्यन्तक्रुद्धाऽपि न पादपतनमतिवर्तत इति सार्वत्रिकम् ॥ ११ ॥

वदनेन ताम्बूलदानमिति । स्वेन मुखेन, चुम्बनक्षान्तेरभिप्रेतत्वात्, तदप्रतिपद्यमानामिति । ताम्बूलमगृह्णतीं, सान्त्वनवाक्यैः प्रियाभिधायिभिः, शपथैरिति । मच्छरीरेण शप्ताऽसीति, प्रतियाचितैस्त्वमेतन्मे देहीति, पादपतनेन चान्त्यावस्थायां ग्राहयेद्, यतः स्त्रिया व्रीडात्याजने क्रोधापनयने च न पादपतनादूर्ध्वमुपायोऽस्ति, सार्वत्रिकमिति । न कन्यायामेवान्यस्यामपि भवति ॥ ११ ॥

तद्दानप्रसङ्गेन मृदु विशदमकाहलमस्याश्चुम्बनम् ॥ १२ ॥ तत्र सिद्धामालापयेत् ॥ १३ ॥ तच्छ्रवणार्थं यत्किंचिदल्पाक्षराभिधेयमजानन्निव पृच्छेत् ॥१४॥ तत्र निष्प्रतिपत्तिमनुद्वेजयन्सान्त्वनायुक्तं बहुश एव पृच्छेत् ॥१५॥ तत्राप्यवदन्तीं निर्बध्नीयात् ॥१६॥

मृद्विति । यत्र ग्रहणं नास्ति, तस्योद्वेजकत्वाद्, विशदं स्पर्शकरम्, अकाहलमशब्दं सशब्देन लज्जिता स्यात्, तत्र सिद्धां, चुम्बनेनानुकूलामालापयेद् यथा ब्रवीति, अत्रोपायमाह—तच्छ्रवणार्थमिति । आलापश्रवणार्थं, यत्किंचिदिति । दृष्टं श्रुतं वा तदानीम्, अल्पाक्षराभिधेयं सुकथनीयत्वाद्, अजानन्निवेति । अन्यथा विहावयतीति जानीयाद्, निष्प्रतिपत्तिं तूष्णीं स्थितां, सान्त्वनायुक्तं चाटुयुक्तं, निर्बध्नीयाद् अनेनैव क्रमेण ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

निर्बन्धे विरज्यतीति चेदाह—

सर्वा एव हि कन्याः पुरुषेण प्रयुज्यमानं वचनं विषहन्ते, न तु लघुमिश्रामपि वाचं वदन्तीति घोटकमुखः ॥ १७ ॥

सर्वा एवेति । प्रयुज्यमानमिति । पुनः पुनरुच्यमानं विषहन्ते, आविर्भवन्मन्मथत्वाद्, लघुमिश्रामपीति । कतिपयाक्षरामन्यार्थश्लिष्टामपि न वदन्ति, लज्जापरतन्त्रत्वात् ॥ १७ ॥

अत्र कन्याया आलापयोजनोपायमाह—

निर्बध्यमाना तु शिरः कम्पेन प्रतिवचनानि योजयेत्, कलहे तु न शिरः कम्पयेत् ॥ १८ ॥

निर्बध्यमानेति। शिरः कम्पेनेति। किमिदं जानासीति? पृष्टा, जानामीत्यूर्ध्वाधः शिरश्चालनेन, न जानामीति तिर्यक् शिरश्चालनेन योजयेद्, धाष्ट्र्यपरिहारार्थं, कलहे त्विति। अस्यामवदन्त्यां यदि कदाचिदर्थयुक्त्या प्रेरणप्रतिप्रेरणादिलक्षणो वाक्कलहो जातस्तस्मिन् किं कुपिताऽसि नेति पृष्टा, न शिरः कम्पयेत् कोपख्यापनार्थम् ॥ १८ ॥

अकलहे तु स्नेहजिज्ञासायामालापयोजनमाह—

इच्छसि मां नेच्छसि वा, किं तेऽहं रुचितो न रुचितो वेति पृष्टा चिरं स्थित्वा निर्बध्यमाना तदानुकूल्येन शिरः कम्पयेत्। प्रपञ्च्यमाना तु विवदेत ॥ १९ ॥

इच्छसि मां नेच्छसि वेति? वार्तमानिकः प्रश्नः, किं तव रुचितोऽहमरुचितो वेति? परिणयात्पौर्वकालिकः प्रश्नः, चिरं स्थित्वेति। संकटःप्रश्नः—यदि पूर्वपक्षमाश्रयेयं तदा धाष्ट्र्यं लाघवं च, इतरं चेत्तदा नैष्ठुर्यमिति निर्बध्यमाना नायकेन संकटप्रश्ने किमनुष्ठास्यतीति तस्या निर्बध्यमानाया उभयपक्षाश्रयणमेव युक्तमित्याह—तदानुकूल्येनेति। पूर्वपक्षोत्तरपक्षानुकूल्येनोभयथाऽपि शिरः कम्पयेदित्यर्थः, प्रपञ्च्यमाना त्विति। अनिश्चितार्थप्रकाशनान्नायकेन प्रतार्यमाणा विवदेत, कोपख्यापनार्थं विरुद्धं वदेद्, न मे रुचितोऽसि नेच्छामि त्वामिति ॥१९॥

यदि पूर्वपरिचिता तदाऽऽलापयोजने विधिमाह—

संस्तुता चेत्सखीमनुकूलामुभयतोऽपि विस्रब्धां तामन्तरा कृत्वा कथां योजयेत्॥२०॥तस्मिन्नधोमुखी विहसेत्॥२१॥तां चातिवादिनीमधिक्षिपेद्विवदेत च॥२२॥सा तु परिहासार्थमिदमनयोक्तमिति चानुक्तमपि ब्रूयात् ॥ २३ ॥ तत्र तामपनुद्य प्रतिवचनार्थमभ्यर्थ्यमानां तूष्णीमासीत ॥ २४ ॥ निर्बध्यमाना तु नाहमेवं ब्रवीमीत्यव्यक्ताक्षरमनवसितार्थं वचनं ब्रूयात् ॥२५॥ नायकं च विहसन्ती कदा चित्कटाक्षैः प्रेक्षेतेत्यालापयोजनम् ॥ २६ ॥

संस्तुता चेदिति। सखीमिति। सखीनां मध्ये याऽनुकूला विस्रब्धा, उभयत इति। द्वयोरपि विस्रब्धा विदितपूर्ववृत्तान्तत्वात्, तामन्तरा

कृत्वा व्यवधाय कथायोजनं, नायकस्य तु पूर्ववृत्तां कथां योजयेत्, किमहमस्या रुचितो न वेत्यर्थः, तस्मिन्निति। यदैव तस्यां क्रीडायां परिचयोऽभूत्तत एव प्रभृति रुचितोऽसीति, सख्या कथने क्रियमाणेऽधोमुखी लज्जया विहसेदेवमेतदिति ख्यापनार्थं नायिका, तां चेति। सखीम्, अतिवादिनीमिति। अनुरागातिशयं कथयन्तीमधिक्षिपेदभिनुदेद्, विवदेत च, तया सह कलहायेत, सा त्विति। सखी, अनुक्तमपि नायिकया, ब्रूयाद् अद्यैव यदि पाणिं गृह्णासि साधु भवतीति, तत्रेति। अनुक्तकथने, अनवसितार्थमक्षराणामस्पष्टत्वाद् ब्रूयाद् मुग्धत्वख्यापनार्थं, नायकं च विहसन्ती कदा चिदन्तराऽन्तरा परिचयवशात्कटाक्षेणोन्मुखीव प्रेक्षेतानुरागातिशयख्यापनार्थम् ॥ २० ॥ २१ ॥ २२ ॥ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

एवं जातपरिचया चानिर्वदन्ती तत्समीपे याचितं ताम्बूलंविलेपनं स्रजं निदध्यादुत्तरीये वाऽस्य निबध्नीयात् ॥ २७॥ तथा युक्तामाच्छुरितकेन स्तनमुकुलयोरुपरि स्पृशेत् ॥२८॥ वार्यमाणश्च त्वमपि मां परिष्वजस्व ततो नैवमाचरिष्यामीति स्थित्या परिष्वञ्जयेत्, स्वं च हस्तमानाभिदेशात्प्रसार्य प्रसार्य निवर्तयेत् क्रमेण चैनामुत्सङ्गमारोप्याधिकमधिकमुपक्रमेताप्रतिपद्यमानां च भीषयेत् २९

एवमालिङ्गनताम्बूलचुम्बनालापैर्जातपरिचयाऽनिर्वदन्ती, गृहाणेति याचितं नायकेन निदध्यात्स्थापयेत्, तथा युक्तामिति। निदधतीमुत्तरीये वा निबध्नतीम्, आच्छुरितेन पूर्वोक्तेन, स्तनमुकुलयोरिति। मुकुलग्रहणमतिस्पर्शनिवृत्त्यर्थं बालत्वाद्, वार्यमाणश्चेति। स्पर्शनस्थित्या व्यवस्थया परिष्वञ्जयेत्, स्थितिमाह—त्वमपीति। आनाभिप्रदेशादिति। नाभिप्रदेशं यावत्, प्रसार्य प्रसार्य निवर्तयेदिति। वीप्साऽत्र क्षान्त्यर्थम्, प्रसार्य प्रसार्येत्यर्थः, क्रमेणेति। न सहसोत्सङ्गमारोपयेद्, अधिकमधिकमिति। नखदशनपदैरप्रतिपद्यमानामधिकोपक्रमं भीषयेत् ॥ २७ ॥ २८ ॥ २९ ॥

कथमित्याह—

अहं खलु तव दन्तपदान्यधरे करिष्यामि स्तनपृष्ठे च नखपदम् आत्मनश्च स्वयं कृत्वा त्वया कृतमिति ते सखीजनस्य पुरः कथयिष्यामि सा त्वं किमत्र वक्ष्यसीति बालविभीषिकाभिर्बालप्रत्यायनैश्च शनैरेनां प्रतारयेत् ॥ ३० ॥ द्वितीयस्यां तृतीयस्यां च

रात्रौ किञ्चिदधिकं विस्रम्भितां हस्तेन योजयेत् ॥ ३१ ॥

अहमिति । आत्मनश्च स्वयं कृत्वा दन्तपदं नखपदं च, किमसौ प्रतिपत्स्यते सखीजनो नवोढादुश्चेष्टितादन्यत्रेत्येतद्बालविभीषिका, अस्मिन्वचनानुष्ठाने तु नाहमेवं करिष्यामीति, बालप्रत्यायनसमर्थोक्तं, शनैरेनां प्रतारयेत्, कार्याभिमुखीं कुर्यादिति, एतत्प्रथमायां रात्रौ विस्रम्भणं, तस्मात्किञ्चिदधिकं द्वितीयस्यां रात्रौ, तृतीयस्यां च हस्तेन योजयेदिति। कक्षोरुजघनेषु हस्तस्पर्शसंबन्धिनीं कुर्यात् ॥ ३० ॥ ३१ ॥

हस्तेन योजनोपायमाह—

सर्वाङ्गिकं चुम्बनमुपक्रमेत ॥ ३२ ॥

सर्वाङ्गिकमिति । ललाटनयनादिषु विचुम्ब्यमाना पर्याकुला सर्वमभ्युपगच्छति ॥ ३२ ॥

हस्तयोजनविधिमाह—

ऊर्वोश्चोपरि विन्यस्तहस्तः संवाहनक्रियायां सिद्धायां क्रमेणोरुमूलमपि संवाहयेत् ॥ ३३ ॥ तत्र निवारिते संवाहने को दोष इत्याकुलयेदेनाम् ॥ ३४ ॥ तच्च स्थिरीकुर्यात् तत्र सिद्धायां गुह्यदेशाभिमर्शनं रशनावियोजनं नीवीविस्रंसनं वसनपरिवर्तनमूरुमूलसंवाहनं चैते चास्यान्यापदेशाः ॥ ३५ ॥ युक्तयन्त्रां रञ्जयेद् न त्वकाले व्रतखण्डनमनुशिष्याच्च ॥ ३६ ॥ आत्मानुरागं दर्शयेद्, मनोरथांश्च पौर्वकालिकाननुवर्णयेदायत्यां च तदानुकूल्येन प्रवृत्तिं प्रतिजानीयात् सपत्नीभ्यश्च साध्वसमवच्छिन्द्यात् ॥ ३७ ॥ कालेन च क्रमेण विमुक्तकन्याभावामनुद्वेजयन्नुपक्रमेतेति कन्याविस्रम्भणम् ॥ ३८ ॥

ऊर्वोरिति । तत्रायं क्रमः—प्रथमं पूर्वकायस्य संवाहनक्रिया, तस्यां सिद्धायामूरुमूले, आकुलयेत् चुम्बनाच्छुरितकैः, तच्चेति । यत्पूर्वाभ्युपगतं संवाहनं तच्च स्थिरीकुर्यात् क्षान्त्यर्थं, तत्रेति । ऊरुमूलसंवाहने सिद्धायां गुह्यदेशाभिमर्शनं, संवाहनव्यपदेशेन रसनावियोजनाद्यपि कुर्यात्, पुनरूरुमूले संवाहनग्रहणमपरित्यागार्थं, गुह्यस्पर्शहेतुत्वाद्, एत इति । गुह्यस्पर्शनादयो व्यापाराः, अस्येति : नायकस्य, अन्यापदेशा इति । त्रिरात्रादर्वागन्यमपदिश्य कर्तव्या न तु व्रतखण्डनमधिकृत्येत्यर्थः, युक्तयन्त्रां च चातुर्थिकहोमादूर्ध्वं रञ्जयेदिति । रञ्जन-

मनुद्वेज्य सुखोत्पादनम्, अनुशिष्याद्, चातुःषष्टिकान्योगान् शिक्षयेद्, आत्मानुरागं च दर्शयेद् इङ्गिताकाराभ्याम्, मनोरथान् पौर्वकालीनाननुवर्णयेद्, ये ये तस्यामधरपानादयश्चिन्तिताः, आयत्यामिति । अनागतकाले तदानुकूल्येन प्रवृत्तिं प्रतिजानीयाद्, 'यदाह भवती तन्मया विधातव्यमिति, सपत्नीभ्यः साध्वसमवच्छिन्द्याद्, यद्यधिविन्ना स्यात्, कालेन च गच्छता मुक्तकन्याभावां युवतीमनुद्वेजयन्नुपक्रमेत, तदाऽप्ययमेव क्रमः स स्फुटः कर्तव्यः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥३८॥

उक्तमुपसंहरन्नाह—

भवन्ति चात्र श्लोकाः—

एवं चित्तानुगो बालामुपायेन प्रसाधयेत् ।
तथाऽस्य साऽनुरक्ता च सुविस्रब्धा प्रजायते ॥ ३९ ॥

एवमिति । चित्तानुग इति । चित्ताभिप्रायं बुद्ध्वा, उपायेनेति । युक्त्या, प्रसाधयेद्विश्वासयेत्, किमेवं स्यादित्याह—तथेति । सुविस्रब्धा सती, अनुरक्ता प्रजायत इति योज्यम् ॥ ३९ ॥

तत्रापि विशेषमाह—

नात्यन्तमानुलोम्येन न चातिप्रातिलोम्यतः ।
सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् ॥ ४० ॥

नात्यन्तमिति । सिद्धिं सुखं, तत्र तदानुलोम्येन प्रवृत्तौ स एवोत्तरकालमपि मार्गः स्यात्, ततश्चास्य स्वेच्छाविघातात्तद्विषया सिद्धिः, प्रातिलोम्येनातिप्रवृत्तौ तु तदानीमेव विरक्तत्वात्कथं तद्विषया सिद्धिः ? तस्मान्मध्येनोपायेन साधयेत् ॥ ४० ॥

विस्रम्भणं किंफलमिति ? आह—

आत्मनः प्रीतिजननं योषितां मानवर्धनम् ।
कन्याविस्रम्भणं वेत्ति यः स तासां प्रियो भवेत् ॥ ४१ ॥

आत्मन इति । वर्धनमिति । उपचारस्य तथाविधत्वात्, कन्यानामिति वक्तव्ये, योषिद्ग्रहणं प्रथमसमागमे सर्वविषयमिदमिति दर्शनार्थं, तत्परिज्ञानफलमाह—प्रियो भवेदिति ॥ ४१ ॥

अतिलज्जाऽन्वितेत्येवं यस्तु कन्यामुपेक्षते ।
सोऽनभिप्रायवेदीति पशुवत्परिभूयते ॥ ४२ ॥
सहसा वाऽप्युपक्रान्ता कन्याचित्तमविन्दता ।
भयं वित्रासमुद्वेगं सद्यो द्वेषं च गच्छति ॥ ४३ ॥

सा प्रीतियोगमप्राप्ता तेनोद्वेगेन दूषिता ।
पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥ ४४ ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासम्प्रयुक्तके तृतीयेऽधिकरणे कन्याविस्रम्भणं द्वितीयोऽध्यायः ।

अतिलज्जाऽन्वितेति । अस्मात्कारणात्कन्या नोपेक्षणीया, अनेन त्रिरात्रं निर्वचनं पश्यन्ती निर्विद्येत, परिभवेच्चेत्यस्य प्रपञ्चः, सहसेति। अनेनापि न प्रसह्य किं चिदाचरेदित्यस्य प्रपञ्चः, उपक्रान्तेति। उपसर्पिता, भयं यतो दर्शनपथेऽपि न तिष्ठति, वित्रासं तत्स्मरणाच्छरीरविधूननम्, उद्वेगं भोजनादिभ्यो व्यावर्तनम्, प्रीतियोगमप्राप्ता, लज्जाऽन्वितेत्युपेक्षितत्वाद्, उद्वेगेन दूषिता, सहसोपक्रान्तत्वात्, पुरुषद्वेषिणी सर्वान्पुरुषान्द्वेष्टि, सर्वोऽप्येवंविध इति द्विष्टा प्रीतियोगमप्राप्तत्वात्, ततश्च तं मुक्त्वाऽन्यं पुरुषं गच्छति ।

इति कन्याविस्रम्भणं पञ्चविंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधरराचितायां जयमङ्गलाऽऽख्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे कन्याविस्रम्भणं द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

वरणसंविधानपूर्वकमधिगतायां विस्रम्भणमुक्तं, या तु व्रियमाणा न लभ्यते, तत्र गान्धर्वादयश्चत्वारो विवाहाः, तत्रालाभकारणान्येव तावदाह—

धनहीनस्तु गुणयुक्तोऽपि, मध्यस्थगुणो हीनापदेशो वा, सधनो वा प्रातिवेश्यो, मातापिताभ्रातृषु च परतन्त्रो, बालवृत्तिरुचितप्रवेशो वा कन्यामलभ्यत्वान्न वरयेत् ॥ १ ॥ बाल्यात्प्रभृति चैनां स्वयमेवानुरञ्जयेत् ॥ २ ॥ तथायुक्तश्च मातुलकुलानुवर्ती दक्षिणापथे बाल एव मात्रा च वियुक्तः परिभूतकल्पो धनोत्कर्षादलभ्यां मातुलदुहितरमन्यस्मै वा पूर्वदत्तां साधयेत् ॥ ३ ॥ अन्यामपि बाह्यां स्पृहयेद् बालायामेवं सति धर्माधिगमे संवननं श्लाघ्यमिति घोटकमुखः ॥ ४ ॥

धनहीनस्त्वभिजनादिगुणयुक्तोऽपि दरिद्रः कन्यां न लभते, मध्यस्थगुणो हीनापदेशो वेति । मध्यस्था रूपशीलादयो गुणाः, अभिजनः प्रधानं तदभावाद्धीनव्यपदेशः, सधनो वा प्रातिवेश्य इति । स्वगृहसमीपवासी सीमासम्बन्धेन कलहादिजनकत्त्वाद् धनगर्वान्न लभते, मातापित्रोर्भ्रातृषु च सत्सु, परतन्त्रोऽन्यप्रधानः सधनोऽपि न लभते, बालवृत्तरुचितप्रवेशो वेति । यो लाडीकवद् दृश्यते सोऽनिषिद्धगृहप्रवेशोऽपि परिभवान्न लभते, यदि न वरयेत्कथमधिगच्छेदित्याह–बाल्यादिति । अनुरञ्जयेद्, अनुरक्ता हि स्वयमेव गान्धर्वेण विवाहेन पाणिं ग्राहयति, यतः 'स्वयं संयोगे गान्धर्वः' इति, तस्मादनुरञ्जनार्थं बालायामुपक्रमादनेकप्रकारा उच्यन्ते, यत्र च देशे प्रायेणैवंविधा वृत्तिस्तामधिकृत्याह–तथायुक्तश्चेति । धनहीनत्वादियुक्तः, दक्षिणापथ इति । तत्र हि मातुलदुहिता परिणीयते, वियुक्तः पित्रोर्मृतत्वात्परिभूतकल्पो मातुलकुलगतः, अन्यस्मै वा पूर्वदत्तामदत्तां वा, अन्यामपि बाह्यामिति । या मातुलदुहिता न भवति पित्रोः सम्बन्धबाह्या तामपि स्पृहयेत्, तत्र कर्तुः क्रियया<sup></sup>ऽऽप्तुमिष्टतमत्वेन विवक्षितत्वात्कर्मत्वम्, अनेनान्यस्मिन्नपि देशे विधिरयमिति दर्शयति, बाल्यात्प्रभृति सति धर्माधिगमे बालायां धर्मार्थमधिगमे सन्दर्शनालापलक्षणे सति संवननं वशीकरणमनुरञ्जनलक्षणं श्लाघ्यम्, अन्यथा दर्शनात्कथं संवननं स्याद्, धर्म्यश्च गान्धर्वो विवाहः, यथोक्तं—'तत्र पूर्वे धर्म्याश्चत्वारः, षडित्येके' ॥ २ ॥ ३ ॥ ४ ॥

उपक्रान्तो वरो द्विविधो, बालो युवा च, तत्र पूर्वमधिकृत्यानुरञ्जनमाह—

तया सह पुष्पावचयं ग्रथनं गृहकं दुहितृकाक्रीडायोजनं भक्तपाककरणमिति कुर्वीत परिचयस्य वयसश्चानुरूप्यात् ॥ ५ ॥

तयेति । बालया, अवचयमुच्चपादपाद्, ग्रथनं पुष्पाणां, गृहकं काष्ठमयं मृण्मयं वा स्वल्पं, दुहितृका सूत्रदार्वादिमयी, भक्तपाककरणमिति । सद्भक्तं तण्डुलैरितरत्पांसुभिः, परिचयस्य वयसश्चेति । आत्मनः स्वल्पमधिकं वा परिचयं, बाल्यं तारुण्यं वा वयो बुद्ध्वा तदनुरूपमाचरेद् नोक्तमित्येव ॥ ५ ॥

आकर्षक्रीडापट्टिकाक्रीडामुष्टिद्यूतक्षुल्लकादिद्यूतानि मध्यमाङ्गुलिग्रहणं षट्पाषाणकादीनि च देश्यानि तत्सात्म्यात्तदाप्तदासचेटिकाभिस्तया च सहानुक्रीडेत ॥ ६ ॥

आकर्षक्रीडा पाशकक्रीडा, पट्टिकाग्रथनम्, मुष्टिद्यूतं प्रसिद्धं, क्षु-

२३ का० सू०

लुकद्यूतं पञ्चसमयादि, मध्यमाङ्गुलिग्रहणमिति। अङ्गुलिविपर्यासेन गोपितुर्मध्यमाङ्गुलेर्ग्रहणं, षट्पाषाणकादीनीति। यत्र स्वल्पानि षट्पाषाणानि हस्तस्य क्रोडेनोत्क्षिप्य पृष्ठेन गृह्यन्ते, आदिशब्दादन्यानि च देश्यानि पञ्चिकाप्रसृतकादीनि, तत्सात्म्यादिति। यत्र नायिकाया अभिनिवेशः, तदाप्तदासचेटिकाभिरिति। तस्या ये दासाश्चेटिकाश्च ताभिः क्रीडन्ताभिः सहानुक्रीडेत ततोलब्धप्रसरस्तया च ॥ ६ ॥

क्ष्वेडितकानि सुनिमीलितिकामारब्धिकां लवणवीथिकामनिलताडितिकां गोधूमपुञ्जिकामङ्गुलिताडितिकां सखीभिरन्यानि च देश्यानि ॥ ७ ॥

क्ष्वेडितकानि येष्वङ्गव्यायामाः, तान्याह—सुनिमीलितिकामिति। यत्रैकस्य कश्चिन्नेत्रे निमीलयति शेषाः प्रच्छन्नेष्वात्मानं गोपायित्वा तिष्ठन्ति, ततोऽसावुन्मीलितचक्षुर्यं गृह्णाति तस्य नेत्रनिमीलनमिति, आरब्धिकां, हस्तेन छोटिकां दत्वा यत्र पलायते परस्य संग्रहार्थं तां क्रीडामारब्धिकामाहुः, लवणवीथिकां लवणवीथिकाभ्यां कृतयोस्तद्वीथिकान्तरयोर्मध्ये लवणे स्वस्थानमाक्राम्यति तदा लवणयोगो भवति तां क्रीडां, लवणहार इति प्रतीताम्, अनिलताडितिकां, यत्र पक्षवद् भ्रमणं, गोधूमपुञ्जिकामिति। गोधूमग्रहणं व्रीह्युपलक्षणं, यत्र बहूनामेकः प्रत्येकं रूपकानादाय व्रीहिषु क्षिप्त्वा संमिश्र्य च तावतो भागान्करोति, अतस्ते यथेच्छमेकैकं भागमादाय रूपकमन्विष्यन्ते, तत्र यो न लभते सोऽन्यद्ददाति, अङ्गुलिताडितिकामिति। यत्रैकं निमीलितनेत्रमन्यैर्ललाटे आहत्य केनाभिहतोऽसीति? पृष्टो यमाघातकरं चेतयति स आहन्यते, अन्यानि च देश्यानि मण्डूकिकैकपादिकादीनि, एते प्रायशो बालस्योपक्रमाः ॥ ७ ॥

यूनस्तु ये प्रायशस्तानाह—

यां च विश्वास्यामस्यां मन्यते तया सह निरन्तरां प्रीतिं कुर्यात् परिचयाच्च बुध्येत ॥ ८ ॥

अस्यामिति। नायिकायां विश्वास्यां, निरन्तरामनवच्छिन्नां प्रीतिं कुर्याद्, साऽपि हि धात्रेयिका मत्कार्यं करिष्यतीति परिचयाच्चावबुध्येत, प्रीतिं किमप्यस्यामपि करोतीति ॥ ८ ॥

धात्रेयिकां चास्याः प्रियहिताभ्यामधिकमुपगृह्णीयात्, सा हि प्रीयमाणा विदिताकाराऽप्यप्रत्यादिशन्ती तं तां च योजयितुं श-

क्नुयादनभिहिताऽपि प्रत्याचार्यकम् ॥ ९ ॥

धात्रेयिकां धात्र्या दुहितरम्, प्रियं तदात्वे सुखकरं, हितमायत्याम्, अधिकोपग्रहे फलमाह--सा हीति। प्रीयमाणा स्निह्यमाना, विदिताकाराऽपीति । नायको नायिकामिच्छतीति ज्ञाताभिप्रायाऽपि, अप्रत्यादिशन्ती तमिति । नायकमप्रत्याचक्षाणा, तां चेति। नायिकांभयलज्जाव्यपनयनेन प्रतार्य योजयितुं शक्नुयाद्, अनभिहिताऽपि प्रत्याचार्यकमिति। संयोजने त्वमाचार्या भवेत्येतत्प्रति, नायकेनानुक्ताऽपि सती योजयितुं शक्नुयादिति योज्यम् ॥ ९ ॥

अविदिताकाराऽपि हि गुणानेवानुरागात्प्रकाशयेद्, यथा प्रयोज्याऽनुरज्येद् ॥ १० ॥

अविदिताकाराऽपीति। यद्यपि नायक एनामिच्छतीति न ज्ञातवती तथाऽपि गुणानेव प्रकाशयेद्; अनुरागादिति । नायकविषये धात्रेयिकाऽनुरागाद् ॥ १० ॥

यत्र यत्र च कौतुकं प्रयोज्यायास्तदनुप्रविश्य साधयेत् ॥ ११ ॥

यत्र यत्र चेति। प्रतारणप्रकारे, तदनुप्रविश्येति। विज्ञाय, साधयेदिति। संपादयेत् ॥ ११ ॥

क्रीडनकद्रव्याणि यान्यपूर्वाणि यान्यन्यासां विरलशो विद्येरंस्तान्यस्या अयत्नेन संपादयेत् ॥ १२ ॥

क्रीडनकद्रव्याणि वक्ष्यति, अन्यासामिति । कन्यायां, विरलशो, न बाहुल्येन, अयत्नेनेति। संपादनसामर्थ्यं दर्शयति ॥ १२ ॥

तत्र कन्दुकमनेकभक्तिचित्रमल्पकालान्तरितमन्यदन्यच्च संदर्शयेद्, तथा सूत्रदारुगवलगजदन्तमयीर्दुहितृका मधूच्छिष्टपिष्टमृण्मयीश्च ॥ १३ ॥

क्रीडनकद्रव्याण्याह-कन्दुकमिति। अल्पकालान्तरितमिति। कौतुकप्रबन्धाभ्युपगमार्थम्, अन्यदन्यद् भक्तीनां वैसादृश्याद्, दारु=काष्ठं,-गवलं=शृङ्गं, दुहितृकाः=पुत्रिकाः, संदर्शयेदित्येव, मधूच्छिष्टं सिक्थम् १३

भक्तपाकार्थमस्या महानसिकस्य च दर्शनं काष्ठमेढ्रकयोश्च, संयुक्तयोः स्त्रीपुंसयोरजैडकानां देवकुलगृहकानां मृद्विदलकाष्ठविनिर्मितानां शुकपरभृतमदनसारिकालावककुक्कुटतित्तिरिपञ्जरकाणां च विचित्राकृतिसंयुक्तानां, जलभाजनानां च यन्त्रकाणां-

वीणिकानां पिण्डोलिकानां पटोलिकानामलक्तकमनःशिलाहरिताऌहिङ्गुलकश्यामवर्णकादीनां, तथा चन्दनकुङ्कुमयोः पूगफलानां पत्राणां कालयुक्तानां, च शक्तिविषये प्रच्छन्नं दानं प्रकाशद्रव्याणां च प्रकाशं, यथा च सर्वाभिप्रायसंवर्धकमेनं मन्येत तथा प्रयतितव्यम् ॥ १४ ॥

महानसिकस्येति। महानसविषयं कर्म महानसिकमित्युक्तम्, भक्तग्रहणमुपलक्षणार्थम् भक्तादिपाकार्थस्य कर्मणस्तत्तच्छास्त्रोक्तेन विधिना दर्शनं, स्त्रीणां प्रधानविद्यात्वाद्, संयुक्तयोरिति। एककाष्ठघटितयोः स्त्रीपुंसयोर्मेढ्रकयोरविप्रयोगार्थं दर्शनम्, अजैडकानां काष्ठमयानाम्, उपलक्षणार्थत्वाद् गवाश्वादीनां च, मृदा वंशविदलैः काष्ठैर्वा विनिर्मितानां देवकुलानां देवगृहाणां च, शुकादिपञ्जराणां मृदादिनिर्मितानां तत्र मदनसारिका पठति, जलभाजनानां शङ्खशुक्तिखण्डानां मृत्काष्ठशिलानिर्मितानां, विचित्राणां वर्णिकयाऽऽकृतियुक्तानां संस्थानवतां, यन्त्रकाणामिति। यन्त्रमातृकोक्तानां, वीणिका स्वल्पवीणा, पिण्डोलिका यत्र दुहितृकाः स्थाप्यन्ते, पटोलिका यत्र प्रसाधनं विधीयते, श्यामवर्णकं राजावर्तचूर्णं चित्रकर्मोपयोगि पत्राणि ताम्बूलस्य, कालयुक्तानामिति। यस्मिन्काले येनार्थिनी, तत्र तस्य दर्शनमित्यर्थः, शक्तिविषय इति। यस्मिन् प्रच्छन्ने स्वयं प्रवेष्टुं सामर्थ्यं तत्र दानं, कुङ्कुमादीनामप्रकाश्यत्वात्, प्रकाशद्रव्याणां कन्दुकादीनां प्रकाशदानं, तैरेव कल्पनीयत्वाद्, सर्वाभिप्रायसंवर्धकमिति। सर्वाभिलाषपूर्वकं यद्यन्ममेप्सितं तत्तत्संपादयतीति, दीयमानं च यथा प्रच्छन्नमर्थयेत् ॥ १४ ॥

किंनिमित्तमित्याह--

वीक्षणे च प्रच्छन्नमर्पयेत्, तथा कथायोजनम् ॥ १५ ॥

वीक्षणे चेति। दर्शननिमित्तम्, प्रच्छन्ने दृश्यमाना निःशङ्कमुपचर्यते; तथा कथायोजनमिति। अन्यमुखेन संवर्धनार्थं च कथां योजयेत् ॥ १५ ॥

प्रच्छन्नदानस्य तु कारणमात्मनो गुरुजनाद्भयं ख्यापयेद्, देयस्य चान्येन स्पृहणीयत्वमिति ॥ १६ ॥

प्रच्छन्नस्य तु कारणमुभयं, तत्रात्मनो गुरुजनाद्भयं ख्यापयेत्, तव पितरौ रुष्यत इति, अन्येन स्पृहणीयत्वमिति। अन्योऽप्येतद् दृष्ट्वा स्पृहयति ततश्च गृह्णीयादिति ॥ १६ ॥

बर्धमानानुरागां चाख्यानके मनः कुर्वतीमन्वर्थाभिः कथाभिश्चित्तहारिणीभिश्च रञ्जयेत् ॥ १७ ॥

अन्वर्थाभिः, स्वयं प्रयुक्ताभिः शकुन्तलाराजदारिकाभिः, चित्तहारिणीभिरन्याभिरनुरागयुक्ताभिः ॥ १७ ॥

विस्मयेषु प्रसज्यमानामिन्द्रजालैः प्रयोगैर्विस्मापयेत्, कलासु कौतुकिनीं तत्कौशलेन, गीतप्रियां श्रुतिहरैर्गीतैः, आश्वयुज्यामष्टमीचन्द्रके कौमुद्यामुत्सवेषु यात्रायां ग्रहणे गृहाचारे वा विचित्रैरापीडैः कर्णपत्रभङ्गैः सिक्थकप्रधानैर्वस्त्राङ्गुलीयकभूषणदानैश्च नो चेद्दोषकराणि मन्येत ॥ १८ ॥

विस्मयेषु प्रसज्यमानामिति । आश्चर्येषु प्रसक्तिं यान्तीं, कलासु पत्रच्छेद्यादिषु, गीतप्रियामिति । कलान्तर्गतमपि पुनर्गीतग्रहणं प्राधान्यार्थम्, प्रायेण हि गीतप्रियो लोकः, आश्वयुज्यां कौजागरे, अष्टमीचन्द्रके, मार्गशीर्षबहुलाष्टम्यां, तत्र हि दिनमुपोष्योदिते चन्द्रमसि भुज्यते, कौमुद्यामिति । सामान्योपादानेऽपि यत्र कन्याभिर्ज्योत्स्नामण्डलकपूजा क्रियते साऽत्र द्रष्टव्या सा कार्तिक्यां भवति, उत्सवेषु इन्द्रमहादिषु, यात्रायां देवतायाः, ग्रहणे सूर्याचन्द्रमसोः, गृहाचारे गृहमागतायाम्, आपीडादिभिर्विस्मापयेदिति सम्बन्धः, नो चेद्दोषकराणीति । तद्दाने यद्यात्मनोऽपायं न पश्येत् ॥ १८ ॥

अन्यपुरुषविशेषाभिज्ञतया धात्रेयिकाऽस्याः पुरुषप्रवृत्तां चातुःषष्टिकान्योगान्ग्राहयेत् ॥ १९ ॥

अन्यपुरुषविशेषाभिज्ञतयेति । अन्येभ्यः पुरुषेभ्यो मम विशेषं धात्रेयिका जानात्विति पुरुषप्रवृत्तां जातसंप्रयोगाम्, अन्यथा कथं विशेषमवैति ॥ १९ ॥

तद्ग्रहणोपदेशेन च प्रयोज्यायां रतिकौशलमात्मनः प्रकाशयेत् ॥ २० ॥

तद्ग्रहणोपदेशेनेति । धात्रेयिकोपदेशद्वारेण, रतिकौशलमिति । तज्ज्ञताम् ॥ २० ॥

उदारवेषश्च स्वयमनुपहतदर्शनश्च स्यात् ॥ २१ ॥

अनुपहतदर्शन इति । अस्योपाय उदारवेषत्वम् ॥ २१ ॥

भावं च कुर्वतीमिङ्गिताकारैः सूचयेत् ॥ २२ ॥

तथाभूतं तं च दृष्ट्वा, भावं कुर्वतीमनुरागं चेतसि जनयन्तीमिङ्गिताकारलिङ्गैर्विद्यात् ॥ २२ ॥

किमित्यनुपहतदर्शनः स्यादित्याह--

युवतयो हि संसृष्टमभीक्ष्णदर्शनं च पुरुषं प्रथमं कामयन्ते काममयमाना अपि तु नाभियुञ्जत इति प्रायोवाद इति बालायामुपक्रमाः ॥ २३ ॥

युवतय इति । जातयौवनाः, संसृष्टं जातपरिचयम्, अभीक्ष्णदर्शनं-सदा दृश्यमानं, कामयन्त इति । इच्छन्ति, नाभियुञ्जते कया चिल्लज्जाऽऽद्यर्थयुक्त्या ॥ २३ ॥

बालायामुपक्रमाः षड्विंशं प्रकरणम् ॥

भावं च कुर्वतीमिङ्गिताकारैः सूचयेदित्युक्तं, तेषां सूचनं प्रकाशनमुच्यते, यदाह—

तानिङ्गिताकारान्वक्ष्यामः ॥ २४ ॥

तानिति । तत्रेङ्गितमन्यथा वृत्तिः, आकारो मुखनयनरागः, तदुभयमुत्तरत्र यथायोगं योज्यम् ॥ २४ ॥

संमुखं न वीक्षते, तं तु वीक्षिता व्रीडां दर्शयति ॥ २५ ॥

संमुखं न वीक्षत इति । लज्जया पराङ्मुखी, तं तु नायकं, वीक्षितेति । नायकेन, व्रीडां दर्शयति, अधोमुखी भूत्वा ॥ २५ ॥

रुच्यमात्मनोऽङ्गमपदेशेन प्रकाशयति ॥ २६ ॥

रुच्यमतिमनोहरम्, आत्मनोऽङ्गं स्तनबाहुमूलादि, अपदेशेनेति । प्रावरणव्याजेन ॥ २६ ॥

प्रमत्तं प्रच्छन्नं नायकमतिक्रान्तं च वीक्षते ॥ २७ ॥

प्रमत्तमनवहितम्, प्रच्छन्नमेकाकिनम्, अतिक्रान्तं दूरगतम् ॥२७॥

पृष्टा च किञ्चित्सस्मितमव्यक्ताक्षरमनवसितार्थं च मन्दं मन्दमधोमुखी कथयति ॥ २८ ॥

पृष्टा च किञ्चिदिति । नायकेन, सस्मितमित्यादिनाऽनुरागोन्मुखता व्रीडा चाख्यायते ॥ २८ ॥

तत्समीपे चिरं स्थानमभिनन्दति ॥ २९ ॥

तत्समीप इति । नायकसमीपे ॥ २९ ॥

दूरे स्थिता पश्यतु मामिति मन्यमाना परिजनं सवदनवि-

कारमाभाषते तं देशं न मुञ्चति ॥ ३० ॥

परिजनमिति । आत्मीयं, सवदनविकारमिति । सभ्रूभङ्गकटाक्षं, तं देशमिति । यत्र स्थिता तं पश्यति ॥३०॥

यत्किञ्चिद् दृष्ट्वा विहसितं करोति तत्र कथामवस्थानार्थमनुबध्नाति ॥ ३१ ॥

तत्रैव यत्किञ्चिद् दृष्ट्वा विहसितं करोति तिर्यक्पश्यन्ती, तत्र कथामनुबध्नाति सखीं प्रोत्साह्य ॥ ३१ ॥

बालस्याङ्कगतस्यालिङ्गनं चुम्बनं च करोति, परिचारिकायास्तिलकं च रचयति ॥ ३२ ॥

बालस्येति । लाडीकस्य स्वाङ्कमारोपितस्य, चुम्बनावगूहनं च संक्रान्तकम्, परिचारिकायाः स्वस्यास्तिलकं रचयति नायकं पश्यन्ती३२

परिजनानवष्टभ्य तास्ताश्च लीला दर्शयति ॥ ३३ ॥

परिजनानवष्टभ्येति । परिजनक्रोडापाश्रया, तास्ताश्चेति । केशविरचनाङ्गवलनविजृम्भिकाः ॥ ३३ ॥

तन्मित्रेषु विश्वसिति वचनं चैषां बहुमन्यते करोति च ॥३४॥

तन्मित्रेषु=नायकमित्रेषु, विश्वसिति स्वभावं प्रकटयति, वचनं चैषां बहुमानं कुरुते तदनुरूपानुष्ठानात् ॥ ३४ ॥

तत्परिचारकैः सह प्रीतिं संकथां द्यूतमिति च करोति ॥३५॥

तत्परिचारकैरिति । नायकपरिचारकैः ॥ ३५ ॥

स्वकर्मसु च प्रभविष्णुरिवैतान्नियुङ्क्ते ॥ ३६ ॥

एतानिति । नायकपरिचारकान् ॥ ३६ ॥

तेषु च नायकसंकथामन्यस्य कथयत्स्ववहिता तां शृणोति ३७॥

तेष्विति । परिचारकेषु, कस्य चिदन्यस्य कथयत्सु, तां संकथाम् ३७

धात्रेयिकया चोदिता नायकस्योदवसितं प्रविशति ॥ ३८ ॥

धात्रेयिकया चोदिता प्रविशाव इति, उदवसितं गृहम् ॥ ३८ ॥

तामन्तरा कृत्वा तेन सह द्यूतं क्रीडामालापं चायोजयितुमिच्छति ॥ ३९ ॥

तामन्तरा कृत्वेति । धात्रेयिकां व्यवधानीकृत्य, नायकेन सह द्यूतादि नियोजयितुमिच्छति ॥ ३९ ॥

अनलङ्कृता दर्शनपथं परिहरति ॥ ४० ॥

दर्शनपथमिति । नायकस्य ॥ ४० ॥

कर्णपत्रमङ्गुलीयकं स्रजं वा तेन याचिता सधीरमेव गात्रादवतार्य सख्या हस्ते ददाति तेन च दत्तं नित्यं धारयति ॥ ४१ ॥

सधीरमवतार्य किं ग्रहीष्यतीति, सख्या हस्त इति । लज्जया न तद्धस्ते ददाति, नित्यं धारयति श्लाघ्यमाना ॥ ४१ ॥

अन्यवरसंकथासु विषण्णा भवति तत्पक्षकैश्च सह न संसृज्यत इति ॥ ४२ ॥

तत्पक्षैरिति । अन्यवरपक्षैः ॥ ४२ ॥

प्रकरणद्वयमुपसंहरन्नाह—

दृष्ट्वैतान्भावसंयुक्तानाकारानिङ्गितानि च ।
कन्यायाः संप्रयोगार्थं तांस्तान्योगान्विचिन्तयेत् ॥ ४३ ॥

दृष्ट्वेति । एतानिति । आकारान्, इङ्गितानि चेति लिङ्गविपरिणामेन योज्यम्, भावसंयुक्तानिति । अनुरागसङ्गतान्, संप्रयोगार्थमिति । संप्रयोगोऽत्र समागमलक्षणो गान्धर्वो ज्ञेयः, योगानिति । अभियोगान् ॥ ४३ ॥

त्रिविधा कन्या—बाला तरुणी प्रौढा चेति, यथाक्रममुपक्रममाह—

बालक्रीडनकैर्बाला कलाभिर्यौवने स्थिता ।
वत्सला चापि संग्राह्या विश्वास्यजनसंग्रहात् ॥ ४४ ॥

इति श्रीवात्स्यायनीये कामसूत्रे तृतीयेऽधिकरणे बालोपक्रमा-
इङ्गिताकारसूचनं च तृतीयोऽध्यायः ।

बालक्रीडनकैरिति । कलाभिरनुरागिणी, वत्सला प्रौढा, यस्तस्याविश्वास्यस्तदुपग्रहात्स्वीकर्तव्या ॥ ४४ ॥

इङ्गिताकारसूचनं सप्तविंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे बालोपक्रमा इङ्गिताकारसूचनं च तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः ।

शास्त्रकार एव प्रकरणसम्बन्धमाह—

दर्शितेङ्गिताकारां कन्यामुपायतोऽभियुञ्जीत ॥ १ ॥

दर्शितेङ्गिताकारामिति । उपायत इति । उपाया एवाभियोगा आभयुज्यते तैरिति, ते चासहायस्येत्येकपुरुषाभियोगा उच्यन्ते, ससहायस्यापि केचित्सम्भवन्ति, ते द्विविधाः—बाह्या आभ्यन्तराश्चेति ॥ १ ॥

तत्र पूर्वानधिकृत्याह--

द्यूते क्रीडनकेषु च विवदमानः साकारमस्याः पाणिमवलम्बेत ॥ २ ॥

द्यूत इति । विवदमानो वाक्कलहं कुर्वन्, साकारं पाणिमवलम्बेत यथाऽवगच्छेद् 'अहमनेनोढेति ॥ २ ॥

यथोक्तं च स्पृष्टकादिकमालिङ्गनविधिं विदध्यात ॥ ३ ॥

स्पृष्टकादिकमिति । स्पृष्टकं विद्धकमुद्घृष्टकं पीडितकमिति, चतुष्टयमवसरप्राप्तत्वाद्यथायोग्यं विदध्यात् ॥ ३ ॥

पत्रच्छेद्यक्रियायां च स्वाभिप्रायसूचकं मिथुनमस्या दर्शयेत् ॥ ४ ॥

पत्त्रेति । स्वाभिप्रायसूचकं संप्रयोगसूचकं हंसादिमिथुनम् ॥ ४ ॥

एवमन्यद्विरलशो दर्शयेत् ॥ ५ ॥

एवमिति । अन्यदपि यन्मिथुनं भवति, तिलकादिकं साकारं, विरलश इति । सततदर्शने हि ग्राम्यता सम्भाव्यते कौतुकं चापैति ॥ ५ ॥

जलक्रीडायां तद्दूरतोऽप्सु निमग्नः समीपमस्या गत्वा स्पृष्ट्वा चैनां तत्रैवोन्मज्जेत् ॥ ६ ॥

जलेति । स्पृष्ट्वा चैनामिति । निमग्न एव, तत्रैवोन्मज्जेद्, नायिकासमीपे ॥ ६ ॥

नवपत्त्रिकादिषु च सविशेषभावनिवेदनम् ॥ ७ ॥

नवपत्त्रिकादिषु चेति । देश्यक्रीडासु, सविशेषभावनिवेदनमिति । पूर्वोक्तेनैव स्वाभिप्रायसूचकेन पत्त्रच्छेद्यादिना ॥ ७ ॥

आत्मदुःखस्यानिर्वेदेन कथनम् ॥ ८ ॥

आत्मदुःखस्य च कथनं 'न जाने किं कृता मम चेतसि पीडा' इति, तत्राप्यनिर्वेदेन भूयो भूयः प्रधानकार्यत्वात्कथनम् ॥ ८ ॥

स्वप्नस्य च भावयुक्तस्यान्यापदेशेन ॥ ९ ॥

अन्यापदेशेनेति। त्वत्तुल्यवयोरूपया सहोपगमः स्वप्ने ममाभूदिति कथनम् ॥ ९ ॥

प्रेक्षणके स्वजनसमाजे वा समीपोपवेशनं तत्रान्यापदिष्टस्पर्शनम् ॥ १० ॥

स्वजनसमाजः=स्वजनगोष्ठी, समीपोपवेशनमिति। नायिकायाः, तत्रेति। समीपे प्रेक्षणकादिषु, अन्यापदिष्टमन्यदपदिश्य स्पर्शनम् ॥१०॥

अपाश्रयार्थं च चरणेन चरणस्य पीडनम् ॥ ११ ॥

अपाश्रयार्थमिति। अपाश्रयस्तदङ्के स्वाङ्गस्थापनं, चरणस्य पीडनं स्वचरणेन ॥ ११ ॥

ततः शनकैरेकैकामङ्गुलिमभिस्पृशेत् ॥ १२ ॥

तत इति। तस्मात्सिद्धादुत्तरकाले, शनकैरिति। कियतीं कालकलामतिक्रम्य तस्या अङ्गुलिमभिस्पृशेत् ॥ १२ ॥

पादाङ्गुष्ठेन च नखाग्राणि घट्टयेत् ॥ १३ ॥

पादाङ्गुष्ठेनेति। नखाग्राणि, घट्टयेच्चालयेत् ॥ १३ ॥

तत्र सिद्धः पदात्पदमधिकमाकाङ्क्षेत ॥ १४ ॥

तत्रेति। सिद्धो नखाग्रघट्टने, पदात्पदमिति। स्थानात्स्थानान्तरं जघनोरुनितम्बादिकं स्प्रष्टुं सोपानक्रमेणाकाङ्क्षेत ॥ १४ ॥

क्षान्त्यर्थं च तदेवाभ्यस्येत् ॥ १५ ॥

क्षान्त्यर्थं चेति। सहनार्थम्, अभ्यस्येत् तदेव यत्पूर्वाभ्युपगतम् ॥ १५ ॥

आन्तरानधिकृत्याह—

पादशौचे पादाङ्गुलिसन्दंशेन तदङ्गुलिपीडनम् ॥ १६ ॥

पादशौच इति। पादधावनं ददत्याः स्वपादाङ्गुलिसन्दंशेन पीडनम् ॥ १६ ॥

द्रव्यस्य समर्पणे प्रतिग्रहे वा तद्गतो विकारः ॥ १७ ॥

तद्गतो विकार इति। द्रव्यं पूगफलादिकं समर्पयता प्रतिगृह्णता वा द्रव्यगतो विकारः कार्यः, सनखस्पर्शमर्पयेत्प्रतिगृह्णीयाद्वेत्यर्थः ॥१७॥

आचमनान्ते चोदकेनासेकः ॥ १८ ॥

आचमनान्त इति। उपस्प्रष्टुं ददतीं तदन्ते जलचुलकेनाहन्यात् ॥१८॥

विजने तमसि च द्वन्द्वमासीनः क्षान्ति कुर्वीत समानदेशशय्यायां च ॥ १९ ॥

द्वन्द्वमिति । साहचर्येणासीनः, क्षान्त कुर्वीतेति । करस्पर्शादिना, तत्काले लज्जाऽभावात्कन्यायाः, समानदेशशय्यायां च क्षान्ति कुर्वीत॥१९॥

तत्र यथार्थमनुद्वेजयतो भावनिवेदनम् ॥ २० ॥

तत्रेति । आसने शयने च, यथार्थं भावनिवेदनमाकारेण न वाचा प्रत्याख्यानभयाद्, अनुद्वेजयत इति । यथा नोद्विजते ॥ २० ॥

यदा वाचा तदा विधिमाह—

विविक्ते च किंचिदस्ति कथयितव्यमित्युक्त्वा निर्वचनं,भावं च तत्रोपलक्षयेद् यथा पारदारिके वक्ष्यामः ॥ २१ ॥

विविक्ते चेति । 'किंचिदस्ति कथयितव्यम' इत्येतावद्वक्तव्यं, 'किं तद्' इति तयोच्यमाने निर्वचनं ब्रूयादित्यर्थः, तत्रेति । वचनोपन्यासे, भावं संप्रयोगाभिलाषमस्या लक्षयेत्, कथमित्याह–यथेति। तत्र प्रवृत्त्या भावपरीक्षां वक्ष्यति, इङ्गिताकारैश्च यद्भाववेदनं तदनुरागमात्रवेदनमिति विज्ञेयम् ॥ २१ ॥

विदितभावस्याभ्यन्तरमभियोगमाह—

विदितभावस्तु व्याधिमपदिश्यैनां वार्ताग्रहणार्थं स्वमुदवसितमानयेत् ॥ २२ ॥

विदितेति । व्याधिमपदिश्येति । कृतकं शिरःशूलादिकमपदिश्य, स्वमुदवसितं स्वगृहम्, आनयेद् विश्वास्यया प्रहितया ॥ २२ ॥

आगतायाश्च शिरःपीडने नियोगः, पाणिमवलम्ब्य चास्याः साकारं नयनयोर्ललाटे च निदध्यात् ॥ २३ ॥

शिरःपीडन इति । शिरो मे दुःखयति पीडय हस्तेनेति नियोगः ॥२३॥

औषधापदेशार्थं चास्याः कर्म विनिर्दिशेत् ॥ २४ ॥

औषधेति । यथा जानात्यस्मत्कृतेयमस्यावस्थेति कर्माणि दर्शयेत् ॥ २४ ॥

त्वयैवेदं कर्तव्यं, न ह्येतदृते कन्याया अन्येन कार्यमिति गच्छन्तीं पुनरागमनानुबन्धमेनां विसृजेत् ॥ २५ ॥

त्वयैवेति । त्वया साधितं सिद्धिदं भवतीति पुनरागमनानुबन्धं पुनरागन्तव्यमित्येवंरूपम् ॥ २५ ॥

अस्य च योगस्य त्रिरात्रं त्रिसंध्यं च प्रयुक्तिः ॥ २६ ॥

अस्येति । कन्यासाध्यस्य, त्रिरात्रं त्रिसंध्यं, प्रयुक्तिः=प्रयोगः, कार्य्यः ॥ २६ ॥

एतन्निर्देशे फलमाह—

अभीक्ष्णदर्शनार्थमागतायाश्च गोष्ठीं वर्धयेत् ॥ २७ ॥

अभीक्ष्णेति । गोष्ठीमिति । कलानामाख्यायिकानां वा येन तदासक्ता चिरं तिष्ठेदित्यर्थः ॥ २७ ॥

अन्याभिरपि सह विश्वासनार्थमधिकमधिकं चाभियुञ्जीत न तु वाचा निर्वदेत् ॥ २८ ॥

अन्याभिरिति । यथाऽयमेकोऽभियुञ्जीत, तथाऽन्याभिरपि स्त्रीभिःसहाधिकमधिकं, किमर्थमिति चेत् ? तद्विश्वासनार्थं, ताभिः कार्य्यं विश्वसिति, न तु स्वयं वाचा निर्वदेत् ॥ २८ ॥

को दोष इत्याह—

दूरगतभावोऽपि हि कन्यासु न निर्वेदेन सिद्ध्यतीति घोटकमुखः ॥ २९ ॥

दूरेति । अत्यर्थजातविस्रम्भोऽपि न सिद्ध्यति, बहुशोऽभियोगापेक्षणीयत्वात्कन्यानां, घोटकमुखग्रहणं पूजार्थं तन्मतस्याप्रतिषिद्धत्वात्॥२९॥

यदा तु बहुसिद्धां मन्येत तदैवोपक्रमेत ॥ ३० ॥

यदा त्विति । बहुसिद्धां बहुभिरभियोगैः, गान्धर्वेण विधिना श्रोत्रियागारादग्निमाहृत्येत्यादिना कार्योन्मुखीमुपक्रमेत ॥ ३० ॥

तत्र कालमाह—

प्रदोषे निशि तमसि च योषितो मन्दसाध्वसाः सुरतव्यवसायिन्यो रागवत्यश्च भवन्ति न च पुरुषं प्रत्याचक्षते तस्मात्तत्कालं प्रयोजयितव्या इति प्रायोवादः ॥ ३१ ॥

प्रदोष इति । रात्रिप्रारम्भे, निशि=रात्रौ त्रियामालक्षणायां, तत्राप्यन्धकारे प्रतार्यः योषिद्ग्रहणं सर्वस्त्रीप्रतिपत्त्यर्थम्, मन्दसाध्वसाः कैश्चिददृश्यमानत्वाद्, सुखेन व्यवसायिन्यः सङ्केतदेशयायिन्यो रागवत्यः संप्रयोगाभिलाषिण्यो न प्रत्याचक्षते न निषेधन्ति तद्वचनानुष्ठानेन, तस्मात्तत्कालमिति । अत्यन्तसंयोगे द्वितीया, प्रयोजयितव्या योज्या वाञ्छितकार्येषु ॥ ३१ ॥

एकपुरुषाभियोगानां त्वसम्भवे गृहीतार्थया धात्रेयिकया स-

ख्या वा तस्यामन्तर्भूतया तमर्थमनिर्वदन्त्या सहैनामङ्कमानाययेत् ततो यथोक्तमभियुञ्जीत ॥ ३२ ॥

एकेति । असम्भव इति । नायिकाया विप्रकृष्टत्वात्स्वयमेकस्याभियोगो न सम्भवति सहायमपेक्षते, गृहीतार्थयेति । नायकोऽपि नायिकांसमीपमानेतुमिच्छतीत्येतद्रूपार्थज्ञानवत्या, तस्यामन्तर्भूतया नायिकायांप्रभवन्त्या, तादृशी तु धात्रेयिका सखी वा यदाह तत्करोति, अर्थं नायकपार्श्वगमनरूपमनिर्वदन्त्या, अन्यव्यपदेशिन्येत्यर्थः, अङ्कमानाययेद्गसम्भाषणं, ततो यथोक्तमिति द्यूतक्रीडनकेषु विवदमान इति, यथासम्भवं पूर्वोक्तं योज्यमित्यर्थः ॥ ३२ ॥

स्वां वा परिचारिकामादावेव सखीत्वेनास्याः प्रणिदध्यात् ॥ ३३ ॥

स्वामिति । सहायार्थमिति भावः, सखीत्वेन, प्रणिदध्याद् = निक्षिपेत्, सा हि प्रणिहिता सहायतास्प्रतिपद्यते ॥ ३३ ॥

यज्ञे विवाहे यात्रायामुत्सवे व्यसने प्रेक्षणकव्यापृते जने तत्र तत्र च दृष्टेङ्गिताकारां परीक्षितभावामेकाकिनीमुपक्रमेत ॥ ३४ ॥

यज्ञ इति । यज्ञादयो लोकव्यग्रत्वहेतवः, तत्र तत्रेति । अन्यत्राप्येवंप्रकारो यत्र जनो व्याप्रियते, परीक्षितभावामिति । नेयं शुल्कप्रतिग्राहिणी द्विधाभूतमानसा वा, किं त्वितरेति, एकाकिनीमुपक्रमेत, गान्धर्वेण विधिनेत्यर्थः ॥ ३४ ॥

न हि दृष्टभावा योषितो देशे काले च प्रयुज्यमाना व्यावर्तन्तइति वात्स्यायनः ॥ ३५ ॥

इत्येकपुरुषाभियोगाः ।

दृष्टभावाः=उपलब्धभावाः, देशेऽभिप्रेते, काले यज्ञादिकाले प्रदोषादौ च प्रयुज्यमाना वाञ्छितकार्य्येण व्यावर्त्तन्ते ३५ ॥

इत्येकपुरुषाभियोगा अष्टविंशं प्रकरणम् ॥

यथा धनहीनत्वादियुक्तः कन्यामलभ्यत्वात्स्वयमेवानुरञ्जयेत्, तथा कन्याऽपि तथाविधा कैश्चिदयाच्यमाना स्वयमुपावर्तेत, तत्प्रयोज्यस्योपावर्तनमाह—उपावर्तनमभिमुखीकरणम्,

कथं न व्रियत इत्याह—

मन्दापदेशा गुणवत्यपि कन्या धनहीना कुलीनाऽपि समानैरयाच्यमाना मातापितृवियुक्ता वा ज्ञातिकुलवर्तिनी वा प्राप्तयौवना

पाणिग्रहणं स्वयमभीप्सेत ॥ ३६ ॥

मन्देति। मन्दापदेशा=हीनाभिजना, गुणवत्यपि सा तैरदाश्यमाना वा, धनहीना वा कुलीनाऽपि, समानैस्तुल्याभिजनैर्धनिभिः, मातापितृवियुक्ता वा, अनाथत्वादयाच्यमाना, प्राप्तयौवनेति। प्रत्येकं योज्यं, स्वयं पाणिग्रहं लिप्सेत, तदानीं स्वयंवरस्याभ्यनुज्ञानाद्,

यथोक्तं—

'त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्' इति ॥ ३६ ॥

सदृशप्रतिपत्तावुपायमाह—

सा तु गुणवन्तं शक्तं सुदर्शनं बालप्रीत्याऽभियोजयेत् ॥ ३७ ॥

सा त्विति। गुणवन्तं नायकगुणयुक्तं, शक्तं युद्धादिषु, सुदर्शनं-रूपवन्तम्, बालेति। बाल्ये क्रीडमानयोर्या प्रीतिस्तया प्रयोज्यकर्त्र्याऽभियोजयेत्, स तथाऽभियुञ्जानः सिद्ध्यतीत्यर्थः ॥ ३७ ॥

गुणान्तरमाह—

यं वा मन्येत मातापित्रोरसमीक्षया स्वयमप्ययमिन्द्रियदौर्बल्यान्मयि प्रवर्तिष्यत इति प्रियहितोपचारैरभीक्ष्णसन्दर्शनेन च तमावर्जयेत् ॥ ३८ ॥

यं वेति। इन्द्रियदौर्बल्यादिति। इन्द्रियाणि नियन्तुमसमर्थत्वाद्, यमेवं मन्येत तमपि योजयेदिति संबन्धः, प्रियहितेति। प्रियोपचारा एतदर्थं सुखं कुर्वन्ति, अवर्जनमभिमुखीकरणम् ॥ ३८ ॥

माता चैनां सखीभिर्धात्रेयिकाभिश्च सह तदभिमुखीं कुर्यात् ॥ ३९ ॥

माता चैनामिति। नायिकाया माता यदि जीवति, सा न जावति चेत्कृतकमाता वा, सखीभिः सह लज्जाऽपगमार्थं, तदभिमुखीमिति। नायकाभिमुखीम्, उपचारैर्बाह्यैराभ्यन्तरैश्चेति शेषः ॥ ३९ ॥

तत्र पूर्वमधिकृत्याह—

पुष्पगन्धताम्बूलहस्ताया विजने विकाले च तदुपस्थानम् ॥ ४० ॥

पुष्पेति। तदुपस्थानं नायकसमीपगमनं, कलाकौशलप्रकाशनार्थं-गुणवत्त्वज्ञापनार्थम् ॥ ४० ॥

कलाकौशलप्रकाशने वा संवाहने शिरसः पीडने चौचित्यदर्शनम् ॥ ४१ ॥

औचित्यदर्शनमिति । सहसा न प्रतिजानीयाद्, अनुबध्यमानमनुकुर्यादित्यर्थः ॥ ४१ ॥

प्रयोज्यस्य सात्म्ययुक्ताः कथायोगाः बालायामुपक्रमेषु यथोक्तमाचरेत् ॥ ४२ ॥

प्रयोज्यस्य सात्म्ययुक्ताः प्रयोज्यानुकूलाः, बालायां ये नायकस्योपक्रमा उक्तास्तेषु यथोक्तं साऽप्याचरेत् ॥ ४२ ॥

न चैवातुराऽपि पुरुषं स्वयमभियुञ्जीत, स्वयमभियोगिनी हि युवतिः सौभाग्यं जहातीत्याचार्याः ॥ ४३ ॥

आतुराऽपीति । कामपरवशाऽपि न स्वयमभियुञ्जीत सद्यःसौभाग्यहानेः, आचार्यग्रहणं पूजार्थं तन्मतस्याप्रतिषिद्धत्वात् ॥ ४३ ॥

स चेदभियुञ्जीत प्रतिगृह्णीयाद्यदाह—

तत्प्रयुक्तानां त्वभियोगानामानुलोम्येन ग्रहणम् ॥ ४४ ॥

तत्प्रयुक्तानामिति । बाह्यानामभियोगानाम्, आनुलोम्येन यथाऽयं न विमुखीभवति ॥ ४४ ॥

आभ्यन्तरमधिकृत्याह—

अङ्कपरिष्वक्ता च न विकृतिं भजेत् ॥ ४५ ॥

अङ्कपरिष्वक्तेति । न विकृतिमिति । मा ज्ञासीन्नायको मामुद्विग्नामिति हेतोरित्यर्थः ॥ ४५ ॥

श्लक्ष्णमाकारमजानतीव प्रतिगृह्णीयात् ॥ ४६ ॥

आकारमिति । नायकस्य भावसूचकमाकारं प्रतिगृह्णीयाद्, न प्रत्याचक्षीत, तत्रापि श्लक्ष्णमस्फुटं क्रियाविशेषणमेतद्, अजानतीवेति । धार्ष्ट्यपरिहारार्थम् ॥ ४६ ॥

वदनग्रहणे बलात्कारः ॥ ४७ ॥

बलात्कार इति । तथा कार्यं यथाऽयं चुम्बितुं हठाद्वदनं गृह्णातीत्यर्थः ॥ ४७ ॥

रतिभावनामभ्यर्थ्यमानायाः कृच्छ्राद् गुह्यसंस्पर्शनम् ॥ ४८ ॥

रतिभावनामिति । आत्मनो रत्युत्पत्तिं नायकेन यदा साऽभ्यर्थ्यते, स्वगुह्ये तत्पाणिन्यासेन, तदा तस्याः कृच्छ्रान्नायकगुह्यस्पर्शनम् ॥ ४८ ॥

तत्रापि विशेषमाह—

अभ्यर्थिताऽपि नातिविवृता स्वयं स्यादानिश्चयकालात् ॥ ४९ ॥

नातिविवृतेति । अङ्गोपाङ्गप्रत्यङ्गदर्शनेनेत्यर्थः, तत्र हेतुः—अनिश्चयेति ॥ ४९ ॥

निश्चितकालं दर्शयन्नाह—

यदा तु मन्येतानुरक्तो मयि न व्यावर्तिष्यत इति तदैवैनमभियुञ्जानं बालभावमोक्षाय त्वरयेत् ॥ ५० ॥

यदा त्विति । न व्यावर्तिष्यते, न मां त्यक्ष्यति, अभियुञ्जानं प्रच्छन्नप्रदेशे, बालभावमोक्षायेति । गान्धर्वविधिपूर्वकं कौमारहरणाय त्वरयेद् ॥ ५० ॥

विमुक्तकन्याभावा च विश्वास्येषु प्रकाशयेदिति प्रयोज्यस्योपावर्तनम् ॥ ५१ ॥

विश्वास्येषु सखीधात्रेय्यादिषु, प्रकाशयेत् कथयेद्, गान्धर्वेण विवाहेनाहमूढेति ॥ ५१ ॥

इति प्रयोज्यस्योपावर्तनमेकोनत्रिंशं प्रकरणम् ॥

यदा प्रयोज्यमुपावर्तमाना बहुभिरभियुज्यते तदाऽभियोगतः कन्यायाः प्रतिपत्तिरुच्यतेऽभियोगं दृष्ट्वा कन्याया अनुष्ठानमित्यर्थः ।

भवन्ति चात्र श्लोकाः—

कन्याऽभियुज्यमाना तु यं मन्येताश्रयं सुखम् ।
अनुकूलं च वश्यं च तस्य कुर्यात्परिग्रहम् ॥ ५२ ॥

कन्येति । आश्रयमिति । आश्रीयत इति कृत्वा, सुखमिति । बाह्यस्योपभोगसुखस्य, आन्तरस्य च रतसुखस्य हेतुत्वाद्, अनुकूलं तच्चित्तानुविधायिनं, वश्यं वशं गतं यथोक्तकारिणं मन्येत, ततस्तस्य प्रतिग्रहं कुर्यात् स्वयंवरे तस्योत्तमत्वात्, सोऽपि तथैवाचरेदित्यर्थः ॥५२॥

अनपेक्ष्य गुणान्यत्र रूपमौचित्यमेव च ।
कुर्वीत धनलोभेन पतिं सापत्नकेष्वपि ॥ ५३ ॥

अनपेक्ष्येति । गुणान् यत्रेति, यस्मिन्स्वयंवरे गुणाननपेक्ष्य तदभावादेवौचित्यमाभिजन्यं, धनलोभेन धनवानेव केवलमिति मत्वा, सापत्नकेष्वपि, न केवलमसापत्नकेषु, प्रायेण धनिनां बहुदारत्वात् ॥ ५३ ॥

तत्र युक्तगुणं वश्यं शक्तं बलवदर्थिनम् ।
उपायैरभियुञ्जानं कन्या न प्रतिलोमयेत् ॥ ५४ ॥

तत्र स्वयंवरे युक्तगुणं सगुणं शक्तं समर्थं बलवदर्थिनमेकान्ततोऽर्थिनं न प्रतिलोमयेदपाकुर्यात् ॥ ५४ ॥

यस्तु धनवान्बहुपत्नीको गुणवानप्यवश्यस्तमभियुञ्जानं प्रतिलोमयेदिति दर्शयन्नाह—

वरं वश्यो दरिद्रोऽपि निर्गुणोऽप्यात्मधारणः ।
गुणैर्युक्तोऽपि न त्वेवं बहुसाधारणः पतिः ॥ ५५ ॥

वरमिति । आत्मधारणः कुटुम्बमात्रधारकः, बहुसाधारणो बहूनामेकः, यस्तु धनवान् कृतपरिग्रहो गुणवान् वश्यः, तं न प्रतिलोमयेदित्यर्थः ॥ ५५ ॥

यस्तु न वश्यस्तत्र दोषमाह—

प्रायेण धनिनां दारा बहवो निरवग्रहाः ।
बाह्ये सत्युपभोगेऽपि निर्विस्रम्भा बहिःसुखाः ॥ ५६ ॥

प्रायेणेति । स्वत एव धनवान्बहून्दारान्प्रतिगृह्णाति, विशेषतस्ताश्च, निरवग्रहाः=निरङ्कुशाः, तत्र कारणं—बाह्य इति । अशनाद्युपभोगेन बहिःसुखाः, निर्विस्रम्भा आन्तरेण रताख्यसुखेन वर्जिता इत्यर्थः ॥५६॥

नीचो यस्त्वभियुञ्जीत पुरुषः पलितोऽपि वा ।
विदेशगतिशीलश्च न स संयोगमर्हति ॥ ५७ ॥

नीचोऽधमजातिः पूर्वगुणयुक्तोऽपि, पलितः=वृद्धः, विदेशगतिशीलः=सदा प्रवासी ॥ ५७ ॥

यदृच्छयाऽभियुक्तो यो दम्भद्यूताधिकोऽपि वा ।
सपत्नीकश्च सापत्यो न स संयोगमर्हति ॥ ५८ ॥

यदृच्छयेति । स्वेच्छाभियोगशीलो बलात्कारेणेति भावः, दम्भाधिको व्याजबहुलो, द्यूताधिको द्यूतासक्तश्च, सपत्नीकः सापत्यश्च परिणीतभार्यायुक्तस्तदपत्यवांश्च, एकतरवान्वा ॥ ५८ ॥

वश्यस्तु तादृशोऽपि संयोगमर्हत्येवेत्याह—

गुणसाम्येऽभियोक्तॄणामेको वरयिता वरः ।
तत्राभियोक्तरि श्रैष्ठ्यमनुरागात्मको हि सः ॥ ५९ ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे एकपुरुषाभियोगाः प्रयोज्योपावर्त्तनमभियोगतश्च कन्यायाः-प्रतिपत्तिश्चतुर्थोऽध्यायः ।

गुणेति। यथोक्तगुणानां साम्ये, एको वरयिता वर इति। व्रियन्त इति वराः सर्व एवाभियोक्तारः, तेषां वर एको वरयिता वरणे साधुः, 'वर ईप्सायां' साधुकारिणि तृन्, तस्मिन्नभियोक्तरि वरयितृत्वविशिष्टे, श्रेष्ठता तस्यानुरागात्मकत्वात् ॥ ५९ ॥

इत्यभियोगतः कन्यायाः प्रतिपत्तिस्त्रिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधरविरचितायां जयमङ्गलाऽऽख्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे एकपुरुषाभियोगाः, प्रयोज्योपावर्तनमभियोगतश्च कन्यायाः प्रतिपत्तिश्चतुर्थोऽध्यायः।

## पञ्चमोऽध्यायः।

एवमनुरञ्जितां स्वयंवरप्रवृत्तां च गान्धर्वेण योजयेद्, विपरीतामासुरादिभिरिति विवाहयोगा उच्यन्ते—तत्र गान्धर्वेण या प्रायशो विविक्ता दृश्यन्ते, तस्या बहुसिद्धायाः सुकरमभिप्रेतदेशनयनं, या तु न प्रायशस्तस्यास्तावत्सहायसाध्यविधिमाह—

**प्राचुर्येण कन्याया विविक्तदर्शनस्यालाभे धात्रेयिकां प्रियहिताभ्यामुपगृह्योपसर्पेत् ॥ १ ॥**

प्राचुर्येणेति। धात्रेयिकां पुरुषप्रवृत्तामित्यर्थाद्, उपगृह्य प्रियहिताभ्यामुपसर्पेत्, तस्याः समीपे निसृष्टार्थां प्रेषयेत् ॥१॥

**सा चैनामविदिता नाम नायकस्य भूत्वा तद्गुणैरनुरञ्जयेत् ॥ २ ॥**

सा चेति। सा=उपसर्पिता, अविदिता नाम, नायकस्याविदितेव भूत्वा; कृतकप्रयोगपरिहारार्थं, तद्गुणैरिति। तस्य नायकस्य गुणैः॥२॥

**तस्याश्च रुच्यान्नायकगुणान्भूयिष्ठमुपवर्णयेत् ॥ ३ ॥**

तस्याश्चेति। रुच्यानभीष्टान् ॥ ३ ॥

**अन्येषां वरयितॄणां दोषानभिप्रायविरुद्धान्प्रतिपादयेद् मातापित्रोश्च गुणानभिज्ञतां लुब्धतां च चपलतां च बान्धवानाम् ॥४॥**

अभिप्रायविरुद्धानिति। यथा नेच्छति तानियं तथेत्यर्थः, गुणानभिज्ञतां लुब्धतां चेति। 'अगुणज्ञौ तव पितरौ लुब्धौ च, येन गुणवन्तमपहायान्यं धनिनं निर्गुणं गवेषयतः' इति प्रतिपादयेत् ॥ ४ ॥

याश्चान्या अपि समानजातीयाः कन्याः शकुन्तलाऽऽद्याः स्वबुद्ध्या भर्तारं प्राप्य संप्रयुक्ता मोदन्ते स्म ताश्चास्या निदर्शयेत्॥५॥

समानजातीया इति । मोदन्ते स्म=प्रमुदितवत्यः, नानुरूपोऽयं ममेति स्वबुद्ध्याऽवधारणं, न पित्रोरिच्छया, तथा कर्तव्ये शकुन्तलाऽऽदिकृताः कथाः कथयेत्, कौशिकः स्वतपोविघ्नार्थमिन्द्रसंप्रेषितामप्सरसं मेनकां दृष्ट्वा जातरागश्चकमे, सा च तद्वीर्यग्रहणात्तत्रैव कन्यां प्रसूय त्यक्त्वा चारण्ये दिवं जगाम, शकुन्तसंपातमध्यगतां च तां कन्यां कण्वर्षिः करुणयाऽऽश्रममानीय वर्धितवान्,यथाऽर्थं च शकुन्तलेति नाम चक्रे, सा च कालेन प्राप्तयौवना मृगयाप्रसङ्गादागतं दुष्यन्तं राजानं दृष्ट्वा स्वबुद्ध्या पाणिं ग्राहितवतीति, आदिशब्दाद्राजदारिकाः कन्या निदर्शयेत्, ॥ ५ ॥

महाकुलेषु सापत्नकैर्बाध्यमाना विद्विष्टा दुःखिताः परित्यक्ताश्च दृश्यन्तयायतिं चास्य वर्णयेत् ॥ ६ ॥

महाकुलेष्विति । महाकुलेषु च लोभात्पित्रा दत्ता नियतं सापत्नकैर्बाध्यन्ते, ततश्च विद्विष्टाः परिजनस्य परित्यक्ताः सत्यो दुःखिता दृश्यन्त इति दर्शयेद्, आयतिमुत्तरभाविनमर्थम्, भविष्यति चेति ॥ ६ ॥

सुखमनुपहतमेकचारितायां नायकानुरागं च वर्णयेत् ॥ ७ ॥

एकचारितायामिति । एकपत्नीत्वे सुखमनुपहतं वर्णयेत् सापत्न्यदुःखाभावाद्, नायकानुरागं चेत ॥ ७ ॥

समनोरथायाश्चास्या अपायं साध्वसं व्रीडां च हेतुभिरवच्छिन्द्यात् ॥ ८ ॥

समनोरथाया इति । अस्त्येवायमस्या मनोरथः, किं तु दोषान्पश्यतीत्युत्प्रेक्ष्याह—अपायमिति । विनाशं कुतश्चित्, साध्वसं=भयं,-गुरुजनाद्, व्रीडां परिजनेषु, हेतुभिरपायदर्शनैरपनयेत् ॥ ८ ॥

दूतीकल्पं च सकलमाचरेत् ॥ ९ ॥

दूतीकल्पं च पारदारिके वक्ष्यमाणं प्रतारणप्रकरणम्, ॥ ६ ॥

त्वामजानतीमिव नायको बलाद्ग्रहीष्यतीति तथा सुपरिगृहीता स्यादिति योजयेत् ॥ १० ॥

त्वामजानतीमिवेति । अजानतीमिव बलात्कारेण ग्रहीष्यति तदा न तव दोषः, तथेति । तेन प्रकारेण सुगृहीतं स्याद् वचनीयाभावादित्यमुं-चार्थं योजयेत् ॥ १० ॥

प्रतिपन्नामभिप्रेतावकाशवर्तिनीं नायकः श्रोत्रियागारादग्निमानाय्य कुशानास्तीर्य यथास्मृति हुत्वा च त्रिः परिक्रमेत ॥ ११ ॥

प्रतिपन्नामिति । अभ्युपगतार्थामेकान्तदेशवर्तिनीं, श्रोत्रियेति । तत्राग्नेः संस्कृतत्वादित्यर्थः, यथास्मृति स्वगृह्योक्तविधिना, त्रिः परिक्रमेत् कन्यामग्निं भ्रमयेत् ॥ ११ ॥

ततो मातरि पितरि च प्रकाशयेत् ॥ १२ ॥

प्रकाशयेत्, प्रणिधिना यथा नायकेनोढेति ॥ १२ ॥

अग्निसाक्षिका हि विवाहा न निवर्तन्त इत्याचार्यसमयः ॥ १३ ॥

न निवर्तन्त इति । नान्येनोह्यत इति दर्शयति, तेन धर्मविवाहेष्वग्निसंनिधानं कार्यमिति ॥ १३ ॥

दूषयित्वा चैनां शनैः स्वजने प्रकाशयेत् ॥ १४ ॥

दूषयित्वेति । अभिगम्येत्यर्थः, नोद्वाहितमात्रां, शनैः स्वजने प्रकाशयेत्, तस्या आत्मीयकरणार्थम् ॥ १४ ॥

यथा पितरौ तथाविधामपि न प्रयच्छत इति तदाह—

तद्बान्धवाश्च यथा कुलस्याघं परिहरन्तो दण्डभयाच्च तस्मा एवैनां दद्युस्तथा योजयेत् ॥ १५ ॥

तद्बान्धवा इति । नायिकाबान्धवाः, नायकोपगृहीतेत्यघं दोषं परिहरन्तो, यदि तस्मै न प्रतिपाद्यते तदा कुलं दुष्यत इति, दण्डभयाच्चेति । एवं चानुष्ठीयमानं यदि राजा शृणुयात्तदा दण्डं पातयेदिति, तस्मा एव नायकायैव, तथा योजयेत् प्रतिविदध्यान्नायकः ॥ १५ ॥

अनन्तरं च प्रीत्युपग्रहेण रागेण तद्बान्धवान्प्रीणयेदिति ॥१६॥

अनन्तरं च तत्प्रतिपादनस्य, प्रीत्युपग्रहेण मुकुरवस्त्रादिदानेन बाह्यानुरागेण चान्तरेण वा प्रीणयेत्तर्पयेद् ॥ १६ ॥

गान्धर्वेण विवाहेन वा चेष्टेत ॥ १७ ॥

गान्धर्वेण चेष्टेतेति । एवं गान्धर्वविधिरुक्तः ॥ १७ ॥

आन्तरस्थामधिकृत्याह—

अप्रतिपद्यमानायामन्तश्चारिणीमन्यां कुलप्रमदां पूर्वसंसृष्टां प्रीयमाणां चोपगृह्य तया सह विषह्यमवकाशमेनामन्यकार्यापदेशेनानाययेत् ॥ १८ ॥

अप्रतिपद्यमानायामिति । स्वयं पाणिग्रहणमकुर्वत्याम्, अन्तश्चारिणीमन्यामिति । अन्तरङ्गां कुलस्त्रियम्, पूर्वसंबद्धां पित्रोः सौजन्येन प्रीयमाणां नायकस्य, उपगृह्येति । द्रव्येण स्वीकृत्य, विषह्यमिति गम्यम्, अन्यकार्य्यापदेशेनेति । अन्यं कार्यमपदिश्यानाययेत्प्रणिधिना ॥ १८ ॥

ततः श्रोत्रियागारादग्निमिति समानं पूर्वेण ॥ १९ ॥

समानं पूर्वेणेति । श्रोत्रियागारादित्यादि पूर्ववदित्यर्थः, अग्न्याहरणमात्रेण गान्धर्वेण तुल्यमित्ययमेकः प्रकारः ॥ १९ ॥

आसन्ने च विवाहे मातरमस्यास्तदभिमतान्यवरदोषैरनुशयं ग्राहयेत् ॥ २० ॥

आसन्ने चास्या विवाहेऽन्येन वरेण सह, तदभिमतान्यवरदोषैरिति । नायिकामातुरभिमतो योऽन्यो वरस्तस्य दोषैः क्लैव्यपतनादिभिस्तामनुशयं ग्राहयेत् ॥ २० ॥

ततस्तदनुमतेन प्रातिवेश्याभवने निशि नायकमानाय्य श्रोत्रियागारादग्निमिति समानं पूर्वेण ॥ २१ ॥

तत इति । अनुशयग्रहणादूर्ध्वं, तदनुमतेन = मातुरभिप्रायेण, प्रातिवेश्याभवन इति । तस्या द्रव्येणोपगृहीतत्वादिति द्वितीयः ॥ २१ ॥

भ्रातरमस्या वा समानवयसं वेश्यासु परस्त्रीषु वा प्रसक्तमसुकरेण साहाय्यदानेन प्रियोपग्रहैश्च सुदीर्घकालमनुरञ्जयेदन्ते च स्वाभिप्रायं ग्राहयेत् ॥ २२ ॥

अस्या भ्रातरं तुल्यवयसमेकान्तप्रसक्तमसुकरेण कष्टसाध्येन दुःसाध्यस्त्रीसंपादनादिना, प्रियोपग्रहैरिति । सामदानैरन्यैर्वेत्यनुरञ्जनविधिः, स्वाभिप्रायमिति । त्वद्भगिनीं परिणेतुमिच्छामि ॥ २२ ॥

प्रायेण हि युवानः समानशीलव्यसनवयसां वयस्यानामर्थे जीवितमपि त्यजन्ति ततस्तेनैवान्यकार्यात्तामानाययेद् विषह्यं सावकाशमिति समानं पूर्वेण ॥ २३ ॥

वयस्यानामिति । मित्राणामर्थे जीवितमपि परित्यजन्ति किमु भगिनीं न प्रयच्छन्ति, तत इति । प्रदानादूर्ध्वं, तेनैवेति । भ्रात्रा, अन्यकार्यादिति । ल्यब्लोपे पञ्चमी, अन्यकार्यमुद्दिश्येत्यर्थः, तत्रापि नायिकामानाययेदिति तृतीयः ॥ २३ ॥

सुप्तप्रमत्तोपगमात्पैशाचः, तमधिकृत्याह—

अष्टमीचन्द्रिकाऽऽदिषु च धात्रेयिका मदनीयमेनां पाययित्वा किं चिदात्मनः कार्यमुद्दिश्य नायकस्य विषह्यं देशमानयेत् ॥२४॥

अष्टमीचन्द्रिकाऽऽदिष्विति। अष्टमीचन्द्रिकाऽऽदिषु, तत्र दिवसमुपोष्य पूजापुरःसरं रात्रिजागरणमाचन्द्रोदयम्, अनन्तरं तां धात्रेयिका नायकप्रसक्ता मदनीयं सुराऽऽदिकं पाययित्वा, किंचिदात्मनः कार्यमिति। अङ्गुलीयकं विस्मृत्यागताऽस्मि तत्र गच्छाव इत्युपदिश्यानयेदित्यर्थः ॥२४

तत्रैनां मदात्संज्ञामप्रतिपद्यमानां दूषयित्वेति समानं पूर्वेण ॥२५॥

तत्रेति। विषह्यदेशे, संज्ञां=चेतनां, दूषयित्वेति। दूषयित्वा चैनां शनैः स्वजनेषु प्रकाशयेत्, तद्बान्धवाश्चेत्यादि पूर्ववदित्येकः प्रकारः॥२५॥

सुप्तां चैकचारिणीं धात्रेयिकां वारयित्वा संज्ञामप्रतिपद्यमानां दूषयित्वेति समानं पूर्वेण ॥ २६ ॥

सुप्तां चैकचारिणीमिति। एकाकिनीं, तत्र सुप्तेति द्वितीयः, अत्राग्न्याहरणादिकं नास्ति, अधर्मत्वादिति ॥ २६ ॥

प्रसह्याहरणाद्राक्षसस्तमधिकृत्याह—

ग्रामान्तरमुद्यानं वा गच्छन्तीं विदित्वा सुसंभृतसहायो नायकस्तदा रक्षिणो वित्रास्य हत्वा वा कन्यामपहरेदिति विवाहयोगाः ॥ २७ ॥

ग्रामान्तरेति। स्वस्माद्ग्रामादन्यं ग्राम, सुसंभृतसहाय इति। सुसंनद्धबहुसहायः, रक्षिणः=कन्यारक्षकान्, वित्रास्य, ते यथा त्यक्त्वा पलायन्ते, हत्वा वा प्रहारैः, कन्यामपहरेत्, कृष्णवद्रुक्मिणीम्, अत्राप्यधर्मत्वान्नाग्न्याहरणादि, स्वगृहमेव च नीत्वा दूषणमिति, न किञ्चिदतिदिष्टं, विवाहयोगा गान्धर्वादीनां विषयाः ॥ २७ ॥

अष्टानां विवाहानां मध्ये किमपेक्षया कस्य प्राधान्यमित्याह—

पूर्वः पूर्वः प्रधानं स्याद्विवाहो धर्मसंस्थितेः ।

पूर्वाभावे ततः कार्यो यो य उत्तर उत्तरः ॥ २८ ॥

पूर्वः पूर्व इति। धर्मसंस्थितेरिति। धर्मतो व्यवस्थानादित्यर्थः, तत्र पूर्वे धर्म्याश्चत्वारः, अस्मिन्दर्शने गान्धर्वाद् ब्राह्मादयः प्रधानं, तत्रापि केचित्तरतमभेदेन पूर्वः पूर्व इत्याहुः, गान्धर्वो ह्यासुरात्, षडित्येकस्मिन्पक्षे एतौ द्वावपि धर्म्यौ, किं तु यथा पूर्वे न तथा परतः, यथा च गान्धर्वो न तथाऽऽसुर इति।

केचिद् 'आसुरोऽपि पैशाचात्तथा धर्मत्वात्, पैशाचोऽधर्मोऽपि राक्षसात्प्रधानं राक्षसस्य साहसकर्मत्वाद्, यो य उत्तर उत्तर इति। अन्यगत्या अन्य इत्याहुः ॥ २८ ॥

गान्धर्व एव प्रधानमित्याह—

व्यूढानां हि विवाहानामनुरागः फलं यतः ।
मध्यमोऽपि हि सद्योगो गान्धर्वस्तेन पूजितः ॥ २९ ॥

व्यूढानामिति । कृतानामनुरागः फलम्, अन्यथाऽनुरागाभावे निष्फलः स्याद्, मध्यमोऽपि हि षडित्येकस्मिन्पक्षे, सद्योग इति । शोभनोऽनुरागात्मको योगोऽस्येति, तेन च सद्योगेन गान्धर्व इत्युच्यते ॥ २९ ॥

एवं च कृत्वाऽस्य प्राधान्यमित्याह—

सुखत्वादबहुक्लेशादपि चावरणादिह ।
अनुरागात्मकत्वाच्च गान्धर्वः प्रवरो मतः ॥ ३० ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे विवाहयोगाः पञ्चमोऽध्यायः ।

सुखत्वादिति । सुखहेतुत्वाद्, अबहुक्लेशात्, प्रायेणेति, प्रायशो न यत्नसाध्य इत्यर्थः, अवरणाद्=वरणसंविधानाभावात् ॥ ३० ॥

इति विवाहयोगा एकत्रिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे विवाहयोगाः पञ्चमोऽध्यायः ।

[ समाप्तं चेदं कन्यासंप्रयुक्तकं नाम तृतीयमधिकरणम् ]

# भार्याऽधिकारिकं नाम चतुर्थमधिकरणम् ।

## प्रथमोऽध्यायः ।

कन्या पुरुषेण संयुक्ता भार्य्या संवृत्ता तया पुंसि कथं? वर्तितव्यमित्यतो भार्याऽधिकारिकमुच्यते, तच्च कन्यासंप्रयुक्तकशेषभूतम्, अन्यथा विशेषाधिकाननुष्ठानात्संयुक्ताऽप्यसंयुक्तकल्पैव स्याद्, भार्या च द्विविधा-एकचारिणी सपत्निका च, तत्र प्राधान्येनैकचारिणी वृत्तमुच्यते—

भार्यैकचारिणी गूढविश्रम्भा देववत्पतिमानुकूल्येन वर्तेत ॥१॥

भार्येति । गूढविश्रम्भा, इतरस्याः कपटव्यवहारः, सम्भावितत्वाद्देववद्, 'भर्ता तु देवता स्त्रीणाम्' इति न्यायाद्, आनुकूल्येन चित्तानुविधानेनैव, वर्तेतेत्यन्तर्भावितो ण्यर्थः, शरीरस्थितिविषयमेतत् ॥ १ ॥

वृत्तं सूचयति—

तन्मतेन कुटुम्बचिन्तामात्मनि संनिवेशयेत् ॥ २ ॥

तन्मतेनेति । यदा तु नायकेनानुज्ञाता, कुटुम्बचिन्तां गृहचिन्ताम्, बाह्यवस्तुविषयमेतद्, आत्मनि संनिवेशयेद् आत्माधीनां कुर्याद्, वृत्तमुभयमुत्तरत्र यथायोगं योज्यम् ॥ २ ॥

तत्र गृहप्रतिबद्धत्वाद् वृत्तस्य गृहचिन्तामाह—

वेश्म च शुचि सुसंमृष्टस्थानविरचितविविधकुसुमं संश्लक्ष्णभूमितलं हृद्यदर्शनं त्रिषवणाचरितबलिकर्म पूजितदेवायतनं कुर्यात् ॥ ३ ॥

वेश्म चेति । कुर्यादित्यनेन सम्बन्धः, सुसंमृष्टं सुशोधितं स्थानेषु भोग्येषु विरचितानि विप्रकीर्णानि विविधानि कुसुमानि यस्य, संश्लक्ष्णभूमितलमिति । मसृणभूतलं, हृद्यं=हृदयप्रियं, दर्शनं यस्य, त्रिषवणं त्रिसंध्यमाचरितं कारितं बलिकर्म यत्र, देवताऽऽयतनं देवगृहं तत्पूजितं यस्मिन् ॥ ३ ॥

न ह्यतोऽन्यद् गृहस्थानां चित्तग्राहकमस्तीति गोनर्दीयः ॥४॥

अतोऽन्यदिति । यथोपवर्णितवेश्मनः, चित्तग्राहकं=मनोहारि, गोनर्दीय इति । पूजाऽर्थमधिकरणेऽधिकृतत्वात् ॥ ४ ॥

तत्र वृत्तद्वयं दर्शयन्नाह—

गुरुषु मन्त्रवश्येषु भृत्यवर्गेषु नायकभगिनीषु तत्पातिषु च यथाऽर्हं प्रतिपत्तिः ॥ ५ ॥

गुरुष्विति । श्वशुरादिषु, नायकभगिनीषु, ननान्दृषु, तत्पतिषु=ननान्दृपतिषु, यथाऽर्हं प्रतिपत्तिरिति । यथा यस्यां प्रतिपत्तिर्वाक्कायाभ्यामनुष्ठानम् ॥ ५ ॥

परिपूतेषु च हरितशाकवप्रानिक्षुस्तम्बाञ्जीरकसर्षपाजमोदशतपुष्पातमालगुल्मांश्च कारयेत् ॥ ६ ॥

परिपूतेषु चेति । पवित्रेषु, हरितं धान्यकार्द्रकादि, शाकं पालङ्क्यादि च, एषां वप्रान्केदारान्, इक्षुस्तम्बानिक्षुविटपान्, जीरकादीञ्शतपुष्पापर्यन्तान् कारयेत्, तत्राजमोदोऽनेनैव नाम्ना प्रतीतः, तमालगुल्मांस्तमालविटपान् ॥ ६ ॥

कुब्जकामलकमल्लिकाजातीकुरण्टकनवमालिकातगरनन्द्यावर्तजपागुल्मानन्यांश्च बहुपुष्पान्बालकोशीरकपातालिकांश्च वृक्षवाटिकायां च स्थण्डिलानि मनोज्ञानि कारयेत् ॥ ७ ॥

यत्र कुब्जकादीनां गुल्मान्, तगरः=पिण्डीतगरः, जपा=ओड्रपुष्पम्, बहुपुष्पा ये निर्भरं पुष्प्यन्ति, बालकोशीरयोः, पातालिका=केदारः, स्थण्डिलान्यवपट्टकानि ॥ ७ ॥

मध्ये कूपं वापीं दीर्घिकां वा खानयेत् ॥ ८ ॥

वापीं समचतुरस्रां पुष्करिणीं, दीर्घिकामायतचतुरस्रां, खानयेद्वास्तुवशात् ॥ ८ ॥

भिक्षुकीश्रमणाक्षपणाकुलटाकुहकेक्षणिकामूलकारिकाभिर्न संसृज्येत ॥ ९ ॥

भिक्षुकी=भिक्षणशीला, श्रमणा क्षपणा प्रव्रजिता रक्तपटिका च, कुलटा=प्रच्छन्नं खण्डितचारित्रा, कुहका=कौतुककारिका, ईक्षणिका=विप्रश्निका, मूलकारिका वशीकरणेन मूलेन या कर्म करोति, ताभिर्न संसृज्येत, भर्तुर्विकल्पहेतुत्वात् ॥ ९ ॥

भोजने रुचितमिदमस्मै द्वेष्यमिदं पथ्यमिदमपथ्यमिदमिति च विद्यात् त्यागोपादानार्थम् ॥ १० ॥

भोजने चेति । भोजनकाले रुचितादीन विद्यात् ॥ १० ॥

स्वरं बहिरुपश्रुत्य भवनमागच्छतः किं कृत्यमिति ब्रुवती सज्जा भवनमध्ये तिष्ठेत् ॥ ११ ॥

किं कृत्यमिति । आदिश्यमानकार्यस्यानुष्ठानबुद्ध्या, सज्जा=सावधाना भवनमध्येऽङ्गनके ॥ ११ ॥

परिचारिकामपनुद्य स्वयं पादौ प्रक्षालयेत् ॥ १२ ॥

परिचारिकामिति । पादप्रक्षालनोद्यतामपनुद्यापास्य ॥ १२ ॥

नायकस्य च न विमुक्तभूषणं विजने संदर्शने तिष्ठेत् ॥ १३ ॥

संदर्शन इति । अग्रतो न तिष्ठेद्, अकृतशरीरसंस्कारां दृष्ट्वा वैराग्यमपि स्यात् ॥ १३ ॥

अतिव्ययमसद्व्ययं वा कुर्वाणं रहसि बोधयेत् ॥ १४ ॥

अतिव्ययमुचितव्ययादधिकम्, असद्व्ययं यदनर्थिजने प्रतिपाद्यते, रहसि बोधयेद्, लोकमध्ये हि लज्जित एव स्यात् ॥ १४ ॥

आवाहे विवाहे यज्ञे गमने सखीभिः सह गोष्ठीं देवताऽभिगमनमित्यनुज्ञाता कुर्यात् ॥ १५ ॥

आवाहे=वरगृहे, विवाहे,=कन्यागृहे, गोष्ठीं सम्भूय पानभोजनं, देवताऽभिगमनं, द्रष्टुमनुज्ञाता कुर्याद्, अन्यथा स्वैरिणीत्याशङ्क्येत ॥ १२ ॥

सर्वक्रीडासु च तदानुलोम्येन प्रवृत्तिः ॥ १६ ॥

सर्वक्रीडासु चेति । यक्षरात्र्यादिषु लोके वृत्तासु तच्चित्तानुविधानेन प्रवृत्तिः ॥ १६ ॥

पश्चात्संवेशनं पूर्वमुत्थानमनवबोधनं च सुप्तस्य ॥ १७ ॥

पश्चात्संवेशनं, शयितस्य नायकस्य, पूर्वमुत्थानमनुत्थितान्नायकादहनि यावन्न प्रतिबुध्येत ॥ १७ ॥

महानसं च सुगुप्तं स्याद्दर्शनीयं च ॥ १८ ॥

महानसं सुगुप्तं स्याद्, यथाऽन्योऽत्र परकीयो न विशेद्, दर्शनीयं चान्धकाराभावात् ॥ १८ ॥

नायकापचारेषु किंचित्कलुषिता नात्यर्थं निर्वदेत् ॥ १९ ॥

नायकापचारेष्विति । नायकापराधेषु, किञ्चित्कलुषिता धीरत्वख्यापनार्थं निर्वदेत्, पुनर्मा कार्षीरिति, तत्रापि नात्यर्थं मा भूद्वैलक्ष्यमस्येति ॥ १९ ॥

साधिक्षेपवचनं त्वेनं मित्रजनमध्यस्थमेकाकिनं वाऽप्युपालभेत न च मूलकारिका स्यात् ॥ २० ॥

मित्रजनमध्यस्थं यदि कार्यवशात्साधिक्षेपवचनमुपालभेत, न च मूलकारिका स्यात् ॥ २० ॥

सत्स्वप्यपचारेषु युक्तिमाह--

न ह्यतोऽन्यदप्रत्ययकारणमस्तीति गोनर्दीयः ॥ २१ ॥

न ह्यत इति । मूलकर्मणः, अप्रत्ययकारणम् = अविश्वासकारणं, गोनर्दीयमतमनुमतमप्रतिषिद्धत्वात् ॥ २१ ॥

दुर्व्याहृतं दुर्निरीक्षितमन्यतो मन्त्रणं द्वारदेशावस्थानं निरीक्षणं वा निष्कुटेषु मन्त्रणं विविक्तेषु चिरमवस्थानमिति वर्जयेत् ॥ २२ ॥

दुर्व्याहृतं=दुर्मन्त्रितं, दुर्निरीक्षितं=अस्निग्धवीक्षणम् , अन्यतो मन्त्रणं=तिर्यङ्मुखं कृत्वा भाषणम्, एतात्त्रितयं वैराग्यजनकं, द्वारदेशावस्थानं, गृहद्वारस्थितिर्निरीक्षणं च, तदुभयमयत्नसाध्यत्वसूचकं, निष्कुटेष्विति । गृहवाटिकायां निर्गत्य कया चित्सह मन्त्रणं, विविक्तेषु = निर्जनेषु गृहप्रदेशेषु, चिरमवस्थानं, तदुभयमसद्विकल्पजनकं भवेत् ॥ २२ ॥

स्वेददन्तपङ्कदुर्गन्धांश्च बुध्येतेति विरागकारणम् ॥ २३ ॥

स्वेदादीन्बुध्येतापनयनार्थं, दन्तपङ्कः=दन्तमलः, विरागकारणमिति । वैराग्यजनकं भवेद्भर्तुः ॥ २३ ॥

बहुभूषणं विविधकुसुमानुलेपनं विविधाङ्गरागसमुज्ज्वलं वास इत्याभिगामिको वेषः ॥ २४ ॥

नानावर्णं कालवशाद्यद्यद्विराजते वर्णतस्तत्तदुपादेयमिति, आभिगामिको नायकाभिगमनप्रयोजनकः, तदा हि बहुभूषणादिभिः कालोपयिकेन च रक्तवाससा प्रसाधिता मनोहरेति ॥ २४ ॥

प्रतनुश्लक्ष्णाल्पदुकूलता परिमितमाभरणं सुगन्धिता नात्युल्वणमालेपनं तथा शुक्लान्यन्यानि पुष्पाणीति वैहारिको वेषः ॥ २५ ॥

प्रतनु श्लक्ष्णमल्पं सूक्ष्मं यत्संयन्तुं शक्यं वस्त्रं, परिमितं कर्णयोर्ग्रीवायां च, नात्युद्धतं वर्णविन्यासाभ्यां चेति, वैहारिको, यात्राक्रीडाविहारप्रयोजनकः ॥ २५ ॥

नायकस्य व्रतमुपवासं च स्वयमपि करणेनानुवर्तेत वारितायां च नाहमत्र निर्बन्धनीयेति तद्वचसो निवर्तनम् ॥ २६ ॥

व्रतं नियमं स्वयमनुकरणेनानुवर्तेत भक्तिख्यापनार्थं, वारितायां-नायकेन व्रतोपवासाभ्यां, नाहमत्र निर्बन्धनीया निषेधनीयेति वाक्येन नायकवचसो निवर्तनं भक्तेर्नाख्यार्थम् ॥ २६ ॥

मृद्विदलकाष्ठचर्मलोहभाण्डानां च काले समर्घग्रहणम् ॥ २७ ॥

मृद्भाण्डं=घटादि, विदलभाण्डं=पिटकादि, काष्ठभाण्डं=पीठखट्वाऽऽदि, लोहभाण्डं=ताम्रादिमयं, काले=इत्युपयोगकाले, तत्रापि यत् समर्घं प्राप्यते ॥ २७ ॥

तथा लवणस्नेहयोश्च गन्धद्रव्यकटुकभाण्डौषधानां च दुर्लभानां भवनेषु प्रच्छन्नं निधानम् ॥ २८ ॥

लवणं=सैन्धवादि, स्नेहः=घृततैलवसामज्जानः, गन्धद्रव्यं=तगरादि, कटुकं=तुम्ब्यादि, औषधं=द्विपञ्चमूलादि, दुर्लभा ये न तत्रत्याः, अपि तु दुःखेन लभ्यन्ते, प्रच्छन्नं निधानं यत्र तानि भवन्ति, न विनश्यन्ति वा ॥ २८ ॥

मूलकालुकपालङ्कीदमनकाम्रातकैर्वारुकत्रपुसवार्ताककूष्माण्डालाबुसूरणशुकनासास्वयंगुप्तातिलपर्णिकाऽग्निमन्थलशुनपलाण्डुप्रभृतीनां सर्वौषधीनां च बीजग्रहणं काले वापश्च ॥ २९ ॥

मूलकादीनां च बीजग्रहणमिति संबन्धः, एर्वारुकः=कर्कटिका, अलाबुः=तुम्बी, सूरणः=कन्दः, शुकनासा=सर्वतोभद्रा, स्वयंगुप्ता=कपिकच्छूः, तिलपर्णिका=काश्मरी, अग्निमन्थः=अनेनव नाम्ना प्रथितः, पलाण्डुः=लशुनाकारो लोहितः ॥ २९ ॥

स्वयं च सारस्य परेभ्यो नाख्यानं भर्तृमन्त्रितस्य च ॥ ३० ॥

सारस्य=द्रव्यस्य, परेभ्यो नाख्यानं 'धनायुषी गुप्ततमे कार्ये' इति वचनाद्, भर्तृमन्त्रितस्य च नाख्यानं मा ज्ञासीद्भिन्नरहस्येति ॥ ३० ॥

समानाश्च स्त्रियः कौशलेनोज्ज्वलतया पाकेन मानेन तथोपचारैरतिशयीत ॥ ३१ ॥

समानाः=तुल्याभिजनाः, कौशलेन कलासु, मानेन मनस्वितया, उपचारैर्भर्तरि क्रियमाणैरुपचारैरतिशयीतात्मनोऽधिकत्वख्यापनार्थम् ३१ ॥

सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्यात् ॥ ३२ ॥

संख्यायेति । आयमुखाद् वर्षेणैतावदुत्पद्यत इति व्ययं कुर्यात्, तदनुरूपम्=आयानुरूपं, कालयापनार्थम् ॥ ३२ ॥

भोजनावशिष्टाद्रोरसात् सारग्रहणं तथा तैलगुडयोः, कर्पासस्य च सूत्रकर्तनं, सूत्रस्य वानं, शिक्यरज्जुपाशवल्कलसंग्रहणं, कुट्टनकण्डनावेक्षणम्, आचाममण्डतुषकणकुट्यङ्गाराणामुपयोजनम्, भृत्यवेतनभरणज्ञानं, कृषिपशुपालनचिन्तावाहनविधानयोगाः, मेषकुक्कुटलावकशारिकापरभृतमयूरवानरमृगाणामवेक्षणं, दैवसिकायव्ययपिण्डीकरणमिति च विद्यात् ॥ ३३ ॥

सारग्रहणमिति । यज्ञादिषु ब्राह्मणान्भोजयित्वा; यदवशिष्टं तस्मात् सारग्रहणं, मथितं चापरं भवति, तैलगुडयोः सारग्रहणं सर्षपेक्षुकाण्डपीडनात्, कर्पासस्य सूत्रकरणं, वानमाच्छादनार्थं, शिक्यस्य भाण्डारोपणार्थं, रज्ज्वा जलोद्धरणार्थम्, पाशस्य पशुबन्धनार्थं, वल्कलस्य रज्ज्वाद्यर्थं संग्रहणं, कुट्टनं धान्यानां, कण्डनं तण्डुलानां, तयोरवेक्षणं परीक्षणम्, आचामस्य मण्डस्य च पानार्थं चेटिकादिषूपयोजनं, तुषाणां धारणं कुड्यलेपनादिषु, कणानां क्षुद्रतण्डुलानां कुक्कुटाद्यर्थं, कुटीनां तण्डुलपरागाणां गोमेषाद्यर्थम्, अङ्गाराणां महानसादुत्पन्नानां लोहभाण्डकरणादिषु, भृत्या ये बहिरन्तःकर्मसु नियुक्ताः, तेषां वेतनं प्रतिमासं प्रतिवर्षं वा यो निबन्धः, भरणं प्रतिदिनं भक्तकं तयोर्ज्ञानं देशकालकर्मवशेन, कृषिपशुपालनचिन्तेति । कर्षणवापनरोपणादिप्रत्यवेक्षणं कृषिचिन्ता, मुष्टिव्याधिचिकित्साऽऽद्यनुष्ठानचिन्ता पशुपालनचिन्ता, वाहनविधानयोगा अश्वादीनां विधानयोजनम्, मेषादीनां क्रीडनाथ नायकपरिगृहीतानामवेक्षणमशनपानरक्षणैः, प्रत्यहायव्ययस्य पिण्डीकरणमेकीकरणमिति, विद्यादिति, सारग्रहणादि ॥ ३३ ॥

तज्जघन्यानां च जीर्णवाससां सञ्चयस्तैर्विविधरागैः शुद्धैर्वा कृतकर्मणां परिचारकाणामनुग्रहो मानार्थेषु च दानमन्यत्र वोपयोगः॥

तज्जघन्यानामिति । नायकोपभुक्तानां, तैः सञ्चितैः, कृतकर्मणामिति । यैः कर्म कृतम्, मानार्थेषु चेति । मान एवार्थो येषां, ते हि तैर्दत्तैर्मानिता भवन्ति, अन्यत्र वेति । दीपवर्त्यादिषु ॥ ३४ ॥

सुराकुम्भीनामासवकुम्भीनां च स्थापनं तदुपयोगः क्रयविक्रयायव्ययावेक्षणम् ॥ ३५ ॥

स्थापनमिति । प्रच्छन्नं, तदुपयोग इति । कार्यवशात्सुराऽऽदीनामुपयोजनं, क्रयविक्रयौ समर्घमहार्घतया, आयव्ययावल्पमहत्तयाऽवेक्षेत ॥ ३५ ॥

नायकमित्राणां च स्रगनुलेपनताम्बूलदानैः पूजनं न्यायतः ॥ ३६ ॥

न्यायत इति । गुणजातिवयोऽपेक्षया, पूजनं स्वीकरणार्थं परिचयधर्मार्थं भक्तिख्यापनार्थं च ॥ ३६ ॥

श्वश्रूश्वशुरपरिचर्या तत्पारतन्त्र्यमनुत्तरवादिता परिमिताप्रचण्डालापकरणमनुच्चैर्हासः ॥ ३७ ॥

तत्पारतन्त्र्यं तद्वचनानुष्ठानाद् , अनुत्तरवादिता तयोः प्रत्युत्तरं न देयम्, परिमिताप्रचण्डालापकरणमिति । तयोरग्रतः स्वल्पं च मृदु च ब्रूयाद् , अनुच्चैर्हासस्तत्समीपे ॥ ३७ ॥

तत्प्रियाप्रियेषु स्वप्रियाप्रियेष्विव वृत्तिः ॥ ३८ ॥

तत्प्रियाप्रियेष्विति । तयोरिष्टानिष्टेषु, स्वप्रियाप्रियेष्विव वृत्तिर्यथाऽऽत्मनः प्रियाप्रियौ भवतः ॥ ३८ ॥

भोगेष्वनुत्सेकः ॥ ३९ ॥

भोगेषु महत्स्वपि सत्स्वनुत्सेको लाघवपरिहारार्थं चित्तविकारो न कर्तव्यः ॥ ३९ ॥

परिजने दाक्षिण्यम् ॥ ४० ॥

परिजने नायकस्य सर्वदा दाक्षिण्यमुपसंग्रहार्थम् ॥ ४० ॥

नायकस्यानिवेद्य न कस्मै चिद्दानम् ॥ ४१ ॥

अनिवेद्य न कस्मैचिद्दानं, सपुत्राया अपि स्वातन्त्र्यपरिहारार्थम् ॥ ४१ ॥

स्वकर्मसु भृत्यजननियमनमुत्सवेषु चास्य पूजनमित्येकचारिणीवृत्तम् ॥ ४२ ॥

स्वकर्मस्विति । यो यत्र नियुक्तस्तत्र तस्य नियमनं कर्मानतिपातनार्थम्, अस्येति । भृत्यजनस्य, पूजनं पानभोजनादिना ॥ ४२ ॥

एकचारिणीवृत्तं द्वात्रिंशं प्रकरणम् ॥

एकचारिण्याः संनिहिते नायके वृत्तमुक्तम्, प्रोषिते तु तद्वृत्तशेषभूता प्रवासचर्याऽऽरभ्यते—

प्रवासे च मङ्गलमात्राभरणा देवतोपवासपरा वार्तायां स्थिता गृहानवेक्षेत ॥ ४३ ॥

प्रवासे चेति। मङ्गलमात्रमाभरणं शङ्खवलयादिकं यस्याः, नायकाभिवृद्धये देवतामुद्दिश्य य उपवासस्तत्परा, परग्रहणं कादाचित्कत्वनिवृत्यर्थं, वार्तायां स्थितेति। नायकवार्ताऽन्वेषणपरेत्यर्थः, ॥ ४३ ॥

गृहानवेक्षेतेति तात्स्थ्यात्कर्माण्याह—

शय्या च गुरुजनमूले ॥ ४४ ॥

गुरुजनमूल इति। श्वश्रूजनसमीपे, शयनमात्मविशुद्ध्यर्थम् ॥ ४४ ॥

तदभिमता कार्यनिष्पत्तिः ॥ ४५ ॥

तदभिमतेति। गुरुजनाभिमतस्य कार्यस्यानुष्ठानमानुकूल्यख्यापनार्थम् ॥ ४५ ॥

नायकाभिमतानां चार्थानामर्जने प्रतिसंस्कारे च यत्नः ॥४६॥

अर्जने प्रतिसंस्कारे च यत्न इति। नायकस्य येऽभिमताः, न च तेनापवर्जितास्तेषाम् ॥ ४६ ॥

नित्यनैमित्तिकेषु कर्मसूचितो व्ययः ॥ ४७ ॥

नित्यं कर्माशनपानादि, नैमित्तिकं कर्म बालकोत्सवादि, उचितो व्ययो यावता विधिः संपद्यते, नायककल्पितो वा ॥ ४७ ॥

तदारब्धानां च कर्मणां समापने मतिः ॥ ४८ ॥

तदारब्धानामिति। नायकारब्धानां देवकुलोद्यानादिकर्मणां समापने मतिः, येन प्रकारेण निष्पद्यते तथा कार्यमित्यर्थः ॥ ४८ ॥

ज्ञातिकुलस्यानभिगमनमन्यत्र व्यसनोत्सवाभ्याम् ॥ ४९ ॥

ज्ञातिकुलस्य=पितृगृहस्य, अनभिगमनं, कारणं विना तद्गमनं हि विनाशकारणं स्त्रीणां, कस्य चिद् व्यसने पुत्रशोकादौ, उत्सवे विवाहादौ यातव्यम् ॥ ४९ ॥

तत्रापि नायकपरिजनाधिष्ठिताया नातिकालमवस्थानमपरिवर्तितप्रवासवेषता च ॥ ५० ॥

नायकपरिजनाधिष्ठिताया गमनमात्मविशुद्ध्यर्थं, नातिकालमवस्थानमिति। नातिचिरकालमवस्थानं श्वशुरकोपभयाद्, अपरिवर्तितप्रवासवेषता चेति। उत्सवमधिकृत्येदं वचनम् ॥ ५० ॥

गुरुजनानुज्ञातानां करणमुपवासानाम् ॥ ५१ ॥

गुरुजनानुज्ञातानां करणं, स्वातन्त्र्यपरिहारार्थम् ॥ ५१ ॥

परिचारकैः शुचिभिराज्ञाऽधिष्ठितैरनुमतेन क्रयविक्रयकर्मणा सारस्यापूरणं तनूकरणं च शक्त्या व्ययानाम् ॥ ५२ ॥

शुचिभिरिति । अर्थोपधाशुद्धैरात्माधिष्ठितैर्न स्वतन्त्रैः, अनुमतेन युक्तेन, क्रयवि- यकर्मणेति । वणिज्याधर्मेण, सारस्यापूरणं द्रव्यस्याभिबर्धनं, तनूकरणं चेति । कृशीकरणं, शक्त्या व्ययानामिति । कार्यवशाद्यदि व्ययस्य महत्ता स्यात्तदा कृशं सारं कुर्यादित्यर्थः ॥५२॥

आगते प्रकृतिस्थाया एव प्रथमतो दर्शनं दैवतपूजनमुपहाराणां चाहरणमिति प्रवासचर्या ॥ ५३ ॥

आगते चेति । प्रवासात्प्रत्यागते नायके, प्रकृतिस्थाया इति । प्रवासवेषावस्थाया एव प्रथमतो दर्शनं स्यात्स्वरूपख्यापनार्थं, न पुनरागत इत्यात्मानं प्रसाधयेद्, देवतापूजनं सह परिजनेन, उपहाराणाम् = उपयाचितकानाम्, आहरणं दानं देवताभ्यः ॥ ५३ ॥

प्रकरणद्वयोपसंग्रहार्थमाह—

भवतश्चात्र श्लोकौ—

सद्वृत्तमनुवर्तेत नायकस्य हितैषिणी ।
कुलयोषा पुनर्भूर्वा वेश्या वाऽप्येकचारिणी ॥ ५४ ॥

सदिति । शोभनं वृत्तं प्रत्यक्षे प्रोषिते च, यदुक्तं-'हितैषिणी न कपटेनानुवर्तनाम्, इति दर्शनार्थम्, अस्मिन्वृत्ते नायिकात्रयमधिकृत्याह— कुलयोषेति । कन्यैवोढा कुलयोषिदित्युच्यते, ॥ ५४ ॥

वृत्तानुवर्तने फलमाह—

धर्ममर्थं तथा कामं लभन्ते स्थानमेव च ।
निःसपत्नं च भर्तारं नार्यः सद्वृत्तमाश्रिताः ॥ ५५ ॥

इति श्रीवात्स्यायनीये कामसूत्रे भार्याऽधिकारिके चतुर्थेऽधिकरणे एकचारिणीवृत्तं प्रवासचर्या च प्रथमोऽध्यायः ।

धर्ममिति । स्थानं = प्रतिष्ठानं, निःसपत्नं=निष्कण्टकम् ॥५५॥

इति प्रवासचर्य्या त्रयस्त्रिंशं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां भार्य्याऽधिकारिके चतुर्थेऽधिकरण एकचारिणीवृत्तं प्रवासचर्य्या च प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

सैव यदा सपत्नीभिर्युज्यते, तदा कथं वर्तितव्यमिति ? सपत्नीषु ज्येष्ठावृत्तमुच्यते, तत्र सापत्न्यकारणमाह—

जाड्यदौःशील्यदौर्भाग्येभ्यः प्रजाऽनुत्पत्तेराभीक्ष्ण्येन दारिकोत्पत्तेर्नायकचापलाद्वा सपत्न्यधिवेदनम् ॥ १ ॥

जाड्येति । जाड्यात्=शाठ्याद्, दौःशील्याद्=चारित्रखण्डनात्, प्रजाऽनुत्पत्तेर्वन्ध्यत्वाद्, आभीक्ष्ण्येनेति । पौनःपुन्येन दुहितुरुत्पादादित्येतानि स्त्रीगतानि कारणानि, नायकचापलादिति । नायकस्येन्द्रियलौल्यात्, सपत्न्यधिवेदनं सपत्नीलाभः ॥ १ ॥

तदादित एव भक्तिशीलवैदग्ध्यख्यापनेन परिजिहीर्षेत् ॥२॥

तदिति । तस्मादादित एवादावेव यदवोढा भक्तिशीलवैदग्ध्यख्यापनेन यथाक्रमं जाड्यादित्रयं परिहर्तुमिच्छेद्, नायकचापलं वैदग्ध्यख्यापनेनैव ॥ २ ॥

प्रजाऽनुत्पत्तौ च स्वयमेव सापत्न्ये चोदयेत् ॥ ३ ॥

प्रजाऽनुत्पत्तौ स्वयमेवान्यथा तेन कर्तव्यमेव, सापत्न्ये चोदयेत्, कुरु विवाहमिति, दारिकोत्पत्तावप्ययमेव क्रमः, स्त्रीपरिग्रहस्य पुत्रफलकत्वात् ॥ ३ ॥

अधिविद्यमाना च यावच्छक्तियोगादात्मनोऽधिकत्वेन स्थितिं कारयेत् ॥ ४ ॥

अधिविद्यमानेति । सापत्न्ये युज्यमाना न त्वधिविन्ना, यावच्छक्तीति । यावती शक्तिस्तदपेक्षयाऽऽत्मनः स्थितिं कारयेद्, अधिकत्वेनेति । सपत्न्याः सकाशादाधिक्येनेत्यर्थः ॥ ४ ॥

अधिविन्ना तु किं कुर्यादित्याह—

आगतां चैनां भगिनिकावदीक्षेत ॥ ५ ॥

आगतामिति । सपत्नीं भगिनिकावत् कनीयसीमिव भगिनीम्, अल्पे कन् ॥ ५ ॥

नायकविदितं च प्रादोषिकं विधिमतीव यत्नादस्याः कारयेत् ॥६॥

नायकविदितमिति । यथा नायको जानात्यनया कारितमिति, प्रादोषिकं प्रदोषभवं संस्कारम्, अतियत्नादनिच्छन्त्या अपि तस्याः स्नेहख्यापनार्थं परिचारिकया कारयेत् ॥ ६ ॥

सौभाग्यजं वैकृतमुत्सेकं वाऽस्या नाद्रियेत ॥ ७ ॥

सौभाग्यजं वैकृतं यदहंकृत्या व्याहृतम्, औत्सुक्यमुत्सेकं चित्तविकारं नाद्रियेत नापेक्षेत, अभिभवभयात् ॥ ७ ॥

भर्तरि प्रमाद्यन्तीमुपेक्षेत ॥ ८ ॥

भर्तरीति । भर्तृविषये प्रमाद्यन्तीं प्रमादं यान्तीमुपेक्षेत, अनेनैव स्खलितदोषेण दौर्भाग्यं स्यादिति ॥ ८ ॥

यत्र मन्येतार्थमियं स्वयमपि प्रतिपत्स्यत इति तत्रैनामादरत एवानुशिष्यात् ॥ ९ ॥

यत्रेति । यस्मिन्प्रमादे मन्येत, नायकसंभोगार्थमियं कृत्वा सपत्नी स्वयमेव प्रतिपत्स्यते प्रमादो मा भूदिति, तत्रैनां स्नेहख्यापनार्थमादरतोऽनुशिष्यात्पुनर्मा कार्षीरिति ॥ ९ ॥

नायकसंश्रवे च रहसि विशेषानधिकान्दर्शयेत् ॥ १० ॥

नायकसंश्रवे चेति । नायकस्य श्रुतिगोचरे सति, रहसि च यत्रान्यो न शृणोति, विशेषानिति । कलाविशेषान्, अधिकानिति । ये नायकस्य न दर्शिताः, तद्दर्शने ह्युभावपि स्निह्यतः ॥ १० ॥

तदपत्येष्वविशेषः ॥ ११ ॥

तदपत्येष्विति । अपुत्रया सपुत्राया दर्शयितव्यः ॥ ११ ॥

परिजनवर्गेऽधिकानुकम्पा ॥ १२ ॥

परिजनवर्ग इति । सपत्न्याः, अधिकानुकम्पा यद्यसौ नायकस्याप्यभिमतः ॥ १२ ॥

मित्रवर्गे प्रीतिः ॥ १३ ॥

मित्रवर्ग इति । तस्या विवाहकाले यो मित्रवर्गस्तस्मिन्प्रीतिः स्वीकारार्थम् ॥ १३ ॥

आत्मज्ञातिषु नात्यादरः ॥ १४ ॥

आत्मनो ज्ञातिषु नात्यादरो वचनीयतापरिहारार्थम् ॥ १४ ॥

तज्ज्ञातिषु चातिसंभ्रमः ॥ १५ ॥

तज्ज्ञातिष्विति । सपत्नीज्ञातिष्वतिसंभ्रमोऽत्यादरः स्नेहख्यापनार्थम् ॥ १५ ॥

बह्वीभिस्त्वधिविन्नाऽव्यवहितया संसृज्येत ॥ १६ ॥

बह्वीभिस्त्वधिविन्ना, सपत्नीभिरव्यवहितयाऽनन्तरया कनीयस्या संसृज्येत विदितशीलत्वात् ॥ १६ ॥

यां तु नायकोऽधिकां चिकीर्षेत्तां भूतपूर्वसुभगया प्रोत्साह्य

कलहयेत् ॥ १७ ॥

यां त्विति । सपत्नीं, तासु बह्वीषु नायकोऽधिकां स्नेहमानाभ्यां चिकीर्षेत्कर्तुमिच्छेद्, भूतपूर्वसुभगयेति । नायकस्य प्राक्तन्या सुभगया, प्रोत्साह्य तामेव सौभाग्यबीजोपन्यासेन च तयैव कलहयेत् ॥ १७ ॥

ततश्चानुकम्पेत ॥ १८ ॥

तत इति । उत्तरकालमनुकम्पेत कलहितां प्रच्छन्ने समाश्वासयेत्कलहभञ्जनार्थम् ॥ १८ ॥

ताभिरेकत्वेनाधिकां चिकीर्षितां स्वयमविवदमाना दुर्जनीकुर्यात् ॥ १९ ॥

ताभिरेकत्वेनेति । सपत्नीभिरन्याभिरेकत्वेनेत्यैक्येन संहतिधर्मेण स्थिताभिरित्यर्थः, एकीभावेऽपि सैव सौभाग्यबीजोपन्यासहेतुं नायकस्याग्रतो दुर्जनीकुर्याद्, येन नायकस्य तस्यां न सद्बुद्धिः स्याद्, दृष्टो हि बहुभिः सकलैश्चाह्रियमाणः, तत्रापि स्वयमविवदमाना मध्यस्था सती, नैतत्कृतः प्रयोग इति ख्यापनार्थम् ॥ १९ ॥

नायकेन तु कलहितामेनां पक्षपातावलम्बनोपबृंहितामाश्वासयेत् ॥ २० ॥

नायकेन तु कलहितामेनां, दौर्जन्योपन्यासेन, पक्षपातावलम्बनोपबृंहितामिति । तत्परिग्रहेणोपगृहीतां दापितप्रत्युत्तरामाश्वासयेत् ॥ २० ॥

कलहं च वर्धयेत् ॥ २१ ॥

नायकेन सह, यतस्य तदर्थत्वात् ॥ २१ ॥

मन्दं वा कलहमुपलभ्य स्वयमेव संधुक्षयेत् ॥ २२ ॥

भिद्यमानं तूपलभ्य, कलहं संधुक्षयेद्यथा न मन्दीभवति ॥ २२ ॥

यदि नायकोऽस्यामद्यापि सानुनय इति मन्येत तदा स्वयमेव संधौ प्रयतेत ॥ २३ ॥

इति ज्येष्ठावृत्तम् ।

स्वयं वा संधौ प्रयतेत, यद्ययमेकान्तेनास्यां निरनुनयस्तदा तिष्ठस्वसमद्विधैव मैनामवमन्यस्वेति प्रसादयेत् ॥ २३ ॥

इति ज्येष्ठावृत्तं चतुस्त्रिंशं प्रकरणम् ।

कनिष्ठाऽपि भार्या कथं वर्तेतेति ? कनिष्ठावृत्तमुच्यते—

कनिष्ठा तु मातृवत्सपत्नीं पश्येत् ॥ २४ ॥

कनिष्ठा त्विति । मातृवन्मातरमिव ज्येष्ठाम् ॥ २४ ॥

ज्ञातिदायमपि तस्या अविदितं नोपयुञ्जीत ॥ २५ ॥

ज्ञातिदायमिति । पितृभ्यां दत्तम्, भर्तृदत्तमित्यपिशब्दाद्, अविदितं नोपयुञ्जीत, अङ्गार्पणोपाय एषः ॥ २५ ॥

आत्मवृत्तान्तांस्तदधिष्ठितान्कुर्यात् ॥ २६ ॥

आत्मवृत्तान्तानिति । आत्मनि प्रतिबद्धान् व्यवहारान्, तदधिष्ठितान् ज्येष्ठस्वामिकान् ॥ २६ ॥

अनुज्ञाता पतिमधिशयीत ॥ २७ ॥

अनुज्ञाता ज्येष्ठया, क्रमप्राप्तेऽधिशयने पतिमधिशयीत, 'अधिशीङ्स्थाऽऽसां कर्म' इति कर्मसंज्ञा ॥ २७ ॥

न वा तस्या वचनमन्यस्याः कथयेत् ॥ २८ ॥

तस्या वचनं ज्येष्ठावचनं सदसद्वाऽन्यस्या अग्रे न कथयेत्, कलहपरिहारार्थम् ॥ २८ ॥

तदपत्यानि स्वेभ्योऽधिकानि पश्येत् ॥ २९ ॥

तदपत्यानि ज्येष्ठापत्यानि ज्येष्ठान्यज्येष्ठानि च, स्वेभ्योऽपत्येभ्योऽधिकं पश्येत् ॥ २९ ॥

रहसि पतिमधिकमुपचरेत् ॥ ३० ॥

रहसि शयने, अधिकमुपचरेद्येनायमन्याभ्यस्तस्यामनुरज्येत ॥ ३० ॥

आत्मनश्च सपत्नीविप्रकारजं दुःखं नाचक्षीत ॥ ३१ ॥

सपत्नीविप्रकारजं सपत्नीपरिभवजं, नात्मना परस्याचक्षीत, स्वयं कथ्यमानं नायको न प्रतीयाद्, अन्येन तु कथयेत् ॥ ३१ ॥

पत्युश्च सविशेषकं गूढं मानं लिप्सेत ॥ ३२ ॥

पत्युः सविशेषकमिति । अन्यतरभार्याभ्यो वैशेषिकीं पूजां पत्युः सकाशादप्रकटं लब्धुमिच्छेत् ॥ ३२ ॥

अनेन खलु पथ्यदानेन जीवामीति ब्रूयात् ॥ ३३ ॥

अनेनेति । सविशेषेण मानेन पथ्यदानेन शम्बलभूतेन जीवामि सपत्नीवागुरायामिति ब्रूयात् ॥ ३३ ॥

तत्तु श्लाघया रागेण वा बहिर्नाचक्षीत ॥ ३४ ॥

तन्मानं, श्लाघया विकत्थनेन, रागेण वेति । सपत्नीक्रोधेन, बहिःसामान्यजनस्य नाचक्षीत ॥ ३४ ॥

दोषमाह--

भिन्नरहस्या हि भर्तुरवज्ञां लभते ॥ ३५ ॥

भिन्नरहस्या हीति । अवज्ञां तिरस्कारम् ॥ ३५ ॥

ज्येष्ठाभयाच्च निगूढसंमानार्थिनी स्यादिति गोनर्दीयः ॥ ३६ ॥

ज्येष्ठाभयादिति । अन्यथा सविशेषं मानं पश्यन्ती कुप्येदनर्थं वा चिन्तयेद्, गोनर्दीयमतमनुमतमप्रतिषिद्धत्वात् ॥ ३६ ॥

दुर्भगामनपत्यां च ज्येष्ठामनुकम्पेत नायकेन चानुकम्पयेत् ॥ ३७ ॥

ज्येष्ठामनुकम्पेत नैकान्तेनाभिभवेत्, तथाभूताया निष्प्रत्याधारत्वाद्, नायकेन चानुकम्पयेत्संभाषणं क्रियतामिति, आत्मसाधुत्व ख्यापनार्थम् ॥ ३७ ॥

प्रसह्य त्वेनामेकचारिणीवृत्तमनुतिष्ठेत् ॥ ३८ ॥

इति कनिष्ठावृत्तम् ॥

एनामिति । दुर्भगामनपत्यां ज्येष्ठामाक्रम्य, ज्येष्ठाकनिष्ठयोर्मध्यवर्तिनीनां पूर्वापरापेक्षया ज्येष्ठाकनिष्ठावृत्तं योज्यम् ॥ ३८ ॥

इति कनिष्ठावृत्तं पञ्चत्रिंशं प्रकरणम् ।

यथा कन्या भार्या तथा पुनर्भूरिति पुनर्भूवृत्तमुच्यते, पुनर्भूर्द्विविधा—क्षतयोनिरक्षतयोनिश्च, तत्रान्त्या संस्कारार्हत्वात्कन्यायामेवान्तर्भूता, यथोक्तम्—

'पुनरक्षतयोनित्वादुह्यते या यथाविधि' इति ।

द्वितीयाया न संस्कारः, स्वीकार एव केवलं, सा च लोकेऽवरुद्धेत्युच्यते, सा चैवं विधा शास्त्रेऽनुज्ञातैव,

यथाऽऽह वसिष्ठः—

'मनोदत्ता वचोदत्ता या च मङ्गलवाचिका ।
उदकस्पर्शिका चैव या च पाणिगृहीतिका ॥
अग्निं परिगता चैव पुनर्भूः प्रसवा च या' इति ।

अत्र पूर्वाः षडक्षतयोनयः, प्रसवेति । क्षतयोनिरित्यर्थः ।

तामेवाधिकृत्य वृत्तमाह—

विधवा त्विन्द्रियदौर्बल्यादातुरा भोगिनं गुणसंपन्नं च या पुनर्विन्देत्सा पुनर्भूः ॥ ३९ ॥

विधवेति । मृतभर्तृका, इन्द्रियदौर्बल्यादिति । इन्द्रियाणि नियन्तुमसमर्थत्वाद्, आतुरा कामेन बाध्यमाना,भोगिनमिति । उपभोगसम्पन्नं,-गुणसम्पन्नमिति । नायकगुणर्युक्तं, या पुनर्विन्देद् द्वितीयं पतिं लभेत, सा पुनर्भूर्भार्यात्वेन पुनर्भवतीति कृत्वा; भोगिनं गुणसम्पन्नमिति, गोनर्दीयमतमेतद्भविष्यति ॥ ३९ ॥

यतस्तु स्वेच्छया पुनरपि निष्क्रमणं निर्गुणोऽयमिति तदाऽन्यं काङ्क्षेतेति बाभ्रवीयाः ॥ ४० ॥

यतस्त्विति। भर्तृगृहादातुरा स्वेच्छया निष्क्रान्ता, पुनरपि यतः पुरुषात्स्वेच्छया निष्क्रमणं स्याद्, निर्गुणोऽयमिति, निष्क्रमणोपायान्निर्गुणमपि भोगिनमाकाङ्क्षेत ॥ ४० ॥

सौख्यार्थिनी सा किलान्यं पुनर्विन्देत ॥ ४१ ॥

सौख्यार्थिनी = विषयपरिभोगार्थिनी, किलेति वितर्के ॥ ४१ ॥

गुणेषु सोपभोगेषु सुखसाकल्यं तस्मात्ततो विशेष इति गोनर्दीयः ॥ ४२ ॥

सुखसाकल्यमिति। गुणसुरतपरिभोगसुखयोः समवायात्, तत्किमिति निष्कामति, यतश्चैवं तस्मात्ततो निर्गुणभोगिनो विशिष्यते गुणवान्भोगी, या तु पुनः पुनर्निष्कामत्यसौ वेश्याविशेषेऽन्तर्भवति ॥४२॥

आत्मनश्चित्तानुकूल्यादिति वात्स्यायनः ॥ ४३ ॥

आत्मनश्चित्तानुकूल्यादिति। सत्यपि गुणवति भोगिनि चित्तं चेन्नानुकूलं तथाऽपि न सुखसाकल्यं, तस्मादयमपरो विशेषः, तेनोक्तलक्षणाद्गम्योऽन्य इति दर्शयति ॥ ४३ ॥

सा बान्धवैर्नायकाद्दापानकोद्यानश्रद्धादानमित्रपूजनादि व्ययसहिष्णु कर्म लिप्सेत ॥ ४४ ॥

सेति। विधवा विन्दमाना, बान्धवैः स्वैः, नायकाद्यत्कर्मणा लब्धुमिच्छेत्तत्रापानकं मद्यगोष्ठी, उद्यानं = पुष्पफलौपयिकं, श्रद्धादानं यच्छ्रद्धया दीयते, मित्रपूजनादीति। आदिशब्दात्स्वजनं च वस्त्रादिना, एतेषु कर्तव्येषु यद्व्ययं सहते कर्म न तु ग्रासाच्छादनमात्रमिति, इयमुत्तमप्रकृतेर्लिप्सा ॥ ४४ ॥

आत्मनः सारेण वाऽलङ्कारं तदीयमात्मीयं वा बिभृयात् ॥४५॥

आत्मनः सारेण वेति। मध्यमाधमप्रकृतेर्लब्धे कर्मणि व्यापारमाह—अलङ्कारमिति। तदीयं नायकसम्बन्धिनं, सावधानीभूय धारयेदित्यर्थः ॥ ४५ ॥

प्रीतिदायेष्वनियमः ॥ ४६ ॥

प्रीतिदायेष्विति। प्रीत्या दत्तेष्वनियमो धारणं प्रति ॥ ४६ ॥

स्वेच्छया च गृहान्निर्गच्छन्ती प्रीतिदायादन्यन्नायकदत्तं दीयेत निष्कास्यमाना तु न किञ्चिद्दद्यात् ॥ ४७ ॥

स्वेच्छया चेति । न तु नायकदोषात्तेन गृहान्निर्गच्छन्ती प्रीतिदाया-दन्यन्नायकदत्तं लोहक्षुरं दीयेत दाप्येत ॥ ४७ ॥

सा प्रभविष्णुरिव तस्य भवनमाप्नुयात् ॥ ४८ ॥

सेति । जिगमिषुः, प्रभविष्णुरिव स्वामिनीव नायकगृहं स्वीकुर्यात्॥४८॥

तावन्तमपि कालं निजासु किं कुर्यादित्याह—

कुलजासु तु प्रीत्या वर्तेत ॥ ४९ ॥

कुलजास्विति । धर्मोढासु, प्रीत्या=स्नेहेन ॥ ४९ ॥

दाक्षिण्येन परिजने सर्वत्र सपरिहासा मित्रेषु प्रतिपत्तिः ॥५०॥

परिजने सर्वत्र कुलजानां नायकस्य दाक्षिण्येन वर्तेत, सपरिहासा सविकारा ॥ ५० ॥

कलासु कौशलमधिकस्य च ज्ञानम् ॥ ५१ ॥

कलासु कौशलं दर्शनीयमधिकस्य नायकाविदितस्य ज्ञानं दर्शयितव्यम् ॥ ५१ ॥

कलहस्थानेषु च नायकं स्वयमुपालभेत ॥ ५२ ॥

कलहस्थानेष्विति । उचितविच्छेदः स्वैरिणीसंसर्गोऽचिरात्तत्र गमनं-वासकान्निष्क्रमणं चेत्यस्याः कलहस्थानानि, तेषु स्वयमुपालभेत॥५२॥

रहसि च कलया चतुःषष्ट्याऽनुवर्तेत ॥ ५३ ॥

रहसि चेति । नायकं शयनागतं, कलयेति । आलिङ्गनादिभिः पुरुषोपसृप्तान्तैः ॥ ५३ ॥

सपत्नीनां च स्वयमुपकुर्यात् ॥ ५४ ॥

सपत्नीनां कुलजानाम्, उपकुर्यादुत्पन्ने प्रयोजने ॥ ५४ ॥

तासामपत्येष्वाभरणदानम् ॥ ५५ ॥

आभरणं मण्डनकादि ॥ ५५ ॥

तेषु स्वामिवदुपचारः ॥ ५६ ॥

स्वामिवदुपचारस्तेषां कुलसंततिहेतुत्वात् ॥ ५६ ॥

मण्डनकानि वेषानादरेण कुर्वीत ॥ ५७ ॥

मण्डनकानि पुष्पानुलेपनादीनि ॥ ५७ ॥

परिजने मित्रवर्गे चाधिकं विश्राणनम् ॥ ५८ ॥

परिजन इति । आत्मीये, विश्राणनमिति । दानम् ॥ ५८ ॥

समाजापानकोद्यानयात्राविहारशीलता च॥ ५९ ॥

इति पुनर्भूवृत्तम् ॥

समाजेति । गोष्ठीशीलता, आपानशीलता, उद्यानविहारशीलता, यात्राविहारशीलता चेति ॥ ५९ ॥

पुनर्भूवृत्तं षट्त्रिंशं प्रकरणम् ॥

आसां भार्याणां दुर्भगाऽपि का चित्संभवति, तया कथं वर्तितव्यमिति दुर्भगावृत्तमुच्यते—

**दुर्भगा तु सापत्न्यपीडिता या तासामधिकमिव पत्यावुपचरेत्तामाश्रयेत् ॥ ६० ॥**

दुर्भगा त्विति । सापत्न्यपीडितेति । दौर्भाग्यफलं, तासामिति । सपत्नीनां मध्ये या पत्यावुपचरेद् , अधिकमिवेति । नायकेनाधिकृतेन या त्वधिका सपत्न्युपचिता तां सुतरामेवाश्रयेत् ॥ ६० ॥

**प्रकाश्यानि च कलाविज्ञानानि दर्शयेत् ॥ ६१ ॥**

तामाश्रित्य प्रकाश्यानि कलाविज्ञानानि पत्रच्छेद्यादिकौशलानि दर्शयेत् ॥ ६१ ॥

**दौर्भाग्याद्रहस्यानामभावः ॥ ६२ ॥**

दौर्भाग्याद्रहस्यानामभावः, वैदग्ध्यख्यापनं हि दौर्भाग्यनिवृत्तिकारणम् ॥ ६२ ॥

**नायकापत्यानां धात्रीकर्माणि कुर्यात् ॥ ६३ ॥**

धात्रीकर्माण्यभ्यञ्जनोद्वर्तनस्नपनादीनि ॥ ६३ ॥

**तन्मित्राणि चोपगृह्य तैर्भक्तिमात्मनः प्रकाशयेत् ॥ ६४ ॥**

तन्मित्राणि चेति । नायकमित्राणि च, उपगृह्य प्रियहिताभ्यां, तैरिति । उपगृहीतैर्भक्तिमात्मनः श्रावयेदशाठ्यख्यापनार्थम् ॥ ६४ ॥

**धर्मकृत्येषु च पुरश्चारिणी स्याद् व्रतोपवासयोश्च ॥ ६५ ॥**

धर्मकृत्येषु = श्राद्धादिषु, पुरश्चारिणी = प्रारम्भिका, स्याद्, व्रतोपवासयोश्च नायकेन क्रियमाणयोः पुरश्चारिणी ॥ ६५ ॥

**परिजने दाक्षिण्यं, न चाधिकमात्मानं पश्येत् ॥ ६६ ॥**

परिजने नायकस्य, दाक्षिण्यमानुकूल्यं दर्शयितव्यं , न चाधिकमात्मानं पश्येत्सपत्नीभ्यः परिजनेभ्यश्च दौर्भाग्यहेतुत्वात् ॥ ६६ ॥

इति बाह्यमेतद् वृत्तम् ॥

आभ्यन्तरमाह—

**शयने तत्सात्म्येनात्मनोऽनुरागप्रत्यायनम् ॥ ६७ ॥**

शयन इति । तत्सात्म्येनेति । नायकानुकूल्येन, यथैव नायकोऽभियुङ्क्ते, तथैवानिच्छन्त्यप्यात्मनोऽनुरागमातृप्ति प्रत्याययेत् ॥ ६७ ॥

न चोपालभेत वामतां च न दर्शयेत् ॥ ६८ ॥

न चोपालभेतेति । तवाहमप्रियेति, वामतां प्रातिकूल्यमङ्गगूहनेन न दर्शयेत् ॥ ६८ ॥

यया च कलहितः स्यात्कामं तामावर्तयेत् ॥ ६९ ॥

यया च सपत्न्या कलहितः स्यात्तामावर्तयेदभिमुखीकुर्यात्, काममिति अभ्युपगमे, अनेनापि प्रकारेण ममाभिमुखः स्यादिति ॥ ६९ ॥

यां च प्रच्छन्नां कामयेत्तामनेन सह संगमयेद्गोपयेच्च ॥७०॥

यां प्रच्छन्नां परस्त्रियं कामयेदनेन दूतीकर्मणा तां संगमयेत्, काममित्येव, मर्माणि चास्य शयनगताऽवबुध्येत, मर्मज्ञतया च विधेयः स्यादिति, गोपयेच्चेतरस्मै नाचक्षीत ॥ ७० ॥

यथा च पतिव्रतात्वमशाठ्यं नायको मन्येत तथा प्रतिविदध्याद् ॥ ७१ ॥

इति दुर्भगावृत्तम्

प्रतिविदध्यादनुतिष्ठेद्, जाड्यदौःशील्ययोः प्रायेण दौर्भाग्यहेतुत्वात् ॥ ७१ ॥

इति दुर्भगावृत्तं सप्तत्रिंशं प्रकरणम् ॥

यथा भार्याया अधिकारो भार्याऽधिकारस्तथा भार्यायां नायकस्यापीति, सप्तमीसमासोऽपि द्रष्टव्यः, अन्यथा नायकेन सङ्गताऽप्यनुवर्तिता न सम्प्रयुज्यते, तत्र नायको द्विविधः—राजा जानपदश्च, तत्र पूर्वमधिकृत्यान्तःपुरिकमुच्यते, अन्तःपुरे भवं वृत्तमान्तःपुरिकम्, 'रोपधेतोः प्राचाम्' इति वुञ्,

ननु च यथा राज्ञो वृत्तं तथाऽन्तःपुराणामपि वक्तव्यमित्याह—

अन्तःपुराणां च वृत्तमेतेष्वेव प्रकरणेषु लक्षयेत् ॥ ७२ ॥

अन्तःपुराणां चेति । तत्स्थस्त्रीणामेवाभिधानम्, एतेष्वेव प्रकरणेषु लक्षयेत्, तत्राप्येकचारिणीज्येष्ठाऽऽदयः सन्तीति पृथङ्नोक्तम् ॥७२॥

राज्ञस्तु पृथगुच्यते—

माल्यानुलेपनवासांसि चासां कञ्चुकीया महत्तरिका वा राज्ञो निवेदयेयुर्देवीभिः प्रहितमिति ॥ ७३ ॥

आसामिति । आन्तःपुरिकाणां, वासांसि च यथासम्भवं गृहीत्वा, कञ्चुकीया महत्तरिका वा राज्ञो निवेदयेयुः, देवीभिः प्रहितमिति ॥ ७३ ॥

तदादाय राजा निर्माल्यमासां प्रतिप्राभृतकं दद्यात् ॥ ७४ ॥

तदादायेति । माल्यादिकं गृहीत्वा राजा निर्माल्यकं स्वदेहादवतारितं प्रतिप्राभृतकं प्रतिकौशलिकं दद्यादनुरागख्यापनार्थम् ॥ ७४ ॥

**अलंकृतश्च स्वलंकृतानि चापराह्णे सर्वाण्यन्तःपुराण्यैकध्येन पश्येत् ॥ ७५ ॥**

अलंकृतश्चेति । गृहीतनेपथ्यो राजा, ऐकध्येनेति । एकधाशब्दाद्भावे ध्यमुञ्, एकीभूतानित्यर्थः, न तु पृथक् पृथक्, तुल्यवृत्तत्वख्यापनार्थम् ॥ ७५ ॥

**तासां यथाकालं यथाऽर्हं च स्थानमानानुवृत्तिः सपरिहासाश्च कथाः कुर्यात् ॥ ७६ ॥**

यथाकालमिति । यद्यस्मिन् काले युज्यते, यथाऽर्हं चेति । यद्यस्याः कुलवयोऽपेक्षया, स्थानं = नियोगो, मानः = पूजा, आभ्यामनुवृत्तिः कार्या, सपरिहासाः सर्वाकाराः कथाः, परिणीतास्विदं वृत्तम् ॥ ७६ ॥

**तदनन्तरं पुनर्भुवस्तथैव पश्येत् ॥ ७७ ॥**

तदनन्तरमिति । परिणीतादर्शनानन्तरम्, पुनर्भुवस्तथैव पश्येदैकध्येन, तथा स्थानमानानुवृत्तिभिश्च ॥ ७७ ॥

**ततो वेश्या आभ्यन्तरिका नाटकीयाश्च ॥ ७८ ॥**

आभ्यन्तरिकाः = आन्तःपुरिकाः, नाटकीयाश्च = नाटकहिताश्च, तथैव पश्येदेव ॥ ७८ ॥

**तासां यथोक्तकक्षाणि स्थानानि ॥ ७९ ॥**

तासामिति । पुनर्भ्वादीनां, यथोक्तकक्षाणीति । मध्ये देवीनां स्थानं, ततो बहिःकक्षे पुनर्भुवां, ततो बहिर्वेश्यानां; ततोऽपि नाटकीयानामिति ॥ ७९ ॥

**वासकपाल्यस्तु यस्या वासकः, यस्याश्चातीतः, यस्याश्च ऋतुस्तत्परिचारिकाऽनुगता दिवा शय्योत्थितस्य राज्ञस्ताभिः प्रहितमङ्गुलीयकमनुलेपनमृतुं वासकं च निवेदयेयुः ॥ ८० ॥**

वासकं पालयन्ति या महत्तरिका राजनियुक्तास्ता राज्ञो निवेदयेयुरिति सम्बन्धः, यस्या वासकक्रमः प्राप्तः, यस्याश्चातीतो व्यसनोत्सवाभ्यामन्तरितः, ऋतुश्च यस्याः प्रत्युपस्थितः, तत्परिचारिकाऽनुगता इति । तिसृणामपि देव्यादीनां याः परिचारिकास्ताभिरनुगता वासकपाल्यो दिवा शय्योत्थितस्य भुक्त्वा शयितोत्थितस्य, ताभिरिति । यस्या वासकमोऽतीतो यस्याश्च वर्त्तमानो यस्याश्च ऋतुः, अङ्गुलीयकमिति । मुद्रि-

तम्, अनुलेपनं सम्बन्धित्वख्यापनार्थं, वासकं क्रमप्राप्तमतीतं वा, ऋतुं च प्रत्युपस्थितम् ॥ ८० ॥

तत्र राजा यद् गृह्णीयात्तस्या वासकमाज्ञापयेत् ॥ ८१ ॥

तत्रेति । निवेदिते, यद्ग गृह्णीयादिति । यदीयमङ्गुलीयकम् ॥ ८१ ॥

उत्सवेषु च सर्वासामनुरूपेण पूजाऽऽपानकं च सङ्गीतदर्शनेषु च ॥ ८२ ॥

अनुरूपेण पूजेति । कुलवयोऽनुरूपा,आपानकं च ताभिः सह ॥८२॥

अन्तःपुरचारिणीनां बहिरनिष्क्रमो बाह्यानां चाप्रवेशोऽन्यत्र विदितशौचाभ्यः ॥ ८३ ॥

अप्रवेश इति । संगीतकव्यग्रेषु तद्वेशधारिणां नागरिकाणामपि प्रवेशः संभाव्यते, विदितशौचाभ्य इति । ता ह्युपधाशुद्धत्वान्नान्यत्प्रयोजयन्ति ॥ ८३ ॥

अपरिक्लिष्टश्च कर्मयोगः ॥ ८४ ॥

इत्यान्तःपुरिकम् ।

अपरिक्लिष्टश्च कर्मयोग इति । रतोपचारेऽकदर्थितः स्यात्, कदर्थिते च तस्मिन्नकार्यमपि कुर्य्युः ॥ ८४ ॥

इत्यान्तःपुरिकमष्टत्रिंशं प्रकरणम् ॥

यथा राज्ञो बह्वयः स्त्रियस्तथा जानपदस्यापि भवन्तीति जानपदस्य बह्वीषु प्रतिपत्तिरुच्यते,

तत्र सामान्यमाह—

भवन्ति चात्र श्लोकाः—

पुरुषस्तु बहून्दारान्समाहृत्य समो भवेत् ।
न चावज्ञां चरेदासु व्यलीकान्न सहेत च ॥ ८५ ॥

पुरुषस्त्विति । समो भवेदिति । नैकत्र स्नेहेन वर्तेत, न चावज्ञां चरेदिति । गुणरूपरहितास्वपि तिरस्कारं न कुर्वीत, व्यलीकानपराधान्न सहेत, अन्यथा क्षान्तेषु पुनः पुनर्विशेषतः कुर्युः ॥ ८५ ॥

एकस्यां या रतिक्रीडा वैकृतं वा शरीरजम् ।
विस्रम्भाद्वाऽप्युपालम्भस्तमन्यासु न कीर्तयेत् ॥ ८६ ॥

एकस्यामिति । या चित्ररतेनान्येन वा क्रीडा रतानुगता, अन्या वा, वैकृतं गुह्यगतं, विस्रम्भाद्वोपालम्भयुक्तं वासकसंज्ञामनुबन्धयितुम्, अन्यासु न कीर्तयेदिति । स्त्रीणां वैराग्यहेतुत्वात् ॥ ८६ ॥

न दद्यात्प्रसरं स्त्रीणां सपत्न्याः कारणे क्वचित् ।
तथोपालभमानां च दोषैस्तामेव योजयेत् ॥ ८७ ॥

प्रसरं न दद्यात्कलहपरिहारार्थं, सपत्न्याः कारण इति । सापत्न्यसंबन्धिनि सत्यपि निमित्ते, तथा तेनैव प्रकारेण निष्प्रसरतयोपालभमानां युक्तमेवोपेक्षितमिति, दोषैस्तामेव योजयेत्त्वैव दोषो न तस्या इति ॥ ८७ ॥

अन्यां रहसि विस्रम्भैरन्यां प्रत्यक्षपूजनैः ।
बहुमानैस्तथा चान्यामित्येवं रञ्जयेत्स्त्रियः ॥ ८८ ॥

रहसि विस्रम्भैर्विश्वासैर्या लज्जावती, प्रत्यक्षपूजनैर्या सपत्नीषु भक्तिमिच्छति, बहुमानैर्या मनस्विनी ॥ ८८ ॥

उद्यानगमनैर्भोगैर्दानैस्तज्ज्ञातिपूजनैः ।
रहस्यैः प्रीतियोगैश्चेत्येकैकामनुरञ्जयेत् ॥ ८९ ॥

उद्यानगमनैर्या तच्छीला, भोगैर्या परिभोगलालसा, तज्ज्ञातिपूजनैर्या ज्ञातिषु कर्तव्यबुद्धिः, रहस्यै रहसि भवैः, प्रीतियोगैः प्रीत्यर्थैर्योगैः कार्या रतिक्रिया ॥ ८९ ॥

अधिकरणार्थानुष्ठाने फलमाह—

युवतिश्च जितक्रोधा यथाशास्त्रप्रवर्तिनी ।
करोति वश्यं भर्तारं सपत्नीश्चाधितिष्ठति ॥ ७० ॥

इति श्रीवात्स्यायनीये कामसूत्रे भार्याऽधिकारिके चतुर्थेऽधिकरणे सपत्नीषु ज्येष्ठावृत्तं कनिष्ठावृत्तं पुनर्भूवृत्तं दुर्भगावृत्तमान्तःपुरिकं पुरुषस्य बह्वीषु प्रतिपत्तिर्द्वितीयोऽध्यायः ।

जितक्रोधेति । शास्त्रार्थानुष्ठानकरणाद्, यथाशास्त्रप्रवर्तिनीति । यद्यस्याः शास्त्रमेकचारिणीज्येष्ठाऽऽदिवृत्तं, सपत्नीश्चाधितिष्ठतीति । सपत्नीनामुपरि स्थितिं लभत इति, 'अधिशीङ्स्थाऽऽसां कर्म'इति कर्मसंज्ञा ॥ ७० ॥

इति पुरुषस्य बह्वीषु प्रतिपत्तिरेकोनचत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां भार्याऽधिकारिके चतुर्थेऽधिकरणे सपत्नीषु ज्येष्ठावृत्तं कनिष्ठावृत्तं पुनर्भूवृत्तमान्तःपुरिकं पुरुषस्य बह्वीषु प्रतिपत्तिर्द्वितीयोऽध्यायः ।

समाप्तं चेदं भार्याऽधिकारिकं चतुर्थमधिकरणम् ।

# पारदारिकं नाम पञ्चममधिकरणम् ।

## प्रथमोऽध्यायः ।

कन्यापुनर्भूनायिकयोः समागमोपायः सविशेष उक्तः, तत्र वेश्यायाः-काम एव, परदारेभ्योऽर्थकामाविति, तत्समागमोपायदर्शनार्थं वैशिकात्प्राक्पारदारिकमुच्यते, तत्र स्त्रीपुंसयोः शीलमनवस्थाप्योत्तरव्यापारासंभवात्स्त्रीपुरुषशीलावस्थापनमुच्यते, परपरिगृहीतासु कामः प्रतिषिद्ध इति चेदाह—

व्याख्यातकारणाः परपरिग्रहोपगमाः ॥ १ ॥

व्याख्यातकारणा इति । परपरिग्रहगमनस्य सुखपुत्रव्यतिरेकेण कारणानि विशुद्धिपूर्वकाणि नायिकाविमर्शे व्याख्यातानीति स्मारयति ॥ १ ॥

तेषु साध्यत्वमनत्ययं गम्यत्वमायतिं वृत्तिं चादित एव परीक्षेत ॥ २ ॥

तेष्विति । परपरिग्रहेषु, सत्स्वपि कारणेष्विदमादित एव परीक्षेतेत्याह—साध्यत्वमिति । साधयितुं शक्येति, अनत्ययं प्रत्यवायाभावाद्, गम्यत्वं कुष्ठिन्युन्मत्ताद्यभावाद्, आयतिं प्रभावं तत्संयोगाद्, वृत्तिमात्मनः प्रवृत्तिम् ॥ २ ॥

सुखमपि गमनकारणं यदा शरीरोपघातं पश्येदित्याह—

यदा तु स्थानात्स्थानान्तरं कामं प्रतिपद्यमानं पश्येत्तदाऽऽत्मशरीरोपघातत्राणार्थं परपरिग्रहानभ्युपगच्छेत् ॥ ३ ॥

यदा त्विति । कां चित्स्त्रियं दृष्ट्वा संप्रयोगेच्छालक्षणः काम उत्पन्नस्तं यदा प्रथमात्स्थानात्स्थानान्तरमवस्थाऽन्तरं प्रतिपद्यमानं गच्छन्तं पश्येदनुभवेन्न च प्रतिसंख्यानेन निवर्तयितुमीशस्तदा तस्मिन् काले शरीरोपघातत्राणार्थमुपगच्छेद्, अन्यथा महाश्वेतासक्तचेतस इव पुण्डरीकस्य विनाशः स्यात् ॥ ३ ॥

तस्य कति स्थानानीत्याह—

दश तु कामस्य स्थानानि ॥ ४ ॥

कामो ह्युत्पादात्प्रभृति विषयप्राप्तावनुकूलप्रत्ययवशात्प्रतिक्षणमुपबर्धमान आप्राणत्यागं वर्तते, तस्यासाधारणकार्योत्पत्त्या व्यवहारार्थं दश स्थानानि पूर्वाचार्यैरुक्तानि ॥ ४ ॥

तानि क्रमेणाह—

चक्षुःप्रीतिर्मनःसङ्गः संकल्पोत्पत्तिर्निद्राच्छेदस्तनुता विषयेभ्यो-व्यावृत्तिर्लज्जाप्रणाश उन्मादो मूर्छा मरणमिति तेषां लिङ्गानि ॥५॥

चक्षुःप्रीतिरिति । स्त्रियं दृष्टवतः संयोगेच्छालक्षणात्कामादनन्तरं दृशौ स्निग्धे भवतः, ततो विषयाप्राप्तौ मनसः सक्तिः, तस्मिन्सक्ते संकल्पोत्पत्तिः, कथं प्राप्स्यामि ? प्राप्य चैवमनुष्ठातव्यमिति, ततः संकल्पयतो निद्राछेदः, ततो निद्रामलभमानस्य तनुता शरीरकार्श्यं, ततो विषयेभ्यो व्यावृत्तिः,सर्वथा तद्गतचित्तत्वादन्यविषयाञ्ज्वलदनलप्रख्यान्नोपयाति, तेभ्यश्च व्यावर्तमानस्य लज्जाप्रणाशनं, गुरुभ्योऽपि न लज्जते, उपक्षीणार्थत्वाच्च न बिभेति, विप्रणष्टलज्जस्य निर्भयस्य चोन्मादः प्रवर्तते, ततो मूर्छा भवत्यस्वास्थ्यसंज्ञिका, ततो मरणं प्राणत्यागः, तेषामिति । कामस्थानानां प्रतिपत्त्यर्थमेते चक्षुःप्रीत्यादयो लिङ्गानि तत्कार्यत्वात् ॥ ५ ॥

तत्राकृतितो लक्षणतश्च युवत्याः शीलं सत्यं शौचं साध्यतां चण्डवेगतां च लक्षयेदित्याचार्याः ॥ ६ ॥

तत्रेति । तस्मिन्रागवशादभिगमने शीलादिकमेव प्राधान्येन लक्षयेद् , आकृतित इति । शरीरस्थानेन, लक्षणतः शरीरस्थेन चिन्हेन, शीलं वक्ष्यमाणं, सत्यं यथार्थवादितां, शौचं चारित्रविशुद्धिम् ॥ ६ ॥

व्यभिचारादाकृतिलक्षणयोगानामिङ्गिताकाराभ्यामेव प्रवृत्तिर्बोद्धव्या योषित इति वात्स्यायनः ॥ ७ ॥

व्यभिचारादिति । सत्यप्याकृतियोगे लक्षणयोगे च नावश्यं शीलसत्यशौचानि गम्यन्ते, साध्यासाध्यतां चण्डमृदुवेगतां पुनर्गमयन्त्येव, कथं तर्हि ? लक्षयेदित्याह-इङ्गिताकाराभ्यामिति, बोद्धव्या शीलादियुक्तेत्यर्थः, तत्रेङ्गिताकारौ कन्यासंप्रयुक्तकेऽभिहितौ, प्रवर्तनं प्रवृत्तिः, इङ्गितव्यतिरेकेण, तत्र त्रिभिरेव शीलं, शौचादीनि शेषाणि प्रवृत्त्या स्त्रीपुंसयोः ॥७॥

कस्याः किं शीलमित्याह—

यं कञ्चिदुज्ज्वलं पुरुषं दृष्ट्वा स्त्री कामयते, तथा पुरुषोऽपि योषितम् , अपेक्षया तु न प्रवर्तेते, इति गोणिकापुत्रः ॥ ८ ॥

यं कञ्चिदिति । स्वकीयं परकीयं वा पुरुषम् , उज्ज्वलं वर्णवेषाभ्यां , कामयते सञ्जातरागा भवति, पुरुषोऽपि योषितमुज्ज्वलां दृष्ट्वा कामयते, अपेक्षया तु कस्य चित्कार्यस्य न प्रवर्तेते, द्वावपि न संप्रयुज्येते, तदुभयोरप्युज्ज्वलकामित्वं च कार्यापेक्षित्वं च शीलं, गोणिकापुत्रग्रहणं प्रावीण्यख्यापनार्थम् ॥ ८ ॥

तत्र स्त्रियं प्रति विशेषः ॥ ९ ॥

तत्रेति। तयोस्तुल्यशीलत्वेऽपि, विशेषः प्रत्येकं विशेष उच्यते॥ ९८॥

न स्त्री धर्ममधर्मं चापेक्षते कामयत एव कार्यापेक्षया तु नाभियुङ्क्ते ॥ १० ॥

न स्त्रीति। प्रवृत्तौ धर्मः स्यान्न वेति, नापेक्षते, तमोबहुलत्वात्कामयत एवैकान्तेनागम्यमपि कार्यापेक्षया तु नाभियुङ्क्त एवेति, तत्रात्मनि च दोषदर्शनाद्, इदं दृष्टदोषदर्शित्वं शीलं नादृष्टदोषदर्शित्वम्॥ १०॥

स्वभावाच्च पुरुषेणाभियुज्यमाना चिकीर्षन्त्यपि व्यावर्तते ॥ ११॥

चिकीर्षन्त्यपीति। तेन सह योगं कर्तुमिच्छन्त्यपि, व्यावर्तते नायकाभियोगात्, कारणापेक्षया यावदभियुक्तकामित्वं कारणापेक्षित्वं च शीलम्॥ ११॥

पुनःपुनरभियुक्ता सिद्ध्यति ॥ १२ ॥

पुनःपुनरभियुक्ता सिद्ध्यतीति। भूयोऽभियुक्तकामित्वं शीलम्॥१२॥

पुरुषस्तु धर्मस्थितिमार्यसमयं चापेक्ष्य कामयमानोऽपि व्यावर्तते ॥ १३ ॥

धर्मस्थितिमिति। श्रुतिस्मृतिविहितमदृष्टार्थम्, आर्यसमयं=शिष्टाचारं, दृष्टार्थं, कामयमानोऽपीति। इच्छन्नपि, व्यावर्तत इति। दृष्टादृष्टदोषदर्शित्वं शीलम्॥ १३॥

तथाबुद्धिश्चाभियुज्यमानोऽपि न सिद्ध्यति ॥ १४ ॥

तथाबुद्धिश्चेति। धर्मस्थित्यपेक्षी आर्यसमयापेक्षी, चाभियुज्यमानोऽपि स्त्रिया न सिद्ध्यति न प्रवर्तते, अस्य पूर्वोक्तमेव शीलं, कर्तृकर्मभेदाद् भेदः॥ १४॥

निष्कारणमभियुङ्क्तेऽभियुज्यापि पुनर्नाभियुङ्क्ते, सिद्धायां च माध्यस्थ्यं गच्छति ॥ १५ ॥

निष्कारणमिति। सुखं कारणान्तरं चानपेक्ष्य; अभियुज्य पुनर्नाभियुङ्क्ते कारणस्यासमीहितत्वाद्, इदं शुद्धकामित्वं शीलं, सिद्धायां च माध्यस्थ्यं गच्छतीत्यभियुङ्क्ते न च संप्रयुज्यत इति शुद्धकामित्वं शीलम्।१५॥

सुलभामवमन्यते, दुर्लभामाकाङ्क्षत इति प्रायो वादः ॥ १६ ॥

सुलभामवमन्यते, दुर्लभामाकाङ्क्षत इति वामशीलत्वम्॥ १६॥

इति स्त्रीपुरुषशीलावस्थापनं चत्वारिंशं प्रकरणम्।

तत्र व्यावर्तनकारणानि ॥ १७ ॥

तत्रेति । स्त्रीपुरुषशीलावस्थापने, यानि व्यावर्तनकारणानि तानि प्रकरणान्तर्गतान्युच्यन्ते ॥ १७॥

पत्यावनुरागः ॥ १८ ॥

पत्यावनुरागो व्यावृत्तिकारणम्, उत्पन्नायामपीच्छायाम् ॥ १८॥

अपत्यापेक्षा ॥ १९ ॥

अपत्यापेक्षेति । स्तनंधयं ममापत्यमिति ॥ १९ ॥

अतिक्रान्तवयस्त्वम् ॥ २० ॥

अतिक्रान्तवयस्त्वमिति । पारणतवया लज्जते बलात्परपुरुषायाङ्गार्पणेनेति ॥ २० ॥

दुःखाभिभवः ॥ २१ ॥

दुःखाभिभवः, इष्टमरणादिदुःखाभिभूता जातेच्छाऽपि व्यावर्तते, ॥२१॥

विरहानुपलम्भः ॥ २२ ॥

विरहानुपलम्भो भर्तुः सदा सन्निहितत्वाद्वियोगं न पश्यति येन सम्प्रयुज्यते ॥ २२ ॥

अवज्ञयोपमन्त्रयत इति क्रोधः ॥ २३ ॥

अवज्ञयोपमन्त्रयतेऽनादरेणाभियुङ्क्ते इति, परिभवात्क्रोधो व्यावृत्तिकारणम् ॥ २३ ॥

अप्रतर्क्य इति सङ्कल्पवर्जनम् ॥ २४ ॥

अप्रतर्क्यो दुरवगाहचित्त इति, तस्मिन्नबहुमानात्सङ्कल्पवर्जनम्, मनो न सङ्कल्पत इत्यर्थः ॥ २४ ॥

गमिष्यतीत्यनायतिरन्यत्र प्रसक्तमतिरिति च ॥ २५ ॥

गमिष्यतीति । न चिरकालमनेन सम्प्रयोग इत्यनायातर्भविष्यत्कालाभावः कारणम्, अन्यत्र प्रसक्तमतिरिति वाऽनायतिस्तावत्कालिकत्वात् ॥ २५ ॥

असंवृताकार इत्युद्वेगः ॥ २६ ॥

असंवृताकार आकारसंवरणमकुर्वंल्लोके मामुद्गतिकां करोतीति परिभवादुद्वेगः ॥ २६ ॥

मित्रेषु निसृष्टभाव इति तेष्वपेक्षा ॥ २७ ॥

मित्रेषु निसृष्टभावस्तानि च यदाहुस्तत्करोतीति च तेष्वपेक्षा मयि त्ववज्ञा ॥ २७ ॥

शुष्काभियोगीत्याशङ्का ॥ २८ ॥

शुष्काभियोगी निष्कारणमभियुङ्क्ते इत्याशङ्का ॥ २८ ॥

तेजस्वीति साध्वसम् ॥ २९ ॥

तेजस्वीति साध्वसं, प्रमादावस्खलितेऽनर्थं करिष्यतीति ॥ २९ ॥

चण्डवेगः समर्थो वेति भयं मृग्याः ॥ ३० ॥

मृग्या इति । मन्दवेगायाः, चण्डवेगः समर्थो वेत्यश्व इति भयम् ॥ ३० ॥

नागरकः कलासु विचक्षण इति व्रीडा ॥ ३१ ॥

नागरक इति । यो नागरकवृत्तावधिकृतः, कलासु च विचक्षणो-नागरकादन्यो व्रीडा ग्राम्याया अविदग्धायाश्च ॥ ३१ ॥

सखित्वेनोपचरित इति च ॥ ३२ ॥

सखित्वेनेति । मित्रत्वेन मयाऽयमुपचरितः कथं ? पुनरेवं कुर्यामिति च व्रीडा ॥ ३२ ॥

अदेशकालज्ञ इत्यसूया ॥ ३३ ॥

अदेशकालज्ञ इति । असूया देशकालयोर्नाभियुङ्क्ते इति ॥ ३३ ॥

परिभवस्थानमित्यबहुमानः ॥ ३४ ॥

परिभवस्थानं नीचत्वात्, ततश्च सखीजनोऽन्यो वा मां परिभविष्य-त्यसत्संगतेति, तस्मिन्नबहुमानः कारणम् ॥ ३४ ॥

आकारितोऽपि नावबुध्यत इत्यवज्ञा ॥ ३५ ॥

आकारित इति । अभिप्रायं दर्शितो नावबुध्यत इत्यवज्ञा, न विदग्ध-इति ॥ ३५ ॥

शशो मन्दवेग इति च हस्तिन्याः ॥ ३६ ॥

हस्तिन्या इति । चण्डवेगायाः, शशो मन्दवेग इति चावज्ञा ॥ ३६ ॥

मत्तोऽस्य मा भूदनिष्टमित्यनुकम्पा ॥ ३७ ॥

मत्तोऽस्येति । मन्निमित्तेन मामधिगच्छतो मा भूदनिष्टं शरीरतोऽर्थ-तो वेत्यनुकम्पा ॥ ३७ ॥

आत्मनि दोषदर्शनान्निर्वेदः ॥ ३८ ॥

आत्मनि दोषदर्शनादिति । शरीरे रोगादिकं वैगन्ध्यादिकं पश्यन्त्या-निर्वेदः ॥ ३८ ॥

विदिता सती स्वजनबहिष्कृता भविष्यामीति भयम् ॥ ३९ ॥

विदिता स्वजनस्य विप्रतिपन्नेति, तस्माद् बहिष्कृता भविष्यामीति भयम् ॥ ३९ ॥

पलित इत्यनादरः ॥ ४० ॥

पलितो वृद्ध इत्यनादरः ॥ ४० ॥

पत्या प्रयुक्तः परीक्षत इति विमर्शः ॥ ४१ ॥

पत्या प्रयुक्त इति । किं पतिव्रता नेति, ज्ञातुं नियुक्तः परीक्षत इति विमर्शः ॥४१॥

धर्मापेक्षा चेति ॥ ४२ ॥

धर्मापेक्षा च कारणम्, अस्त्येव हि का चित्स्त्री या धर्ममपेक्षते ॥४२॥

प्रतिविधानमाह—

तेषु यदात्मनि लक्षयेत्तदादित एव परिच्छिन्द्यात् ॥ ४३ ॥

तेष्विति । व्यावर्तनकारणेषु, यदात्मनि कारणं लक्षयेन्ममेदं भविते-ति, तदादित एव परिच्छिन्द्यात्परित्यजेद्यथा न भवति ॥ ४३ ॥

उत्पन्नानि चात्मनि स्त्रियां वा परिच्छिन्द्यादुपायैरित्याह—

आर्यत्वयुक्तानि रागवर्धनात् ॥ ४४ ॥

आर्यत्वयुक्तानीति । पत्यावनुरागोऽपत्यापेक्षाऽतिक्रान्तवयस्त्वं दुः-खाभिभवो धर्मापेक्षा चेत्येतानि स्त्रीगतान्यार्यत्वयुक्तानि रागवर्धना त्परिच्छिन्द्याद्यथा तस्या रागो वर्धेत तथा प्रतिविधेयम् ॥ ४४ ॥

अशक्तिजान्युपायप्रदर्शनात् ॥ ४५ ॥

विरहानुपलम्भोऽस्य मा भूदनिष्टमात्मनि दोषदर्शनादिति स्त्रीग-तानि, गमिष्यत्यन्यत्रासक्तमतिरित्यात्मगतम्, एतान्यशक्तिजान्युपा-यदर्शनात् ॥ ४५ ॥

बहुमानकृतान्यतिपरिचयात् ॥ ४६ ॥

अप्रतर्क्यो नागरकः, कलासु विचक्षणः, सखित्वेनोपचरितः, पत्या प्रयुक्तः परीक्षत इत्यात्मगतानि बहुमानकृतान्यतिपरिचयात् ॥ ४६ ॥

परिभवकृतान्यतिशौण्डीर्याद्वैचक्षण्याच्च ॥ ४७ ॥

कृतेऽतिपरिचये तस्योपरि मानो विगलति, शुष्काभियोगी, अदेश-कालज्ञः, परिभवस्थानमाकारितो नावबुध्यते, पलित इत्यात्मगतानि नायिकाकर्तृकपरिभवकृतानि, अतिशौण्डीर्यादिति। परिभवख्यापनाद्, वैचक्षण्याच्चेति । शास्त्रकलाप्रकाशनात् ॥ ४७ ॥

तत्परिभवजानि प्रणत्या ॥ ४८ ॥

अवज्ञयोपमन्त्रयते, असंवृताकारो मित्रेषु निस्पृहभाव इत्यात्मगतानि, तत्परिभवजानि = नायिकाकर्तृकपरिभवजानि, प्रणत्येति । तत्रैकान्तप्रसृतया ॥ ४८ ॥

भययुक्तान्याश्वासनादिति ॥ ४९ ॥

तेजस्वी चण्डवेगः समर्थो वेति, शशो मन्दवेगो विदिता सती स्वजनबहिष्कृता भविष्यामीत्यात्मगतानि, भययुक्तान्याश्वासनादिति । यथा न भयं तथा प्रतिविधानेनेति ॥ ४९ ॥

इति व्यावर्त्तनकारणान्येकचत्वारिंशं प्रकरणम् ॥

एवं शीलमवधार्यात्मनः सिद्धतां पश्येदन्यथाऽभियोगासम्भवादिति स्त्रीषु सिद्धाः पुरुषा उच्यन्ते—

पुरुषास्त्वमी प्रायेण सिद्धाः—कामसूत्रज्ञः, कथाऽऽख्यानकुशलः, बाल्यात्प्रभृति संसृष्टः, प्रवृद्धयौवनः, क्रीडनकर्मादिनाऽऽगतविश्वासः, प्रेषणस्य कर्ता, उचितसम्भाषणः, प्रियस्य कर्ता, ऽन्यस्य भूतपूर्वो दूतो मर्मज्ञः, उत्तमया प्रार्थितः, सख्या प्रच्छन्नं संसृष्टः, सुभगाभिख्यातः, सह संवृद्धः, प्रातिवेश्यः कामशीलः, तथाभूतश्च परिचारकः, धात्रेयिकापरिग्रहः, नववरकः, प्रेक्षोद्यानत्यागशीलः, वृष इति सिद्धप्रतापः, साहसिकः, शूरः, विद्यारूपगुणोपभोगैः पत्युरतिशयिता, महार्हवेषोपचारश्चेति ॥ ५० ॥

पुरुषास्त्विति । अमी वक्ष्यमाणाः, प्रायेण बाहुल्येन, कामसूत्रज्ञः कथाऽऽख्यान कुशल इति । द्वावपि कामशीलत्वात्स्त्रीषु सिद्ध्यतः, बाल्यात्प्रभृतीति । योऽन्यस्माद् गृहादागतो बाल्यात्प्रभृति संसृज्यते, स प्रवृद्धस्नेहत्वादस्याः सिद्धः, प्रवृद्धयौवन इति । स हि वयःसामर्थ्यात्स्त्रीषु सिद्धः, क्रीडनकर्मादिनेति । क्रीडनव्यापारेण, आदिशब्दाच्चित्रपत्रच्छेद्यादिना यस्या आगतविश्वासः स तस्याः सिद्धः, प्रेषणस्य कर्ता, यस्या वचनकरः स तस्याः सिद्धः, उचितसम्भाषणोऽनियन्त्रणात्सिद्धः, प्रियस्य कर्ता यस्या य इष्टं सम्पादयति स तस्याः सिद्धः, अन्यस्य भूतपूर्वो दूतः, पूर्वसंस्तुतत्वादस्याः सिद्धः, यस्या अपि मर्मज्ञस्स तस्याः सिद्धः, उत्तमयेति । अधिकया यः प्रार्थितः स पूर्वायाः सिद्ध्यति, सख्या प्रच्छन्नं संसृष्टः, प्रच्छन्नं कामितस्तत्परिचयान्नायिकायाः सिद्धः, सुभगाभिख्यातः, सौभाग्यख्यातिमावहन् स्त्रीषु सिद्धः, सह संवृद्धो यया एकस्मिन् गृहे स तस्याः सिद्धः, प्रातिवेश्यः कामशीलः, सोऽस्या वच-

नमात्रसाध्यः, तथाभूतश्च परिचारकः कामशीलः सोऽस्याः सिद्धः, धात्रेयिकापरिग्रहः, धात्रेयिकया पतित्वेन यो गृहीतस्तत्परिचयादस्याः-सिद्धः, नववरक इति। यस्मिन्गृहे नवो जामाता तत्रत्यासु स्त्रीषु सिद्धः, प्रेक्षोद्यानत्यागशील इति। नटादिप्रेक्षणशील उद्यानक्रीडाशीलस्त्यागशीलस्त्रयोऽपि कामशीलत्वात्स्त्रीषु सिद्धाः,,वृषइति सिद्धप्रतापः, व्यवायीति यो लब्धप्रतापः स स्त्रीषु सिद्ध एवास्ति, साहसिक इति। नावमृष्य सहसा यः प्रवर्तेत स स्त्रीणां वचनमात्रमपेक्षते, शूर इति। अकुतोभयत्वात्परस्त्रियमपेक्षमाण एव तिष्ठति, पत्युरतिशयितेति। यस्या भर्तारं विद्याऽऽदिभिरतिशेते स तस्याः सिद्धः, महार्हो वेषोपचारो यस्य स-कामशीलत्वात्स्त्रीषु सिद्धः॥ ५० ॥

इति स्त्रीषु सिद्धाः पुरुषा द्वाचत्वारिंशं प्रकरणम् ॥

यथाऽऽत्मनः सिद्धतां पश्येदेवं योषितोऽप्ययत्नसाध्यतामित्ययत्नसाध्या योषित उच्यन्ते ॥ ५१ ॥

॥ ५१ ॥

योषितास्त्विमा अभियोगमात्रसाध्या—द्वारदेशावस्थायिनी, प्रासादाद्राजमार्गावलोकिनी, तरुणप्रातिवेश्यगृहे गोष्ठीयोजिनी, सततप्रेक्षिणी, प्रेक्षिता पार्श्वविलोकिनी, निष्कारणं सपत्न्याऽधिविन्ना, भर्तृद्वेषिणी, विद्विष्टा च, परिहारहीना, निरपत्या, ज्ञातिकुलनित्या, विपन्नापत्या, गोष्ठीयोजिनी, प्रीतियोजिनी, कुशीलवभार्या, मृतपतिका बाला, दरिद्रा, बहूपभोगा, ज्येष्ठभार्या बहुदेवरिका, बहुमानिनी न्यूनभर्तृका, कौशलाभिमानिनी भर्तुर्मौर्ख्येणोद्विग्ना, अविशेषज्ञतया लोभेन, कन्याकाले यत्नेन वरिता कथं चिदलब्धाऽभियुक्ता च सा तदानीं समानबुद्धिशीलमेधाप्रतिपत्तिसात्म्या, प्रकृत्या पक्षपातिनी, अनपराधेऽवमानिता, तुल्यरूपाभिश्चाधःकृता, प्रोषितपतिका, ईर्ष्यालुपूतिचोक्षक्लीबदीर्घसूत्रकापुरुषकुब्जवामनविरूपमणिकारग्राम्यदुर्गन्धिरोगिवृद्धभार्याश्चेति ॥ ५२ ॥

योषितस्त्विति। इमा इति। वक्ष्यमाणाः, अभियोगमात्रसाध्या इति। या अभियोगमात्रमपेक्षन्ते नाधिकं ता अयत्नसाध्या इत्युच्यन्ते, द्वार-

देशावस्थायिनीति । पुरुषदिदृक्षया द्वारदेशेऽवस्थातुं शीलं यस्याः सा चपलाऽभियोगमात्रसाध्या, प्रासादमारुह्य राजमार्गावलोकिनी, राजमार्गे हि पुरुषाणां संनिधानात्, सतरुणेति । सतरुणाः पुमांसो यत्रेति प्रातिवेश्यगृहे, तत्रत्याभिः स्त्रीभिर्गोष्ठीयोजिनी सा चापल्यं द्योतयति, सततप्रेक्षिणी चेति । या सततं प्रेक्षते सा तस्य साध्या, प्रेक्षितेति । नायकेन, पार्श्वविलोकिनी, या पार्श्वमवलोकयति किमन्येन ? दृष्टाऽस्मीति, साऽपि चापल्यं कथयति, निष्कारणमिति । जाड्यदौःशील्यादिकं विना, सपत्न्याऽधिविन्ना, युक्तामर्षात्परपुरुषमिच्छति, भर्तृद्वेषिणी, गुणवन्तमपि भर्तारमनिच्छन्ती, विद्विष्टा चेति । भर्ता यां द्वेष्टि, द्वे अपि चञ्चले, परिहारहीना, निष्परिहारा परिहार्येषु सा स्वभावत एव व्यभिचारिणी, निरपत्या, भर्तुरपत्यमपश्यन्ती परानुपैति, ज्ञातिकुलनित्या, ज्ञातिगृहे सदाऽवस्थिता स्वातन्त्र्याद्भिन्नवृत्तिः, विपन्नापत्या, भर्तुर्यद्यदपत्यं तत्तद्विपद्यत इति परपुरुषापेक्षाऽपत्याभावाद्, गोष्ठीयोजिनी, स्वगृहे सखीगृहे वा चापल्यं सूचयति, प्रीतियोजिनी, येन सह प्रीतिं योजयति तस्य साध्या, कुशीलवभार्या, नटनर्तकादीनां भार्या वेश्याप्रायाः, मृतपतिका बालेति । बाला च या विधवा सा तारुण्ये निषीदन्ती शीलं खण्डयति, दरिद्रा, बहूपभोगान्वितं दातारमभिगच्छति, ज्येष्ठभार्या बहुदेवरिका, प्रायशो देवरैरेव व्युत्पादिता, बहुमानिनी न्यूनभर्तृकेति । आत्मनि बहुमानो यस्या न्यूनश्च भर्ता सा न तत्र रमते, कौशलाभिमानिनी, कलानां परिज्ञानाभिमानो यस्याः सा, भर्तुर्मौर्ख्येण, मूर्खत्वेनोद्विग्ना, नियतं तत्कुशलमन्यमिच्छतीति, अविशेषज्ञतया भर्तुरुद्विग्ना विशेषज्ञानलोभेन सुखमलब्ध्वा न तत्र रमते, कन्याकाल इति । कन्याऽवस्थायां यत्नान्नायकेन वृता कथं चिद् दैवयोगात्तेन न लब्धा सत्यन्येनोढेत्यभियुक्ता तदानीं यदा तस्येच्छा सा तस्य साध्या पूर्वानुरागात्,समानबुद्धिरिति । नायकेन तुल्या बुद्ध्यादयो यस्याः सा तस्य साध्या, तत्र बुद्धिर्बोध्येषु, शीलं = स्वभावः, मेधा = विद्याकलासु ग्रहणशक्तिः,प्रतिपत्तिः = अनुष्ठानं, सात्म्यं = देशसात्म्यं कृतिसात्म्यं च, प्रकृत्येति । स्वभावेन यं प्रति पक्षपातो यस्याः सा तस्य साध्या, अनपराधइति । दोषं विना भर्त्रा त्ववमानिता परिभूता न तत्र सज्जतेऽन्यमिच्छति, तुल्यरूपाभिश्चाधः कृतेति । समानपत्नीभिर्न्यक्कृता विरागादन्यमिच्छति, प्रोषितपतिका, ब्रह्मचर्येण भग्ना कथमन्यन्नेच्छेद्, ईर्ष्यालित्विति । योनिष्कारणमीर्ष्यति तस्य भार्या विटैश्चिरमपहृतैव, पूतिः =

शरीरसंस्कार रहितः, तस्य भार्या कश्मलत्वाद्विमुखी भवति, चोक्षः=जातिविशेषः, तद्भार्या वेश्याप्राया, क्लीबः=नपुंसकः, दीर्घसूत्रः, कार्यमवमृश्य तदा नारभते, कापुरुषः=पौरुषहीनः, द्वयोरपि भार्या परस्यैव, कुब्जवामनयोर्विरूपयोरप्युपादानं वैरूप्यभेदप्रदर्शनार्थं, द्वयोरपि भार्या खण्डितशीला, मणिकारः=मणीनां संस्कर्ता, तद्भार्या सदैव हट्टचारिणी खण्डितशीला, ग्राम्यभार्या नागरकस्यायत्नसाध्या, ऋजुत्वाद्, दुर्गन्धिः, शरीरे यस्य दुष्टो गन्धः स उद्वेगकरः, रोगी यो दीर्घरोगयुक्तः, वृद्धः=व्यवायाक्षमः, एषां भार्या व्यभिचारिण्यः ॥ ५२ ॥

प्रकरणत्रयार्थमुपसंहरन्नाह—

श्लोकावत्र भवतः—

इच्छा स्वभावतो जाता क्रियया परिबृंहिता ।
बुद्ध्या संशोधितोद्वेगा स्थिरा स्यादनपायिनी ॥ ५३ ॥

इच्छेति। स्वभावतो यं कं चिदुज्वलं दृष्ट्वा कामयत इति, क्रिययेति। परिचयाभियोगलक्षणया, परिबृंहिता वर्धिता, बुद्ध्येति। प्रज्ञया, संशोधितोद्वेगेति। सम्प्रयोगोपायमपश्यन्ती, उद्वेगयुक्ताऽपि स्यात्, तदुपायदर्शनेनापनीतोद्वेगा सा चैवंविधा स्थिरा स्यादनपायिनीत्वात् ॥ ५३ ॥

सिद्धतामात्मनो ज्ञात्वा लिङ्गान्युन्नीय योषिताम् ।
व्यावृत्तिकारणोच्छेदी नरो योषित्सु सिध्यति ॥ ५४ ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे स्त्रीपुरुषशीलावस्थापनं व्यावर्तनकारणानि स्त्रीषु सिद्धाः पुरुषा अयत्नसाध्या योषितः प्रथमोऽध्यायः ।

सिद्धतामिति। ज्ञात्वा, किमहमस्याः सिद्ध इति, लिङ्गानि=इच्छासूचकानि, इङ्गिताकारादीनीत्यर्थः, उन्नीयेति। ज्ञात्वा, व्यावृत्तिकारणोच्छेदी, रागवर्धनादिभिः, योषित्सु सिद्ध्यत्यभियुञ्जानः फलं लभत इत्यर्थः ॥ ५४ ॥

इत्ययत्नसाध्या योषितस्त्रयश्चत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां पारदारिके पञ्चमेऽधिकरणे स्त्रीपुरुषशीलावस्थापनं, व्यावर्त्तनकारणानि, स्त्रीषु सिद्धाः पुरुषाः, अयत्नसाध्या योषितः प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

क्रियया परिबृंहितेत्युक्तं तां क्रियां दर्शयितुमाह—

यथा कन्या स्वयमभियोगसाध्या न तथा दूत्या, परस्त्रियस्तु सूक्ष्मभावा दूतीसाध्या न तथाऽऽत्मनेत्याचार्याः ॥ १ ॥

यथेति । अभियोगसाध्ये द्वे नायिके, कन्या परयोषिच्च, अभियोगो द्विविधः-आत्मना दूत्या च, अत्राचार्याणां मतं, यथा कन्येति । कन्यानामसम्प्रयुक्तत्वात्तासु प्रायेण युक्त्याऽभियोगाः, तांश्च नायक एव प्रयोक्तुं शक्कोति न दूती, एवं च तास्वेकपुरुषाभियोगा उक्ताः, सूक्ष्मभावा इति । प्रवृत्तसंप्रयोगत्वात्परपुरुषसंदर्शनमपि न सम्भवति, किमु तस्मिन्भावप्रकाशनं, दूत्यामुभयं सम्भवति, तस्माद् दूत्यैव साध्या इति ॥ १ ॥

सर्वत्र शक्तिविषये स्वयं साधनमुपपन्नतरकं दुरुपपादत्वात्तस्य दूतीप्रयोग इति वात्स्यायनः ॥ २ ॥

सर्वत्रेति । कन्यासु परस्त्रीषु चेति, शक्तिविषय इति । यत्र स्वयमभियोक्तुं शक्नोति, उपपन्नतरकं, दूतीसाधनात्, तस्येति । स्वयमभियोगस्य, दुरुपपादत्वादिति । यत्र दुःखेनोपपाद्यते तत्र दूतीप्रयोगः ॥२॥

तदेव प्रायोवादेन दर्शयन्नाह—

प्रथमसाहसा अनियन्त्रणसम्भाषाश्च स्वयं प्रतार्याः, तद्विपरीताश्च दूत्येति प्रायोवादः ॥ ३ ॥

प्रथमेति । प्रथमं साहसं चारित्रखण्डनं यासां, तासु नायक एव समर्थो न दूती, अनियन्त्रणमनिषिद्धं सम्भाषणं यासां, नायकेन सह तास्वपि किं दूत्येति, स्वयं प्रतार्या इति । स्वयमुपपन्नतरकत्वं प्रदर्शयति, दुरुपपादत्वमाह—तद्विपरीता इति । बहुशः खण्डितचारित्रा नियन्त्रणसम्भाषिण्यः ॥ ३ ॥

ननु प्रथमसाहसायां गमनं प्रतिषिद्धं, विषयस्याशुद्धत्वात्, सत्यं; शरीरोपघातत्राणार्थमुक्तं, स्वयमभियोगस्तु न परिचयं विनेति, परिचयकारणान्युच्यन्ते, यदाह—

स्वयमभियोक्ष्यमाणस्त्वादावेव परिचयं कुर्यात् ॥ ४ ॥

अभियोक्ष्यमाणोऽभियोगं करिष्यन् ॥ ४ ॥

परिचयश्च संदर्शनपूर्वकः, संदर्शनं च द्विविधमित्याह—

तस्याः स्वाभाविकं दर्शनं प्रायत्निकं च ॥ ५ ॥

॥ ५ ॥

स्वाभाविकमात्मनो भवनसंनिकर्षे, प्रायत्निकं मित्त्रज्ञातिमहामात्रवैद्यभवनसंनिकर्षे विवाहयज्ञोत्सवव्यसनोद्यानगमनादिषु ॥६॥

भवनसंनिकर्ष इति। गृहसमीपे क्वचिदागताया दर्शनं स्वाभाविकं न प्रयत्नकृतम्, मित्त्रादीनां यद् गृहं तत्समीपे यद्दर्शनं विवाहादिषु च तत्प्रायत्निकं, गमनप्रयत्नसाध्यत्वात्॥ ६ ॥

तत्र च द्विविधे संदर्शने परिचयकारणं द्विविधं बाह्यमाभ्यन्तरं च तत्र पूर्वमधिकृत्याह—

दर्शने चास्याः सततं साकारं प्रेक्षणं केशसंयमनं नखाच्छुरणमाभरणप्रह्लादनमधरौष्ठविमर्दनं तास्ताश्च लीला वयस्यैः सह प्रेक्षमाणायास्तत्सम्बद्धाः परापदेशिन्यश्च कथाः, त्यागोपभोगप्रकाशनं, सख्युरुत्सङ्गनिषण्णस्य साङ्गभङ्गं जृम्भणम्, एकभ्रूक्षेपणं, मन्दवाच्यता, तद्वाक्यश्रवणं, तामुद्दिश्य बालेनान्यजनेन वा सहान्योपदिष्टा द्व्यर्था कथा, तस्यां स्वयं मनोरथावेदनमन्यापदेशेन, तामेवोद्दिश्य बालचुम्बनम्, आलिङ्गनं च, जिह्वया चास्य ताम्बूलदानं, प्रदेशिन्या हनुदेशघट्टनं, तत्तद्यथायोगं यथाऽवकाशं च प्रयोक्तव्यम् ॥ ७ ॥

साकारमिति। भावसूचकेन मुखनयनगतेनाकारेण सह सततं प्रेक्षणं कर्तव्यं, केशसंयमनं केशानवमुच्य बन्धनं, नखाच्छुरणं स्वाङ्गेष्वाच्छुरितकम्, आभरणस्य प्रह्लादनं शब्दनम्, अधरोष्ठविमर्दनमङ्गुष्ठसम्पुटेन परिघर्षणं, तास्ताश्चेति। गुणसंवर्णनप्रधानाः कथाः, वयस्यैः=मित्त्रैः, प्रेक्षमाणाया इति। नायिकायाः पश्यन्त्याः, तत्सम्बद्धा इति। नायिकासम्बद्धाः, परापदेशिन्य इति। नायकापदेशिन्यः, त्यागोपभोगप्रकाशनमन्येन दातृत्वभोगित्वख्यापनार्थं, सख्युरिति। मित्रस्योत्सङ्गे निषण्णस्य, साङ्गभङ्गमिति। साङ्गस्फोटनं जृम्भणं विजृम्भिका स्यात्,एकभ्रूक्षेपणं निषण्णस्यैव, मन्दवाक्यपा गद्गदवचनता किमु मां किञ्चिद्वक्तीति, तामिति, नायिकाम्, बालेनेति, तत्पार्श्ववर्तिनाऽप्रगल्भरूपेण, जनेन चान्येन, अन्योपदिष्टेति, तत्सुहृदा कृता न स्वयम्, द्व्यर्था कथेत्येको बालेन सम्बद्धोऽर्थो द्वितीयो नायिकया, तस्यामिति। कथायां क्रियमाणायां स्वयमात्मतो मनोरथावेदनम्, अन्यापदेशेनेत्यस्मन्मित्त्रस्य तस्यामतिदुर्घटो मनोरथः स किं भविष्यति न भविष्यतीति न जाने, तामेवेति, नायिकाम्, बालस्य चुम्बनमालि

ङ्गनं संक्रान्तकं, जिह्वया च प्रसारितया, प्रदेशिन्या = तर्जन्या, हनुदेश-घट्टनं = कपोलयोरधस्ताच्चालनं, तामुद्दिश्येति सर्वत्र योज्यं, तत्तदि-ति। अन्यदप्येवंविधं, यथायोगमिति। यद्यस्य युज्यते स्पर्शनं ताडनं वा, यथाऽवकाशमिति। यथाप्रदेशं कक्षयोरुरसि पृष्ठे वा बालस्य विधेयम्॥७॥

तस्याश्चाङ्कगतस्य बालस्य लालनं, बालक्रीडनकानां चास्य दानं, ग्रहणं, तेन संनिकृष्टत्वात्कथायोजनं, तत्सम्भाषणक्षमेण जनेन च प्रीतिमासाद्य कार्यं, तदनुबन्धं च गमनागमनस्य योजनं,-संश्रवे चास्यास्तामपश्यतो नाम कामसूत्रसंकथा ॥ ८ ॥

तस्याश्चेति। नायिकायाः, अङ्कगतस्य=क्रोडस्थस्य, लालनं मृदुना वचसा, बालक्रीडनकानां = जातुपशुलिकाऽऽदीनां दानं, तेनेति। दानग्रह-णसम्बन्धेन संनिकृष्टत्वात्कथायोजनं कार्यशरीरगर्भस्य वाक्यस्य योजन-मित्यर्थः, तत्संभाषणक्षमेणेति। तया सह बत्संभाषणं तत्र क्षमो यो-जनस्तत्प्रीतिमित्यर्थः, तेन सह प्रीतिमासाद्य संयोज्य कार्यं प्रयोक्तव्य-मिति शेषः, तदनुबन्धं चेति। कार्यानुबन्धं गमनागमनस्य प्रयोजनं, येन लोकोऽनेन कार्येणास्य गमनागमनं नान्येनेति मन्यते, संश्रवे चास्या-इति। यत्र सा शृणोति तत्र कामसूत्रसङ्कथा विज्ञत्वख्यापनार्थं, तत्रापि तामपश्यतो नामेति। न किलाहमेनां पश्यामीति, अन्यथा तां पश्यतः-कथयतो दुर्विदग्धता स्यात्॥ ८ ॥

आभ्यन्तरमधिकृत्याह—

प्रसृते तु परिचये तस्या हस्ते न्यासं निक्षेपं च निदध्यात्॥९॥

प्रसृत इति। प्रसृते न तु सर्वथोत्पन्ने परिचये, न्यासाः संस्था-प्याश्चिरकालग्राह्याः, निक्षेपं यदल्पकालग्राह्यम्॥ ९ ॥

तत्प्रतिदिनं प्रतिक्षणं चैकदेशतो गृह्णीयात् सौगन्धिकं पूग-फलानि च ॥ १० ॥

तत्र प्रतिदिनं न्यासं, प्रतिक्षणं निक्षेपकं, तदुभयमेकदेशतः स्तो-कस्तोकेन गृह्णीयात्, तदेव यथाक्रमं दर्शयति—सौगन्धिकं पूगफलानि चेति। सौगन्धिकं = सुगन्धिद्रव्याणां समूहः, तद्द्वारेण प्रतिदिनं न्यासं-निक्षेपं च, यदल्पकालग्राह्यं प्रतिक्षणं च दृश्यते॥ १० ॥

तामात्मनो दारैः सह विस्रम्भगोष्ठ्यां विविक्तासने च यो-जयेद् विश्वासनार्थं च ॥ ११ ॥

विस्रम्भगोष्ठ्यां विविक्तासने चेति। तामुपनिमन्त्र्यास्माभिः प्रच्छन्ने

समुपविश्य; पानगोष्ठी कर्तव्येत्यभिधाय; स्वदारैः सह तत्र विश्वासनार्थं योजयेत् ॥ ११ ॥

नित्यदर्शनार्थं सुवर्णकारमणिकारवैकटिकनीलीकुसुम्भरञ्जकादिषु च कर्मार्थिन्यां सहात्मनो वश्यैश्चैषां तत्सम्पादने स्वयं प्रयतेत ॥ १२ ॥

नित्यदर्शनार्थं चेति । प्रतिक्षणं दर्शनार्थं, स्वयं प्रयतेतेति, वक्ष्यमाणेन सम्बन्धः, वैकटिकः = रत्नानां परिशोधकः, नीलीरञ्जककुसुम्भरञ्जकौ प्रतीतौ, आदिशब्दात्त्वष्टृकांस्यकारादयः, तेषां कर्मार्थिन्यां सत्यामात्मवश्यैर्विधेयैः सुवर्णकारादिभिः, तत्सम्पादने = सुवर्णादिकर्मसम्पादने॥१२॥

तदनुष्ठाननिरतस्य लोकविदितो दीर्घकालं संदर्शनयोगः ॥१३॥

तदनुष्ठाननिरतस्येति । सुवर्णादिकर्म स्वयमधिष्ठाय कारयतः संदर्शनयोगो न प्रच्छन्नयोगः स्याद्, अपि तु दीर्घकालं लोकस्य विदितः, अन्यथा लोकस्तं दृष्ट्वा सहसा विकल्पयति ॥ १३ ॥

तस्मिंश्चान्येषामपि कर्मणामनुसन्धानं येन कर्मणा द्रव्येण कौशलेन चार्थिनी स्यात्तस्य प्रयोगमुत्पत्तिमागममुपायं विज्ञानं चात्मायत्तं दर्शयेत् ॥ १४ ॥

तस्मिन्निति कर्मण्यनुष्ठीयमानेऽसमाप्त एवान्येषां कर्मणामनुसन्धानं कर्तव्यं, मा भूद्दर्शनविच्छेद इति, येनेति । कर्मणा = दुष्करेण, द्रव्येण = दुष्प्रापेण, कौशलेन = दुरागमेन, तस्येति । यथोक्तस्य कर्मणः प्रयोगं यथा तत्प्रयुज्यते, द्रव्यस्योत्पत्तिं यथा तद् भवति, कौशलस्यागमं यथा तदागम्यते, उपायं विज्ञानं चेति । त्रयाणामपि यथासंभवमुपायं विज्ञानं चात्मायत्तं, सर्वमेतद् दर्शयेत् ॥ १४ ॥

पूर्वप्रवृत्तेषु लोकचरितेषु द्रव्यगुणपरीक्षासु च तया तत्परिजनेन च सह विवादः ॥ १५ ॥

पूर्वप्रवृत्तेष्विति । नेदानीं प्रवृत्तेषु तेषामनार्षत्वाद्, लोके प्रवृत्तेषु पुराणरामायणभारतोक्तेषु प्रसङ्गादुदीरितेषु, द्रव्याणां च गुणपरीक्षासु, तया नायिकयाऽन्यैस्तत्परिजनैः सह विवादः कर्त्तव्यः, नैवमिदमेवमिति ॥ १५ ॥

तत्र निर्दिष्टानि पणितानि तेष्वेनां प्राश्निकत्वेन योजयेत् ॥१६॥

तत्रेति । विवादे, निर्दिष्टानीति । यद्यन्यथा स्यादिदं देयमिति, तेषु च पणितेषु, एनां नायिकाम् , प्राश्निकत्वे नियोजयेद्, यद्यन्यैः सह

विवादः ॥ १६ ॥

तया तु विवदमानोऽन्यं तद्भक्तमिति परिचयकारणानि॥ १७॥

तया त्विति । नायिकया, अन्यमिति । परिजनं, तद्भक्तमिति । नायिकापक्षपातिनं, योजयेद् नायिकाविजयस्याभिप्रेतत्वात् ॥ १७ ॥

इति परिचयकारणानि त्रयश्चत्वारिंशं प्रकरणम् ॥

शास्त्रकार एव प्रकरणसंबन्धमाह—

कृतपरिचर्यां दर्शितेङ्गिताकारां कन्यामिवोपायतोऽभियुञ्जीतेति ॥ १७ ॥

कृतपरिचर्यामिति । कन्यामिवेति । तस्या अपि दर्शितेङ्गिताकारायाएवाभियोग उपायत इत्युपाया अभियोगाः, अभियुज्यन्त एभिरिति कृत्वा त एवात्रापि द्रष्टव्या; ये कन्यासंप्रयुक्तकेऽभिहिताः ॥ १७ ॥

विशेषमाह—

प्रायेण तत्र सूक्ष्मा अभियोगाः कन्यानामसम्प्रयुक्तत्वात् ॥१८॥

प्रायेणेति । तत्रेति । कन्यायां, सूक्ष्मा इत्यनभिव्यक्तभावाः, असम्प्रयुक्तत्वादव्युत्पन्नत्वादित्यर्थः ॥ १८ ॥

इतरासु तानेव स्फुटमुपदध्यात् सम्प्रयुक्तत्वात् ॥ १९ ॥

इतरासु तु परस्त्रीषु, तानेव ये कन्यासूक्ताः, स्फुटमिति । क्रियाविशेषणम्, अभिव्यक्तभावं प्रयुञ्जीतेत्यर्थः, तासां संप्रयोगे प्रवृत्तत्वाद्, ये तु तास्वेव विशेषेण युज्यन्ते, ते द्विविधाः–बाह्या आभ्यन्तराश्च, ॥ १९ ॥

तत्र पूर्वानधिकृत्याह—

संदर्शिताकारायां निर्भिन्नसद्भावायां समुपभोगव्यतिकरे तदीयान्युपयुञ्जीत ॥ २० ॥

संदर्शिताकारायामिति । निर्भिन्नसद्भावायामिति । प्रकटितसद्भावायां सत्यां, समुपभोगव्यतिकरे तदीयानीति । नायिकावस्तूनि स्वयमुपयुञ्ज्यात्स्वानि च स्वमिव तामुपयोजयेत् ॥ २० ॥

तत्र महार्हगन्धमुत्तरीयं कुसुमं चात्मीयं स्यादङ्गुलीयकं च तद्धस्तात् ताम्बूलग्रहणं गोष्ठीगमनोद्यतस्य केशहस्तपुष्पयाचनम् ॥२१॥

तत्रेति। परिवर्तमाने, महार्हगन्धम् = अत्यन्तसुरभि, उत्तरीयं कुसुमं च, आत्मीयं स्यात् = स्वीकुर्यादित्यर्थः, अङ्गुलीयकं च महार्हं स्यात्, तद्धस्तान्नायकहस्ताद्यदि तया ताम्बूलं गृहीतं, गोष्ठीगमनोद्यतस्येति ।

कर्तरि षष्ठी, केशहस्तः=केशकलापः, तत्रस्थपुष्पयाचनं, सिद्धिकरमेतदिति ॥ २१ ॥

तत्र महार्हगन्धं स्पृहणीयं स्वनखदशनपदचिह्नितं साकारं दद्यात् ॥ २२ ॥

स्वयं तु ददन्नायको यन्महार्हगन्धं स्पृहणीयं लोकस्य, तदन्यहस्तेन यदा दद्यात्तदा स्वनखदशनपदचिह्नितं, यदा स्वहस्तेन तदा साकारं, क्रियाविशेषणमेतद्, एवं प्रकारद्वयेऽपि भावः सूचितो भवति ॥ २२ ॥

अधिकैरधिकैश्चाभियोगैः साध्वसविच्छेदनम् ॥ २३ ॥

अधिकैरधिकैः पूर्वपूर्वेभ्यः, साध्वसविच्छेदनम्, प्रायेण परयोषित्परपुरुषेषु ससाध्वसा भवति ॥ २३ ॥

आभ्यन्तरानधिकृत्याह--

क्रमेण च विविक्तदेशे गमनमालिङ्गनं चुम्बनं ताम्बूलस्य ग्राहणं दानान्ते द्रव्याणां परिवर्तनं गुह्यदेशाभिमर्शनं चेत्यभियोगाः ॥ २४ ॥

क्रमेण चेति । यदैकान्तेन गतसाध्वसा, तदा विविक्तदेशगमनं- यस्मिन्प्रच्छन्ने देशे तिष्ठति, तत्र चालिङ्गनादयः प्रयोक्तव्याः, गुह्यदेशाभिमर्शनं=कक्षोरुमूलजघने विमर्दनम्, उत्क्षिप्तकेन ॥ २४ ॥

अभियोगस्याविषयमाह—

यत्र चैकाभियुक्ता न तत्रापरामभियुञ्जीत, तत्र या वृद्धाऽनुभूतविषया प्रियोपग्रहैश्च तामुपगृह्णीयात् ॥ २५ ॥

यत्र चेति । गृहे, अपरामिति । द्वितीयां नाभियुञ्जीत, परस्परकलहाद् विगोपनं स्याद्, यत्र वा गृहे वृद्धा स्त्री, अनुभूतविषया प्रवृत्तपरपुरुषसंप्रयुक्तत्वाद्, न तत्र स्त्रियमभियुञ्जीतेत्येव, प्रियोपग्रहैश्चेति । प्रियं यदा स्वसुखकारणं तदैवोपग्रहः, उपगृह्यतेऽनेनेति, उपगृह्य स्वीकृत्योपन्यस्यात् ॥ २५ ॥

श्लोकावत्र भवतः—

अन्यत्र दृष्टसंचारस्तद्भर्ता यत्र नायकः ।
न तत्र योषितं कां चित्सुप्रापामपि लङ्घयेत् ॥ २६ ॥

यत्रेति । यस्मिन्गृहे नायिकाया भर्ता, अन्यस्यां योषिति दृष्टसंचारो दृष्टाभिगमो न तत्र गृहे, सुप्रापामपि=सुलभामपि, लङ्घयेदधिगच्छेदित्यर्थः ॥ २६ ॥

शङ्कितां रक्षितां भीतां सश्वश्रूकां च योषितम् ।
न तर्कयेत मेधावी जानन्प्रत्ययमात्मनः ॥ २७ ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे परिचयकारणान्यभियोगा द्वितीयोऽध्यायः ।

शङ्कितामभियोक्तरि जाताशङ्कां, रक्षितां शस्त्रिभिः, भीतां पत्युः, सश्वश्रूकां श्वश्र्वधिष्ठितां, न तर्कयेत=नाभिलषेद्, जानन्प्रत्ययमिति । अहमत्राशक्त इति निश्चयमधिगच्छन् ॥ २७ ॥

इत्यभियोगाश्चतुश्चत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां पारदारिके पञ्चमेऽधिकरणे परिचयकारणान्यभियोगा द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः ।

सत्यप्यभियोगे धीराः प्रगल्भाः परीक्षिण्यो याः स्त्रियस्ता न निर्भिन्नसद्भावास्ततश्च न तासु विशेषाभियोग इति भावपरीक्षोच्यते--

अभियुञ्जानो योषितः प्रवृत्तिं परीक्षेत तया भावः परीक्षितो भवति ॥ १ ॥

कन्यामिवाभियुञ्जानः, प्रवृत्तिं=चेष्टां, परीक्षेत, अनया हि परीक्षितया भावः परीक्षितो भवति ॥ १ ॥

कथं साधयेत्याह—

मन्त्रमवृण्वानां दूत्यैनां साधयेत् ॥ २ ॥

मन्त्रमवृण्वानामिति । सांप्रयोगिकं भावमप्रकाशयन्तीं, दूत्या साधयेद् अप्रगल्भत्वात् ॥ २ ॥

अप्रतिगृह्याभियोगं पुनरपि संसृज्यमानां द्विधाभूतमानसां विद्यात् तां क्रमेण साधयेत् ॥ ३ ॥

अप्रतिगृह्याभियोगं नायकेन क्रियमाणं प्रत्याख्याय, पुनरपि कियतोदिवसान्स्थित्वा; संसृज्यमानां नायकेन संसर्गं यातां, द्विधाभूतमानसां विद्यात्, परीक्षणीयत्वात्, किं कुर्यामहं न वेद्मीति, तां क्रमेण साधयेद् न सहसा परित्यजेत् ॥ ३ ॥

अत्र विशेषमाह—

अप्रतिगृह्याभियोगं सविशेषमलंकृता च पुनर्दृश्येत तथैव त-

मभिगच्छेच्च विविक्ते बलाद्ग्रहणीयां विद्यात् ॥ ४ ॥

सविशेषमिति। यथा पूर्वमलंक्रियमाणा ततः सविशेषमलंकृता, पुनर्नायकेन दृश्येत, तथैव चाभिगच्छेन्नायकं, नायिकां विविक्ते स्थितां, बलाद् ग्रहणीयां=हठाद् ग्राह्यां, विद्याद् धीरात्वात् ॥ ४ ॥

बहूनपि विषहतेऽभियोगान्न च चिरेणापि प्रयच्छत्यात्मानं सा शुष्कप्रतिग्राहिणी परिचयविघटनसाध्या ॥ ५ ॥

बहूनपि विषहते ये ये क्रियन्ते, न च चिरेणापीति । बहुभिरपि दिवसैः, शुष्कप्रतिग्राहिणीति । अर्थशून्यानभियोगान्प्रतिग्रहीतुं शीलमस्याः, अतिपरोक्षणीयत्वात्, परिचयविघटनसाध्येति । परिचयापनयसाध्या ॥ ५ ॥

कथं तदपनयनात्सिध्यतीत्याह—

मनुष्यजातेश्चित्तानित्यत्वात् ॥ ६ ॥

मनुष्यजातेरिति। तद्वतोऽभिधानं, चित्तानित्यत्वादिति। मनसश्चलत्वाद्, यतो विच्छिन्ने परिचये पुनः स्वयं संधत्ते ॥ ६ ॥

अभियुक्ताऽपि परिहरति न च संसृज्यते न च प्रत्याचष्टे तस्मिन्नात्मनि च गौरवाभिमानात् साऽतिपरिचयात्कृच्छ्रसाध्या मर्मज्ञया दूत्या तां साधयेत् ॥ ७ ॥

अभियुक्ताऽपि परिहरति, अभियोगं परिहृत्यापि का चित्संसर्गं यात्यपीत्याह-न च संसृज्यत इति । तस्या आत्मन्यभिमानाद्, न च प्रत्याचष्टे, नायकमेकान्तेन, तस्मिन्नायके च गौरवाभिमानात्, साऽतिपरिचयात्कृच्छ्रेण साध्या तस्या ह्यतिधीराया अतिपरिचयेन गौरवाभिमानौ कृच्छ्रेण स्फुटतः, मर्मज्ञया वा दूत्या साध्या तद्वशत्वात् ॥ ७ ॥

तत्र विशेषमाह—

सा चेदभियुज्यमाना पारुष्येण प्रत्यादिशत्युपेक्ष्या ॥ ८ ॥

सा चेदिति। पारुष्येण प्रत्यादिशति, निष्ठुरवाक्येन नायकं प्रत्याचष्टे, उपेक्षेत नाभियुञ्जीत ॥ ८ ॥

अत्रापि विशेषमाह—

परुषयित्वाऽपि तु प्रीतियोजिनीं साधयेत् ॥ ९ ॥

परुषयित्वाऽपि त्विति। परुषमुक्त्वाऽपि, प्रीतियोजनशीलां, साधयेत्पुनरभियुञ्जीत, तस्या जातविप्रतिपत्तिसारत्वात् ॥ ९ ॥

कारणात्संस्पर्शनं सहते नावबुध्यते नाम द्विधाभूतमानसा सा·

तत्येन क्षान्त्या वा साध्या ॥ १० ॥

कारणादिति । कुतश्चिन्निमित्तात्संस्पर्शनमभियोगं सहते न शुष्कप्रतिग्राहिणीत्यर्थः, नावबुध्यते नामेति। नायकाभिप्रायमजानतीव संस्पर्शनं सहते सैवम्भूता द्विधाभूतमानसा परीक्षणीयत्वात्, सातत्येन क्षान्त्या वा साध्येति । अविच्छेदेन संस्पर्शस्य क्षमणं कार्यमित्यर्थः ॥ १० ॥

समीपे शयानायाः सुप्तो नाम करमुपरि विन्यस्येत् साऽपि सुप्ता नामोपेक्षते जाग्रती त्वपनुदेद् भूयोऽभियोगाकाङ्क्षिणी ॥११॥

समीपे शयानाया आन्तराभियोगेन प्रवृत्तिं परीक्षेत, सुप्ता नामेति । कृतकसुप्तः करमुपरि विन्यस्येन्नायिकायाः, सुप्ता नामेति । कृतकसुप्तोपेक्षते हस्तं नापनुदति, जाग्रती त्विति । पुनर्जागरणमपदिश्यापनयति, किमर्थमित्याह–भूयोऽभियोगाकाङ्क्षिणीति । अन्यथा किं सुप्तेनैव न्यस्तः किंवाऽभियोगार्थं कृतकसुप्तेनेति सन्देहः ॥ ११ ॥

एतेन पादस्योपरि पादन्यासो व्याख्यातः ॥ १२ ॥

एतेन हस्तन्यासेन ॥ १२ ॥

तस्मिन्प्रसृते भूयः सुप्तसंश्लेषणमुपक्रमेत ॥ १३ ॥

तस्मिन्निति । हस्तन्यासे पादन्यासे च, प्रसृते निर्बन्धेन प्रवृत्ते, सुप्तसंश्लेषणमिति । कृतकसुप्ताया आलिङ्गनमेवोपक्रमेत न चुम्बनादिकम् ॥ १३ ॥

तदसहमानामुत्थितां द्वितीयेऽहनि प्रकृतिवर्तिनीमभियोगार्थिनीं विद्याद् अदृश्यमानां तु दूतीसाध्याम् ॥ १४ ॥

तदिति संश्लेषणम्, उत्थितां शयनात्, प्रकृतिवर्तिनीमकुपिताम्, अभियोगार्थिनीं विद्याद्, दृश्यमानां पुनरभियुञ्जीतेत्यर्थः, अस्या अप्रगल्भत्वाद्, अदृश्यमानां तु प्रकृतिवर्तिनीं दूतीसाध्यां विद्यात्, तद्विषयत्वात् ॥ १४ ॥

चिरमदृष्टाऽपि प्रकृतिस्थैव संसृज्यते कृतलक्षणां तां दर्शिताकारामुपक्रमेत ॥ १५ ॥

यदा तु तदसहमानोत्थिता चिरं बहून्दिवसान्दृष्टा सती पुनरपि प्रकृतिस्थैवाकुपिता संसृज्यते संसर्गं करोतीति, यद्यप्येवं तथाऽपि, कृतलक्षणां तामिति । जातावसरां दर्शिताकारामुपक्रमेताभियुञ्जीत, तस्या अतिशयेनाप्रगल्भत्वात् ॥ १५ ॥

अनभियुक्ताऽप्याकारयति विविक्ते चात्मानं दर्शयति ॥ १६ ॥

अनभियुक्तेति । अभियुक्ता सुतरां तावद्भावसूचकमाकारं दर्शयत्येव ॥१६॥

सवेपथुगद्गदं वदति ॥ १७ ॥

तत्र च यदि वदति सवेपथु सगद्गदम् ॥ १७ ॥

स्विन्नकरचरणाङ्गुलिः स्विन्नमुखी च भवति ॥ १८ ॥

स्विन्नकरचरणाङ्गुलिः स्विन्नमुखी च भवत्येकान्तेनाहितभावत्वात् ॥ १८ ॥

शिरःपीडने संवाहने चोर्वोरात्मानं नायके नियोजयति ॥१९॥

आतुरा संवाहिका चैकेन हस्तेन संवाहयन्ती द्वितीयेन बाहुना स्पर्शमावेदयति श्लेषयति च ॥ २० ॥

आतुरेति । कामातुरैकान्तेन प्रगल्भा, एवमवस्थाऽपि विविक्ते, संवाहिका चेति । कदा चिदप्रगल्भसंवाहनद्वारेण प्रवृत्तिं दर्शयति, स्पर्शमावेदयतीत्यात्मीयं नायकं ज्ञापयति ॥ २० ॥

विस्मितभावा निद्राऽन्धा वा परिस्पृश्योरुभ्यां बाहुभ्यामपि तिष्ठति ॥ २१ ॥

विस्मितभावेति । विस्मिताख्यो भावो यस्याः, स्पर्शं निवेदयमाना तत्स्पर्शसुखाज्जातविस्मया सती तेनैव द्वितीयबाहुना श्लेषं करोति, निद्राऽन्धा चेति । वा शब्दो भिन्नक्रमः, उभाभ्यां बाहुभ्यां कृतकनिद्रा परिस्पृश्याप्यूरुभ्यां तिष्ठति ॥ २१ ॥

अलिकैकदेशमूर्वोरुपरि पातयति ॥ २२ ॥

अलिकैकदेशमग्रभागं पातयति ॥ २२ ॥

ऊरुमूलसंवाहने नियुक्ता न प्रतिलोमयति ॥ २३ ॥

संवाहयन्ती न प्रतिलोमयति, तत्संवाहनस्येष्टत्वात् ॥ २३ ॥

तत्रैव हस्तमेकमविचलं न्यस्यति ॥ २४ ॥

तत्रैवेति । ऊरुमूले, अविचलं, न्यस्यति लज्जया न व्यापारयति, मा भूज्जघनपार्श्वसंस्पर्श इति ॥ २४ ॥

अङ्गसंदंशेन च पीडितं चिरादपनयति ॥ २५ ॥

अङ्गसन्दंशेन चेति । ऊरुद्वयसंदंशेन नायकेन पीडितं चिरादपनयति, मा भूदिच्छाविघातोऽस्येति ॥ २५ ॥

प्रतिगृह्यैवं नायकाभियोगान् पुनर्द्वितीयेऽहनि संवाहनायोपगच्छति ॥ २६ ॥

नायकाभियोगानिति । तस्यामवस्थायामन्यदा वा नायकाभियोगान्दृष्ट्वा; तदीयं भावं प्रतिगृह्य पुनःसंवाहनायोपगच्छति कार्यस्यानिष्पन्नत्वात् ॥ २६ ॥

नात्यर्थं संसृज्यते न च परिहरति ॥ २७ ॥

नात्यर्थमिति । कदा चिदतिधैर्याद् गूढभावैव प्रवृत्तिं दर्शयति, स्वयं नात्यन्तं संसृज्यते, न च परिहरति संसृज्यमाना ॥ २७ ॥

विविक्ते भावं दर्शयति निष्कारणं चागूढमन्यत्र प्रच्छन्नप्रदेशात् ॥ २८ ॥

विविक्ते भावं दर्शयति, माऽन्यो ज्ञासीदिति, अन्यत्र प्रच्छन्नप्रदेशादिति । जनसंबाधे गूढ इत्याह-निष्कारणमिति । कारणं विना, गूढत्वादिति । प्रच्छन्नत्वात् ॥ २८ ॥

संनिकृष्टपरिचारकोपभोग्या सा चेदाकारिताऽपि तथैव स्यात् सा मर्मज्ञया दूत्या साध्या ॥ २९ ॥

गूढभावत्वेनैव; यः संनिकृष्टः परिचारकस्तेनोपसृज्यते, तेनैव तिष्ठतीति ज्ञातव्या, कथं तर्हि ? तस्यां नायकस्य प्रतिपत्तिरित्याह-सा चेदिति। यथोक्ता, आकारिताऽपि नायकेन पुनराकारं ग्राहिताऽपि, तथैव स्याद्-यथैव प्रागुक्ता, मर्मज्ञया दूत्या साध्या तद्वशत्वाद् ॥ २९ ॥

व्यावर्तमाना तु तर्कणीयेति भावपरीक्षा ॥ ३० ॥

व्यावर्त्तमाना दूत्या साध्यमाना मा भूवमिति, सद्भूतं व्यावर्त्तनकारणमुपन्यस्यति, किं वा सव्याजमिति ॥ ३० ॥

इति भावपरीक्षा पञ्चचत्वारिंशं प्रकरणम् ॥

उक्तमेवार्थं यथाक्रमं दर्शयन्नाह—

भवन्ति चात्र श्लोकाः—

आदौ परिचयं कुर्यात्ततश्च परिभाषणम् ।
परिभाषणसंमिश्रं मिथश्चाकारवेदनम् ॥ ३१ ॥

आदाविति । दर्शनानन्तरं प्रथमं परिचयः, तत इति । प्रकृतात् परिचयान्न्यासनिक्षेपादिना, परिभाषणसंमिश्रमिति । परिभाषणकाल एवाकारवेदनं भावसूचकोपलक्षणत्वाद्, इतीङ्गितवेदनं च, यमधिकृत्योक्तं-कृतपरिचयाद् दर्शितेङ्गिताकारामिति ॥ ३१ ॥

प्रत्युत्तरेण पश्येच्चेदाकारस्य परिग्रहम् ।
ततोऽभियुञ्जीत नरः स्त्रियं विगतसाध्वसः ॥ ३२ ॥

प्रत्युत्तरेणेति । नायकेन दर्शितस्याकारस्य परिग्रहं नायिकया प्रत्युत्तरेण प्रत्याकारेण प्रक्रियमाणं पश्येत्, तत इति । दृष्टात् परिग्रहाद्, विगतसाध्वस इति । निःशङ्कः, किं सेत्स्यति न वेति शङ्काशून्यः ॥ ३२ ॥

द्विविधाः-स्त्रियः, स्फुटा अस्फुटाश्च, तत्र स्फुटासु नायं विधिरिति दर्शयन्नाह—

आकारेणात्मनो भावं या नारी प्राक्प्रयोजयेत् ।
क्षिप्रमेवाभियोज्या सा प्रथमे त्वेव दर्शने ॥ ३३ ॥

आकारेणेति । नारी याऽन्यद्दृष्टपूर्वा, प्राक् प्रदर्शयेद् भावम्, प्रथमे त्वेव दर्शने, न द्वितीयादिदर्शनमपेक्षते ॥ ३३ ॥

श्लक्ष्णमाकारिता या तु दर्शयेत्स्फुटमुत्तरम् ।
साऽपि तत्क्षणसिद्धेति विज्ञेया रतिलालसा ॥ ३४ ॥

श्लक्ष्णमाकारितेति । अस्फुटमाकारं ग्राहिता, स्फुटमुत्तरं प्रत्याकारम्, रतिलालसेति । रतिश्रद्धा ॥ ३४ ॥

अस्फुटासु विधिमाह—

धीरायामप्रगल्भायां परीक्ष्यायां च योषिति ।
एष सूक्ष्मो विधिः प्रोक्तः सिद्धा एव स्फुटं स्त्रियः ॥ ३५ ॥

इति वात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे
भावपरीक्षा तृतीयोऽध्यायः ।

धीरायामिति । धीरायां शनैः प्रवर्त्तते, अप्रगल्भा न शनैरपि परीक्षणीया विमृष्य स्फुटा इति, अनन्तरोक्ते द्वे, याश्चाभियोगमात्रसाध्या उक्तास्ताः स्फुटाः सिद्धा एव ॥ ३५ ॥

इति भावपरीक्षा पञ्चचत्वारिंशं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधरराचितायां जयमङ्गलाऽऽख्यायां पारदारिके पञ्चमेऽधिकरणे भावपरीक्षा तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

अभियुञ्जानः प्रवृत्तिं परीक्षेत, यत्र स्वयमभियोगासम्भवस्तत्र दूतीप्रयोग इति दूतीकर्माण्युच्यन्ते यदाह—

**दर्शितेङ्गिताकारां तु प्रविरलदर्शनामपूर्वां च दूत्योपसर्पयेत् ॥ १ ॥**

दर्शितेङ्गिताकारामिति । इङ्गिताकारौ दर्शयित्वा; का चिदात्मानं दर्शयति न दर्शयति च, कार्ययोगात्, तामपूर्वां चापरिचितां, न दर्शितेङ्गिताकारामित्यर्थः, दूत्योपसर्पयेदात्मसमीपं ढौकयेत् ॥ १ ॥

तत्र मूलभूतास्तिस्रो दूत्यः—निसृष्टार्था परिमितार्था पत्त्रहारी चेति, तासां सामान्येन कर्माण्याह—

**सैनां शीलतोऽनुप्रविश्याख्यानकपटैः, सुभगङ्करणयोगैः, लोकवृत्तान्तैः, कविकथाभिः, पारदारिककथाभिश्च तस्याश्च रूपविज्ञानदाक्षिण्यशीलानुप्रशंसाभिश्च तां रञ्जयेत् ॥ २ ॥**

सैनामिति । शीलत इति । शीलेनादावनुप्रविश्य; विश्वासार्थं शीलवती भूत्वेत्यर्थः आख्यानकपटैरिति । येषु पटेष्वाख्यानकानि चित्रलिखितानि, सुभगङ्करणैर्योगैर्वक्ष्यमाणैः, लोकवृत्तान्तैः=पुराणनिबन्धनैः, कविकथाभिरिति । कविभिर्निबद्धाभिर्बिन्दुमतीप्रभृतिभिः, अन्ते पारदारिककथाभिर्गौतमबृहस्पत्यादिदाराणामिन्द्रचन्द्रादिभिरपहरणकथाभिः, अनुप्रविश्य किं कुर्यादित्याह—तस्या इति । नायिकाया रूपं वर्णं संस्थानं च, विज्ञानं शास्त्रकलासु, दाक्षिण्यम्=आनुकूल्यं, शीलं=सुस्वभावता, तेषां प्रशंसाभिः ॥ २ ॥

**कथमेवंविधायास्तवायमित्थम्भूतः पतिरिति चानुशयं ग्राहयेत् ॥ ३ ॥**

कथमेवंविधायाः=यथोक्तगुणायाः, इत्थंभूतो वैरूप्यादिप्रकारमापन्नः, अनुशयं=विप्रतीसारं, ग्राहयेद्, न भद्रकं पतितं यदहमनेनोढेति ॥ ३ ॥

**न तव सुभगे ! दास्यमपि कर्तुं युक्त इति ब्रूयात् ॥ ४ ॥**

सुभगे ! इत्यामन्त्रणं जनसौभाग्यख्यापनार्थं, दास्यमपि किमु तव पतित्वम् ॥ ४ ॥

**मन्दवेगतामीर्ष्यालुतां शठतामकृतज्ञतां चासम्भोगशीलतां कदर्यतां चपलतामन्यानि च यानि तस्मिन्गुप्तान्यस्या अभ्याशे**

सति सद्भावेऽतिशयेन भाषेत ॥ ५ ॥

मन्दवेगतां च भाषेत, यदि सा चण्डवेगा, उपलक्षणं चैतद्, शीघ्रवेगतां च यदि चिरवेगा, असंभोगशीलतामिति । विषयान्भोक्तुमशीलतां, कदर्यतामहीनकामताम्, अन्यानि चेति । पारुष्यनैर्घृण्यदाम्भिकत्वादीनि, तस्मिन्पत्यौ, अस्या अभ्याश इति । नायिकायाः समीपे यथाऽन्यो न श‍ृणोति, सति सद्भाव इति । विश्वासे सति, अतिशयेन भाषेत, येन सा तथैव प्रतिपद्येत ॥ ५ ॥

येन च दोषेणोद्विग्नां लक्षयेत्तेनैवानुप्रविशेत् ॥ ६ ॥

येन चेति । प्रत्यक्षीकृतेन तद्दोषेण तेनैवैनामनुप्रविशेत् , कथितमेव मया यथाऽयं दोषबहुल इति ॥ ६ ॥

यदाऽसौ मृगी तदा नैव शशतादोषः ॥ ७ ॥

नैव शशतादोषः, किं त्वश्वत्वदोषो वाच्यः ॥ ७ ॥

एतेनैव वडवाहस्तिनीविषयश्चोक्तः ॥ ८ ॥

एतेनैवेति । अनन्तरोक्तेन स्वजातीयन्यायेन, वडवाहस्तिनीविषयो न दोषो वृषत्वमश्वत्वं च, किं तु शशत्वं दोषः ॥ ८ ॥

दूत्योपसर्पयेदिति सामान्येनोक्तमत्र गोणिकापुत्रदर्शनमाह—

नायिकाया एव तु विश्वास्यतामुपलभ्य दूतीत्वेनोपसर्पयेत्प्रथमसाहसायां सूक्ष्मभावायां चेति गोणिकापुत्रः ॥ ९ ॥

विश्वास्यतामुपलभ्य दूतीत्वेनोपसर्पयेत्, कस्मिन्विषय इत्याह—प्रथमसाहसायामिति । या प्रथमं चारित्रं खण्डयति, सूक्ष्मभावायामस्फुटभावायाम्, एतदनुमतमप्रतिषिद्धत्वात् ॥ ९ ॥

सा नायकस्य चरितमनुलोमतां कामितानि च कथयेत् ॥ १० ॥

चरितं शोभनमनुलोमतामानुलोम्यं कामितानि चेति, त्रिविधं कामितं, रतस्यारम्भे मध्येऽवसाने च ॥ १० ॥

प्रसृतसद्भावायां च युक्त्या कार्यशरीरमित्थं वदेत् ॥ ११ ॥

प्रसृतसद्भावायां नायिकायां सत्याम् अन्यथोक्तं दोषकरमपि स्याद्, युक्त्या, न यथा कथंचिद्, यदर्थं दूतीकल्पस्तत्कार्यशरीरम् , इत्थमिति । वक्ष्यमाणप्रकारम् ॥ ११ ॥

श‍ृणु विचित्रमिदं सुभगे ! त्वां किल दृष्ट्वाऽमुत्रासावित्थं गोत्रपुत्रो नायकश्चित्तोन्मादमनुभवति प्रकृत्या सुकुमारः कदा चिदन्य-

त्रापरिक्लिष्टपूर्वस्तपस्वी ततोऽधुना शक्यमनेन मरणमप्यनुभवितु-मिति वर्णयेत् ॥ १२ ॥

चित्रमिदं, यदार्याभिः काम्यमानोऽपि त्वां दृष्ट्वाऽपि चित्तोन्माद-मनुभवति, एवं च सुभगे! इत्यामन्त्रणमर्थवद्भवति, किलेति। त्वं दृष्टा-ऽसीति, परोक्षं ममेत्याह, इत्थं गोत्रपुत्रः, न यस्य कस्य चित्पुत्रः, कार्य-स्य बलीयस्त्वं दर्शयन्नाह—प्रकृत्येति। अन्यत्रेति। अन्यस्याम्, अपरिक्लि-ष्टपूर्वस्तद्वचनसिद्धत्वात्स्त्रीणां, तपस्वीति। अनुकम्पायां, शक्यमनेन मर-णमप्यनुभवितुं विनश्यतीत्यर्थः ॥ १२ ॥

तत्र सिद्धा द्वितीयेऽहनि वाचि वक्त्रे दृष्ट्यां च प्रसादमुपलक्ष्य पुनरपि कथां प्रवर्तयेत् ॥ १३ ॥

तत्रेति। तस्मिन्नभिधीयमाने, सिद्धा=न प्रत्याख्याता, वाचि वक्त्रे दृष्ट्यां च त्रिष्वपि, प्रसादं=प्रसन्नतां, कथां प्रवर्तयेत्सामान्याम् ॥ १३ ॥

शृण्वत्यां चाहल्याऽविमारकशाकुन्तलादीन्यन्यान्यपि लौकि-कानि च कथयेत्तद्युक्तानि ॥ १४ ॥

शृण्वत्यां स्वकथाम्. अहल्या=गोतमभार्या, तयोत्कण्ठितया देवराजः-कामितः, अग्निहोत्रकेणाग्निपरिचरणे वधूर्नियुक्ता, सा च कुण्डादुत्थि-तेन मूर्तिमताऽग्निना कामिता, जातगर्भां च तां श्वशुरः कुलदोषभयाद-टव्यां तत्याज, प्रसूतां च सह सुतेन शबरसेनापतिरपत्यबुद्ध्या सं-वर्धितवान्, तत्पुत्रश्चाजाविकसमूहेन बालवयस्त्वात्क्रीडमानः परिभ्रमं-स्तत्क्षीरपानान्महाबलोऽभूद्, येन शिशुरेव हस्तग्रहणादजाविकं जघान, सेनापतिरप्यन्वर्थमस्य नाम चक्रेऽविमारक इति, ततः प्रवृद्धयौवनः-कदा चिद्राज्ञोऽटव्यां समावासितस्य दुहितरं हस्तिना व्यापाद्यमानां तं-हत्वा ररक्ष, ततो जातोत्कण्ठा सा स्वयमेव पाणिं ग्राहितवती, तद्यु-क्तानि=पारदारिकयुक्तानि ॥ १४ ॥

वृषतां चतुःषष्टिविज्ञतां सौभाग्यं च नायकस्य, श्लाघनीयतां-चास्य प्रच्छन्नं संप्रयोगं भूतमभूतपूर्वं वा वर्णयेदाकारं चास्य लक्षयेत् ॥ १५ ॥

वृषतां=व्यवायितां, चतुःषष्टिविज्ञतामिति। गीतादिकायां पाञ्चालि-कायां च विज्ञतां, सौभाग्यं पुरुषेणाप्यभिलष्यत इति, श्लाघनीयेति। यां स्त्रियं श्लाघते, प्रच्छन्नं लोकस्याविदितम्, एवं चाभूतमपि भूतमिव जातम्, आकारमिति। आक्रियते गृह्यते भावो येनेति, वाक्कायव्यापारोऽत्र

गृह्यते ॥ १५ ॥

सविहासितं दृष्ट्वा संभाषते ॥ १६ ॥

सविहसितमिति । सम्भाषणक्रियाविशेषणमेतत् ॥ १६ ॥

आसने चोपनिमन्त्रयते ॥ १७ ॥

उपनिमन्त्रयते, इदमासनमास्यतामिति ॥ १७ ॥

क्वासितं क्व शयितं क्व भुक्तं क्व चेष्टितं किं वा कृतमिति पृच्छति ॥ १८ ॥

चेष्टितं भ्रान्तं, कृतमवश्यकर्तव्यमिति पृच्छति, तेन द्वारेण नायकसम्बद्धं किञ्चिदभिधास्यतीति ॥ १८ ॥

विविक्ते दर्शयत्यात्मानम् ॥ १९ ॥

विविक्ते दर्शयत्यात्मानं, रहस्यं किञ्चिद्वक्ष्यतीति ॥ १९ ॥

आख्यानकान्यनुयुङ्क्ते ॥ २० ॥

आख्यानकान्यनुयुङ्क्तेऽधृतिकथनार्थं नायककथां वा करिष्यतीति ॥ २० ॥

चिन्तयन्ती निःश्वसिति विजृम्भते च ॥ २१ ॥

चिन्तयन्तीति । अन्यगतमानसा, निःश्वसिति विजृम्भते मदनलालसा ॥ २१ ॥

प्रीतिदायं च ददाति ॥ २२ ॥

प्रीतिदायमिति । यत्प्रीत्या दीयते कटकमुत्तरीयं वा तदस्यै ददाति ॥ २२ ॥

इष्टेषूत्सवेषु च स्मरति ॥ २३ ॥

इष्टेषु कार्येषूत्सवेषु च स्मरति, कथमद्य नायातेति ॥ २३ ॥

पुनर्दर्शनानुबन्धं विसृजति ॥ २४ ॥

पुनर्दर्शनानुबन्धमिति । पुनर्मया द्रष्टव्याऽसीति ॥ २४ ॥

त्वद्दर्शनवन् नामश्रवणमपि तं सुखयतीति दूत्या कथायां प्रवर्तितायामाह—

साधुवादिनी सती किमिदमशोभनमाभिधत्स इति कथामनुबध्नाति ॥ २५ ॥

साधुवादिनीति । साधुवादिनी सती किमिदमशोभनमयुक्तमभिधत्स इत्यभिधाय; कथामनुबध्नाति प्रवर्तयति ॥ २५ ॥

नायकस्य शाठ्यचापल्यसम्बद्धान्दोषान्ददाति ॥ २६ ॥

दोषान्ददातीति । शठोऽसौ न निर्व्याजं व्यवहरति लोके, चपलश्च नैकस्यां रमत इति ॥ २६ ॥

पूर्वप्रवृत्तं च तत्सन्दर्शनं कथाऽभियोगं च स्वयमकथयन्ती तयोच्यमानमाकाङ्क्षते ॥ २७ ॥

तत्सन्दर्शनमिति । नायकदर्शनं यत्तस्याः पूर्वप्रवृत्तं यत्र यदा यथा, कथाऽभियोगं च, पुनः पुनः कथायोगं पूर्ववृत्तं स्वयमकथयन्ती लज्जया, तयोच्यमानं=दूत्या कथ्यमानं, काङ्क्षते तेनापि सुखं स्थीयते ॥ २७ ॥

नायकमनोरथेषु च कथ्यमानेषु सपरिभवं नाम हसति न च निर्वदतीति ॥ २८ ॥

नायकमनोरथेष्विति । स सुदिवसो भविष्यति, यत्र पादपतनैः प्रसादिताया अधरं पास्यामीत्येवमादिषु, दूत्या कथ्यमानेषु, सपरिभवमिव हसति दुराशा तस्य धूर्तस्येति, न च निर्वदति, निश्चयेनाभिधत्ते, सिध्यत्येव तस्य मनोरथ इति ॥ २८ ॥

दूतीविषये नायिकाया आकारे लक्षिते किं फलमित्याह—

दूत्येनां दर्शिताकारां नायकाभिज्ञानैरुपबृंहयेत् ॥ २९ ॥

नायकाभिज्ञानैरिति । यानि नायकस्य तया सह पूर्वं वृत्तानि, तैरुपबृंहयेदत्यन्तमनुरक्तां कुर्यात् ॥ २९ ॥

असंस्तुतां तु गुणकथनैरनुरागकथाभिश्चावर्जयेत् ॥ ३० ॥

असंस्तुतामिति । अपरिचिताम्, अभिज्ञानासम्भवाद्, नायकस्य गुणकथनैरनुरागकथाभिश्चावर्जयेदभिमुखीकुर्यात् ॥ ३० ॥

अत्राचार्याणां मतभेदमाह—

नासंस्तुतादृष्टाकारयोर्दूत्यमस्तीत्यौद्दालकिः ॥ ३१ ॥

नासंस्तुतादृष्टाकारयोरिति । ययोर्न परिचयो न चाकारदर्शनं च, तस्मिन्विषये न दूत्या कर्म विषयो वाऽस्ति, यत्रेदमुक्तम्—

'कृतपरिचयां दर्शितेङ्गिताकारां कन्यामिवोपायतोऽभियुञ्जीत' ॥ ३१ ॥

संसृष्टाकारयोरसंस्तुतयोरप्यस्तीति बाभ्रवीयाः ॥ ३२ ॥

संसृष्टाकारयोरिति । यौ परस्परस्य संसृष्टाकारौ, तयोरसंस्तुतयोरप्यस्त्याकारस्यैव दूत्यनिमित्तत्वाद्, यथोक्तम्—

'आकारेणात्मनो भावं या नारी प्राक्प्रदर्शयेत् ।
क्षिप्रमेवाभियोज्या सा प्रथमे चैव दर्शने' ॥ ३२ ॥

संस्तुतयोरप्यसंसृष्टाकारयोरस्तीति गोणिकापुत्रः ॥ ३३ ॥

असंसृष्टाकारयोरिति । व्यामिश्रभावत्वात्तदाकारोऽपि संसृष्टशुद्धौ भवति, ततश्च तयोस्संस्तुतयोरपि, यत्रेदमुक्तम्—

इत्यादि ॥ ३३ ॥

'धीरायामप्रगल्भायाम्—

असंस्तुतयोरदृष्टाकारयोरपि दूतीप्रत्ययादिति वात्स्यायनः ॥३४॥

दूतीप्रत्ययादिति । दूतीसामर्थ्यादसंस्तुततोरपि, अस्मिन्पक्षे त्रितयाभावेऽपि दूत्यमस्ति, यत्रेदं वक्ष्यति– कौतुकाच्चानुरूपौ युक्ताविमौ परस्परस्येति ॥ ३४ ॥

तासां मनोहराण्युपायनानि ताम्बूलमनुलेपनं स्रजमङ्गुलीयकं वासो वा तेन प्रहितं दर्शयेत् ॥ ३५ ॥

तासामिति । असंस्तुतानां नायिकानाम्, मनोहराण्युपायनानि कौशलिकास्ताम्बूलादीनि ॥ ३५ ॥

तेषु नायकस्य यथाऽर्थं नखदशनपदानि तानि तानि च चिह्नानि स्युः ॥ ३६ ॥

तेष्विति । उपायनेषु, यथाऽर्थमिति । यथाप्रयोजनं च संप्रयोगसूचकमेव चिह्नं स्यात् ॥ ३६ ॥

वाससि च कुङ्कुमाङ्कमञ्जलिं निदध्यात् ॥ ३७ ॥

कुङ्कुमाङ्कमञ्जलिमिति । कुङ्कुमेनाङ्कितमञ्जलिं निदध्याद्यथा प्रतिबिम्बमुत्पद्यते, त्वदाराधनपरोऽयं जन इति ख्यापनार्थम् ॥ ३७ ॥

पत्रच्छेद्यानि नानाऽभिप्रायाकृतीनि दर्शयेद्, लेखपत्रगर्भाणि कर्णपत्राण्यापीडांश्च ॥ ३८ ॥

नानाऽभिप्रायाकृतीनीति । नानाऽभिप्राया रतिशोकक्रोधविस्मयादिभावसूचना आकृतिः संस्थानं येषां, लेखपत्त्रगर्भाणि, मध्ये लेखपत्त्रं प्रक्षिप्य वेष्टितानि, आपीडांश्च लेखपत्त्रगर्भान् ॥ ३८ ॥

तेषु स्वमनोरथाख्यापनम् प्रतिप्राभृतदाने चैनां नियोजयेत् ॥३९॥

मनोरथाख्यापनमिति । लेखे लिखित्वा; आचक्षीत, प्रतिप्राभृतं=प्रतिकौशलिकाम् ॥ ३९ ॥

एवं कृतपरस्परपरिग्रहयोश्च दूतीप्रत्ययः समागमः ॥ ४० ॥

कृतपरस्परपरिग्रहयोरिति । कृतान्योन्यस्वीकारयोः, दूतीप्रत्ययः, तयैव तदानीं निर्दिश्यमानत्वात् ॥ ४० ॥

स तु देवताऽभिगमने यात्रायामुद्यानक्रीडायां जलावतरणे विवाहे यज्ञव्यसनोत्सवेष्वग्न्युत्पाते चौरविभ्रमे जनपदस्य चक्रारोहणे प्रेक्षाव्यापारेषु तेषु तेषु च कार्येष्विति बाभ्रवीयाः ॥ ४१ ॥

देवताऽभिगमने, देवतामभिपूजयितुं यद्गमनं तत्र, यात्रायां कस्याश्चिद्देवतायाः, जलावतरण इति । यदा स्नातुं जनसमूहो जलमवतरति, न चालक्ष्यते स्थानात्स्थानान्तरगमनम् , अग्न्युत्पाते, दह्यमानात्प्रातिवेश्यगृहाद् गृहान्तरगमनं संभवति, चौरविभ्रमे, चौराः किल पतन्तीत्यन्यत्र सुप्यते, चक्रारोहणे, जनपदं निवेशयितुं शिविकारोपणे, तदा ह्यनुष्ठापितप्रकारत्वात्स्त्रीजनो न रक्षितो भवति, तेषु तेषु च कार्येष्विति । तेषु तेषु जनानां संमर्दः शून्यता वा ॥ ४१ ॥

सखीभिक्षुकीक्षपणिकातापसीभवनेषु सुखोपाय इति गोणिकापुत्रः ॥ ४२ ॥

सुखोपाय इति । यदैवेच्छति तदैव भवति ॥ ४२ ॥

तस्या एव तु गेहे विदितनिष्क्रमप्रवेशे चिन्तितात्ययप्रतीकारे प्रवेशनमुपपन्नं च निष्क्रमणमविज्ञातकालं च तन्नित्यं सुखोपायं चेति वात्स्यायनः ॥ ४३ ॥

तस्या एवेति । नायिकायाः, निष्क्रम्यते प्रविश्यते च येन मार्गेण तदुभयं विदितं वीक्षितं यत्र, गेह इति । तत्राप्यविज्ञातकालमनियतकालं, प्रवेशनं निष्क्रमणं चोपपन्नं युक्तमनुपलक्ष्यमाणत्वात् , तदिति । प्रवेशनंनिष्क्रमणं चानित्यं, तस्याः सदा संनिहितत्वाद्, न सख्यादिगृहेषु, सुखोपायं च, विदितमार्गत्वात्प्रतिविहितदोषत्वाच्च ॥ ४३ ॥

सामान्येन कर्माण्युक्त्वा दूतीभेदं प्रदर्शयन्नाह—

निसृष्टार्था परिमितार्था पत्रहारी स्वयंदूती मूढदूती मायादूती मूकदूती वातदूती चेति दूतीविशेषाः ॥ ४४ ॥

निसृष्टार्थेति ॥ ४४ ॥

नायकस्य नायिकायाश्च यथामनीषितमर्थमुपलभ्य स्वबुद्ध्या कार्यसम्पादिनी निसृष्टार्था ॥ ४५ ॥

यथामनीषितमिति । यथेप्सितम् , अयमेनां जिगमिषुरियमेनमिति, स्वबुद्ध्या = स्वप्रज्ञया, कार्यसम्पादिनीति । यथा तावनुरज्येते, यथा कृतपरस्परपरिग्रहौ संप्रयुज्येते, तत्त्रिविधं कार्यं सम्पादयति दूती, निसृष्टा-

संस्तुतयोरप्यसंसृष्टाकारयोरस्तीति गोणिकापुत्रः ॥ ३३ ॥

असंसृष्टाकारयोरिति । व्यामिश्रभावत्वात्तदाकारोऽपि संसृष्टशुद्धौ भवति, ततश्च तयोस्संस्तुतयोरपि, यत्रेदमुक्तम्--

इत्यादि ॥ ३३ ॥

'धीरायामप्रगल्भायाम्—

असंस्तुतयोरदृष्टाकारयोरपि दूतीप्रत्ययादिति वात्स्यायनः ॥३४॥

दूतीप्रत्ययादिति । दूतीसामर्थ्यादसंस्तुततोरपि, अस्मिन्पक्षे त्रितयाभावेऽपि दूत्यमस्ति, यत्रेदं वक्ष्यति– कौतुकाच्चानुरूपौ युक्ताविमौ परस्परस्येति ॥ ३४ ॥

तासां मनोहराण्युपायनानि ताम्बूलमनुलेपनं स्रजमङ्गुलीयकं वासो वा तेन प्रहितं दर्शयेत् ॥ ३५ ॥

तासामिति । असंस्तुतानां नायिकानाम्, मनोहराण्युपायनानि कौशलिकास्ताम्बूलादीनि ॥ ३५ ॥

तेषु नायकस्य यथाऽर्थं नखदशनपदानि तानि तानि च चिह्नानि स्युः ॥ ३६ ॥

तेष्विति । उपायनेषु, यथाऽर्थमिति । यथाप्रयोजनं च संप्रयोगसूचकमेव चिह्नं स्यात् ॥ ३६ ॥

वाससि च कुङ्कुमाङ्कमञ्जलिं निदध्यात् ॥ ३७ ॥

कुङ्कुमाङ्कमञ्जलिमिति । कुङ्कुमेनाङ्कितमञ्जलिं निदध्याद्यथा प्रतिबिम्बमुत्पद्यते, त्वदाराधनपरोऽयं जन इति ख्यापनार्थम् ॥ ३७ ॥

पत्रच्छेद्यानि नानाऽभिप्रायाकृतीनि दर्शयेद्, लेखपत्रगर्भाणि कर्णपत्राण्यापीडांश्च ॥ ३८ ॥

नानाऽभिप्रायाकृतीनीति । नानाऽभिप्राया रतिशोकक्रोधविस्मयादिभावसूचना आकृतिः संस्थानं येषां, लेखपत्त्रगर्भाणि, मध्ये लेखपत्त्रं प्रक्षिप्य वेष्टितानि, आपीडांश्च लेखपत्त्रगर्भान् ॥ ३८ ॥

तेषु स्वमनोरथाख्यापनम् प्रतिप्राभृतदाने चैनां नियोजयेत् ॥३९॥

मनोरथाख्यापनमिति । लेखे लिखित्वा; आचक्षीत, प्रतिप्राभृतं=प्रतिकौशलिकाम् ॥ ३९ ॥

एवं कृतपरस्परपरिग्रहयोश्च दूतीप्रत्ययः समागमः ॥ ४० ॥

कृतपरस्परपरिग्रहयोरिति । कृतान्योन्यस्वीकारयोः, दूतीप्रत्ययः, तयैव तदानीं निर्दिश्यमानत्वात् ॥ ४० ॥

**स तु देवताऽभिगमने यात्रायामुद्यानक्रीडायां जलावतरणे विवाहे यज्ञव्यसनोत्सवेष्वग्न्युत्पाते चौरविभ्रमे जनपदस्य चक्रारोहणे प्रेक्षाव्यापारेषु तेषु तेषु च कार्येष्विति बाभ्रवीयाः ॥ ४१ ॥**

देवताऽभिगमने, देवतामभिपूजयितुं यद्गमनं तत्र, यात्रायां कस्याश्चिद्देवतायाः, जलावतरण इति । यदा स्नातुं जनसमूहो जलमवतरति, न चालक्ष्यते स्थानात्स्थानान्तरगमनम्, अग्न्युत्पाते, दह्यमानात्प्रातिवेश्यगृहाद् गृहान्तरगमनं संभवति, चौरविभ्रमे, चौराः किल पतन्तीत्यन्यत्र सुप्यते, चक्रारोहणे, जनपदं निवेशयितुं शिविकारोपणे, तदा ह्यनुष्ठापितप्रकारत्वात्स्त्रीजनो न रक्षितो भवति, तेषु तेषु च कार्येष्विति । तेषु तेषु जनानां संमर्दः शून्यता वा ॥ ४१ ॥

**सखीभिक्षुकीक्षपणिकातापसीभवनेषु सुखोपाय इति गोणिकापुत्रः ॥ ४२ ॥**

सुखोपाय इति । यदैवेच्छति तदैव भवति ॥ ४२ ॥

**तस्या एव तु गेहे विदितनिष्क्रमप्रवेशे चिन्तितात्ययप्रतीकारे प्रवेशनमुपपन्नं च निष्क्रमणमविज्ञातकालं च तन्नित्यं सुखोपायं चेति वात्स्यायनः ॥ ४३ ॥**

तस्या एवेति । नायिकायाः, निष्क्रम्यते प्रविश्यते च येन मार्गेण तदुभयं विदितं वीक्षितं यत्र, गेह इति । तत्राप्यविज्ञातकालमनियतकालं, प्रवेशनं निष्क्रमणं चोपपन्नं युक्तमनुपलक्ष्यमाणत्वात्, तदिति । प्रवेशनंनिष्क्रमणं चानित्यं, तस्याः सदा संनिहितत्वाद्, न सख्यादिगृहेषु, सुखोपायं च, विदितमार्गत्वात्प्रतिविहितदोषत्वाच्च ॥ ४३ ॥

सामान्येन कर्माण्युक्त्वा दूतीभेदं प्रदर्शयन्नाह—

**निसृष्टार्था परिमितार्था पत्रहारी स्वयंदूती मूढदूती मायादूती मूकदूती वातदूती चेति दूतीविशेषाः ॥ ४४ ॥**

निसृष्टार्थेति ॥ ४४ ॥

**नायकस्य नायिकायाश्च यथामनीषितमर्थमुपलभ्य स्वबुद्ध्या कार्यसम्पादिनी निसृष्टार्था ॥ ४५ ॥**

यथामनीषितमिति । यथेप्सितम्, अयमेनां जिगमिषुरियमेनमिति, स्वबुद्ध्या = स्वप्रज्ञया, कार्यसम्पादिनीति । यथा तावनुरज्येते, यथा कृतपरस्परपरिग्रहो संप्रयुज्येते, तत्त्रिविधं कार्यं सम्पादयति दूती, निसृष्टा-

र्थेति। इदं करणीयमित्येतावतोऽर्थस्य निसृष्टत्वात् ॥ ४५ ॥

अस्या विषयमाह—

सा प्रायेण संस्तुतसम्भाषणयोः ॥ ४६ ॥

सम्भाषत इति सम्भाषणः, 'कृत्यल्युटो बहुलम्' इति ल्युट्, संस्तुतौ च तौ सम्भाषणौ च, यदि वा संस्तुतं च संभाषणं च ययोरस्तीति मत्वर्थीयोऽकारः, तयोः प्रायेण दृश्यते ॥ ४६ ॥

नायिकया प्रयुक्ता संस्तुतासम्भाषणयोरपि ॥ ४७ ॥

अन्यतरप्रयुक्तविषयस्य सिद्धिगोचरत्वाद्,नायिकया प्रयुक्ता, प्रायेण संस्तुतासम्भाषणयोरपि परिचितावेव केवलं, न तु सम्भाषणमनयोरस्ति यत इदमुक्तम्—

'आदौ परिचयं कुर्यात्ततश्च परिभाषणम्' इति,

तत्रासंभाषमाणोऽपि नायकः संस्तुतत्वात्सुसाध इति प्रायेण दृश्यते, न तु नायिकेति न प्रायेण ॥ ४७ ॥

कौतुकाच्चानुरूपौ युक्ताविमौ परस्परस्येत्यसंस्तुतयोरपि॥४८॥

युक्काविति। युक्ताविमौ समानरूपशीलवयस्कत्वात्परस्परसंयोजने, निसृष्टार्थाया यदा कौतुकमुत्पद्यते तस्माच्चासंस्तुतयोरपि द्रष्टव्या न तु प्रायेण, तथाविधार्थस्य कादाचित्कत्वात् ॥ ४८ ॥

कार्यैकदेशमभियोगैकदेशं चोपलभ्य शेषं सम्पादयतीति परिमितार्था ॥ ४९ ॥

कार्यस्याभियोगस्य चैकदेशमसमापितमन्यतरस्मादुपलभ्य, शेषम् = असमापितं, सम्पादयतीति परिमितार्था, परिमितः परिच्छिन्नोऽर्थोऽस्याइति ॥ ४९ ॥

विषयमाह—

सा दृष्टपरस्पराकारयोः प्रविरलदर्शनयोः ॥ ५० ॥

सेति। दृष्टपरस्पराकारयोरिति। आकारग्रहणेन दृष्टं परस्परं याभ्यां किञ्चित्तयोः कार्यशेषं संभाषणं, प्रविरलदर्शनयोरभियोगमात्रशेषम् ॥५०॥

संदेशमात्रं प्रापयतीति पत्रहारी ॥ ५१ ॥

सन्देशमात्रमिति। कार्यस्य स्थिरत्वात्तन्मात्रं, पत्रेण वचसा वा प्रापयतीति पत्त्रहारीत्यर्थः ॥ ५१ ॥

कस्मिन्विषय इत्याह—

सा प्रगाढसद्भावयोः संसृष्टयोश्च देशकालसम्बोधनार्थम् ॥५२॥

सेति । प्रगाढसद्भावयोः सम्प्रयोगं प्रत्यभिमुखीभूतत्वात् , संसृष्टयोश्च कृतसंसर्गयोर्दृष्टया, किमर्थमित्याह—देशकालेति । अस्मिन्काले स्थाने वाऽनयोः समागम इति, प्रबोधनार्थमन्यतरेण प्रयुज्यते, आसामुक्तेष्वेव कर्मसु यथासम्भवं कर्म द्रष्टव्यम् ॥ ५२ ॥

निसृष्टार्था द्विविधा-तत्रैका परार्था या परेण प्रयुज्यते, द्वितीयाऽऽत्मार्था सा स्वयंदूतीति द्वितीयं नाम लभते, तस्या विधिमाह—

**दौत्येन प्रहिताऽन्यया स्वयमेव नायकमभिगच्छेदजानती नाम तेन सहोपभोगं स्वप्ने वा कथयेद्, गोत्रस्खलिते भार्यां चास्य निन्देत्, तद्व्यपदेशेन स्वयमीर्ष्यां दर्शयेद्, नखदशनचिन्हितं वा किं चिद्दद्याद्, भवतेऽहमादौ दातुं सङ्कल्पितेति चाभिदधीत, मम त्वद्भार्याया वाऽऽकाररमणीयतेति विविक्ते पर्यनुयुञ्जीत, सा स्वयंदूती ॥ ५३ ॥**

दौत्येनेति । दूतक्रियया, अन्यया नायिकया प्रहिता या स्वयमेव नायकमभिगच्छेत्कामयेत्सा स्वयंदूतीति संबन्धः, अभिगमोपायोपदेशमाह—अजानती नामेति । अद्य स्वप्ने त्वयाऽहं किलोपभुक्तेति, गोत्रस्खलितं निन्देद्, नैतदीदृशं तदस्मदीयं नाम भूतं येन त्वया भार्याऽऽहूयत इति, भार्यां चास्य निन्देद् युक्तमाह्वातुं यदेयं रूपवती गुणवती वा स्याद्, तद्व्यपदेशेनेति । गोत्रस्खलितमपदिश्य स्वयमीर्ष्यां दर्शयेत् सा हि दर्शिता कामं सूचयति, नखादिचिन्हितं भावसूचनार्थं, किंचिदिति । ताम्बूलशेखरपूगादिकं ददती चानुरागख्यापनार्थमिदं ब्रूयादित्याह–भवत इति । आकाररमणीयतेति । रमणहिततेति, विविक्तं तम्पर्यनुयुञ्जीत, किमयं ? प्रतिपत्स्यत इति ॥ ५३ ॥

**तस्या विविक्ते दर्शनं प्रतिग्रहश्च ॥ ५४ ॥**

तस्या इति । स्वयं दूत्याः, विविक्ते दर्शनं प्रतिग्रहश्चाभियोगश्चास्या नायकेन कार्यं, यदि तामभिगच्छेद् ॥ ५४ ॥

नायिकाऽपि कदा चिदातुरा विश्वास्यामपश्यन्ती स्वयं दूत्यं प्रतिपद्यत इत्याह—

**दूतीच्छलेनान्यामभिसन्धायास्याः सन्देशश्रावणद्वारेण नायकं साधयेत् तां चोपहन्यात्साऽपि स्वयंदूती ॥ ५५ ॥**

दूतीच्छलेनेति । दूतीव्याजेनान्यां काञ्चिदभिसंधाय; देवदत्तया प्रहिताऽहमिति, तस्या नायिकायाः सन्देशश्रावणद्वारेण नायकं साध-

येत्, तां तु नायिकामुपहन्याद् दोषख्यापनेनेति, स्वयंदूती साऽपि स्वयं सिद्धये प्रवृत्तत्वान्निसृष्टार्था एव द्रष्टव्या ॥ ५५ ॥

एतया नायकोऽप्यन्यदूतश्च व्याख्यातः ॥ ५६ ॥

एतयेति। स्वयं दूत्या, दूतो व्याख्यातो द्विविधः ॥ ५६ ॥

यदा सैव नायिका गूढत्वान्न स्वयं दूत्यं प्रतिपद्यते, तदा नायकं तद्भार्ययाऽऽकारयेदित्याह--

नायकभार्यां मुग्धां विश्वास्यायन्त्रणयाऽनुप्रविश्य नायकस्य चेष्टितानि पृच्छेद्, योगाञ्शिक्षयेत्, साकारं मण्डयेत्, कोपमेनां ग्राहयेद्, एवं च प्रतिपद्यस्वेति श्रावयेत्, स्वयं चास्यां नखदशनपदानि निर्वर्तयेत्, तेन द्वारेण नायकमाकारयेत्सा मूढदूती॥५७॥

नायकभार्यां चेति। मुग्धां = मूढां, विश्वास्य = विश्वासं प्राप्य, अयन्त्रणयेति। तस्या आत्मनश्च विविक्ते वियोगावेगेनानुप्रविश्य चेष्टितानि पृच्छेत्, साऽभिमुखा विश्वासिता निर्विशेषा सती नायकचेष्टितानि कथयति, योगाञ् शिक्षयेदिति। बुद्ध्वा चेष्टितानि, तदनुरूपान् योगाञ् शिक्षयेद्, योगज्ञां नायको ज्ञास्यतीति, साकारं मण्डयेत्, स्वाभिप्रायसूचनार्थं, कोपमस्मिन्ग्राहयेद्, आत्मनोऽपीर्ष्यां दर्शयितुं; चपलोऽयमन्यस्यां सक्तः किमस्ति? येन न कुप्यसीति, एवं च प्रतिपद्यस्व, यथाऽहमाचक्ष इति तां श्रावयेत्, तत्प्रतिपत्त्या नामानुकूल्यं ज्ञास्यतीति, स्वयं चास्यां भार्यायां नखदशनपदानि विदधीत संप्रयोगाभिलाषख्यापनार्थं, तेनेति। यथोक्तेन द्वारेण, नायकमाकारयेदाकारं ग्राहयेद्, येनासौ संप्रयोगार्थिनीति विद्यात्, सेति। भार्या मूढदूती; दूत्यर्थापरिज्ञानादियं पत्त्रहारीप्रकारा द्रष्टव्या ॥ ५७ ॥

तस्यास्तयैव प्रत्युत्तराणि योजयेत् ॥ ५८ ॥

तस्या इति। नायिकायाः, तयैवेति। मूढदूत्या, प्रत्युत्तराणि = प्रत्यभियोगान् योजयेत् ॥ ५८ ॥

'नायकोऽप्यन्यदूतश्च व्याख्यातः' इत्युक्तं, तत्रागोचरे लज्जायां वा यदि स्वयं दौत्यं न प्रतिपद्येत, तदा स्वभार्यया तामाकारयेदित्याह--

स्वभार्यां वा मूढां प्रयोज्य तया सह विश्वासेन योजयित्वा तयैवाकारयेदात्मनश्च वैचक्षण्यं प्रकाशयेत्, सा भार्यादूती तस्यास्तयैवाकारग्रहणम् ॥ ५९ ॥

मूढाम् = अज्ञां, विज्ञा हि विकल्पयति, किमिति? मामनया योजयतीति,

विश्वासेन हेतुना योजयित्वा, तयैवाकारयेत्=स्वभार्ययाऽऽकारं ग्राहयेत्, प्रकाशयेत्, तदैवात्मनश्च कलासु वैचक्षण्यं कलाकौशलं तयैव प्रकाशयेत्, सा भार्यादूती पत्त्रहारीप्रकारा, तयैव=भार्यादूत्या, तस्याः=नायिकायाः, आकारग्रहणं प्रत्युत्तरग्रहणमित्यर्थः ॥ ५९ ॥

यदि स्वभार्याया न गोचरस्तदा किं प्रतिपद्येतेत्याह--

बालां वा परिचारिकामदोषज्ञामदुष्टेनोपायेन प्रहिणुयात्, तत्र स्रजि कर्णपत्रे वा गूढलेखनिधानं नखदशनपदं वा सा मूकदूती, तस्यास्तयैव प्रत्युत्तरप्रार्थनम् ॥ ६० ॥

बालां वा परिचारिकां न यां कां चिद्, अदोषज्ञाम्=अधूर्ताम्, अदुष्टेनेति । बालक्रीडनकाद्युपायेन, नायिकागृहं प्रति प्रतिदिनं प्रहिणुयात्, तत्रेति । तस्यां जातपरिचयायां गूढलेखविधानं च वाचयित्वा, मां नायकोऽप्याकारयतीति, सा प्रतिपद्यते, नखदशनपदानि च स्रजि कर्णपत्रे वा निदध्यादिति योज्यं, सा मूकदूती, अर्थानभिलपनादियं पत्त्रहारीप्रकारा, तस्या नायिकायास्तयैव प्रत्युत्तरप्रार्थनं, यदि तया कर्णपत्त्रात् पत्त्रं गृहीतं किमन्यन्न मृगयस इति ॥ ६० ॥

यत्र बालाया अप्यगोचरस्तत्र किं प्रतिपद्येतेत्याह—

पूर्वप्रस्तुतार्थलिङ्गसम्बद्धमन्यजनाग्रहणीयं लौकिकार्थं द्व्यर्थं वा वचनमुदासीनया श्रावयेत्सा वातदूती, तस्या अपि तयैव प्रत्युत्तरप्रार्थनमिति तासां विशेषाः ॥ ६१ ॥

पूर्वप्रस्तुतेति । नायकयोर्यत्पूर्वप्रस्तुतं प्रवृत्तं कार्यं तस्य चिह्नं तेनाभिज्ञानार्थं सम्बद्धं वचनम्, अन्यजनाग्रहणीयं, ताभ्यामेव तदर्थस्य ग्रहणाद्, अत्र म्लेच्छितकविकल्पकला द्रष्टव्या, लौकिकार्थं च लोकविदितार्थं, द्व्यर्थमप्रस्तुतार्थस्यापि वाचकत्वाद्, उदासीनया न क्वचित्प्रतिबद्धया, एवं च सा वातदूतीत्युच्यते, पत्त्रहारीप्रकारैव चेति, तयैव प्रत्युत्तरप्रार्थनं, तया हि प्रश्नस्य प्रतिप्रश्नं याचेतेत्यर्थः, तासां विशेषा निसृष्टार्थाऽऽदीनां स्वयंदूत्यादयो विशेषाः, एवमन्येऽपि विशेषा यथासंभवमत्रैव द्रष्टव्याः, यथाहुर्बाभ्रवीयाः--

'पुत्रिका चित्ररूपाणि पशवः शुकसारिकाः ।
सर्वेषां गूढभावानां दूतकर्माणि कुर्वते, इति ॥ ६१ ॥

यास्तिस्रो दूत्य उक्तास्ताः का इत्याह—

भवन्ति चात्र श्लोकाः—

विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका ।

प्रविशत्याशु विश्वासं दूतीकार्यं च विन्दति ॥ ६२ ॥

प्रविशति गृहमिति शेषः, विश्वासं दूतीकार्यं च; विन्दति=लभते ॥६२॥

सङ्क्षेपेण दूतीकर्माण्याह—

विद्वेषं ग्राहयेत्पत्यौ रमणीयानि वर्णयेत् ।
चित्रान्सुरतसम्भोगानन्यासामपि दर्शयेत् ॥ ६३ ॥

विद्वेषं ग्राहयेदिति । तस्य रूपादिप्रशंसाभिः 'अनुशयं ग्राहयेद्' इत्यादिना, रमणीयानि वर्णयेद् 'नायकस्य चरितमनुलोमतां कामितानि च कथयेद्' इत्यनेन, चित्रान्सुरतसम्भोगान्दर्शयेद् 'वृषतां चतुःषष्टिविज्ञतां संवर्णयेद्' इत्यनेन, अन्यासामपि तत्सखीनामग्रतो न केवलं नायिकाया यतस्तास्तस्यै कथयन्ति ॥ ६३ ॥

नायकस्यानुरागं च पुनश्च रतिकौशलम् ।
प्रार्थनां चाधिकस्त्रीभिरवष्टम्भं च वर्णयेत् ॥ ६४ ॥

नायकस्यानुरागं वर्णयेद् 'शृणु विचित्रम्'इत्यादिना, पुनश्च रतिकौशलं वर्णयेत्प्रधानत्वादस्य प्रार्थनां चाधिकं स्त्रीभिर्वर्णयेद्, श्लाघनीयया चास्य प्रच्छन्नं संयोगं भूतमभूतपूर्वं वा वर्णयेद्' इत्यनेन, अवष्टम्भं च नायिकाविषयं निश्चयं तदङ्कशयनं श्मशानशयनं वा, यदुक्तम्--

'शक्यमनेन मरणमप्यनुभवितुम्' इति ॥ ६४ ॥

प्रथमेऽधिकरणे पटुताऽऽदयो दूतगुणा उक्ताः, तेषां पटुता प्रधानमिति दर्शनार्थमाह--

असङ्कल्पितमप्यर्थमुत्सृष्टं दोषकारणात् ।
पुनरावर्तयत्येव दूती वचनकौशलात् ॥ ६५ ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे
दूतीकर्माणि चतुर्थोऽध्यायः ।

असंकल्पितमपीति । दोषकारणादिति । व्यावृत्तिकारणाद्, नायकेन सन् विकल्पितो न विचिन्तितः, दूती पुनस्तमावर्तयत्यभिमुखीकरोति, वचनकौशलात् पटुतायोगात् ॥ ६५ ॥

इति दूतीकर्माणि षट्चत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां पारदारिके
पञ्चमेऽधिकरणे दूतीकर्माणि चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।

ईश्वराणां परगृहप्रवेशाभावात्कामितं न सम्भवति, प्रायशस्तत्र दूतीकर्माधिक्रियत इति, तदनन्तरमीश्वरकामितमुच्यते, यदाह—

न राज्ञां महामात्राणां वा परभवनप्रवेशो विद्यते, महाजनेन हि चरितमेषां दृश्यतेऽनुविधीयते च ॥ १ ॥

महाजनेनेति । जनसमूहेनैतेषां चरितं दृश्यते सर्वदा तदनुगतत्वाद्, यदि दृष्टं तदा को दोष इत्याह--अनुविधीयते चेति ।

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति ॥ १ ॥

तदेव दृष्टान्तेन दर्शयति—

सवितारमुद्यन्तं त्रयो लोकाः पश्यन्त्यनूद्यन्ति च, गच्छन्तमपि पश्यन्त्यनुप्रतिष्ठन्ते च ॥ २ ॥

सवितारमिति । सविता लोकेषु श्रेष्ठः, तमुद्यन्तं, पश्यन्तीति चरितदर्शनम्, अनूद्यन्ति च तस्मिंस्तूद्गते सुप्ताः प्रबुध्यन्त इति, चरितानुविधानं, गच्छन्तमपि देशान्तरं पश्यन्तीति, चरितदर्शनम् , अनुप्रतिष्ठन्ते च यथास्वं क्रियासु प्रवर्तन्त इति, चरितानुविधानम् ॥ २ ॥

तस्मादशक्यत्वाद्गर्हणीयत्वाच्च न ते वृथा किञ्चिदाचरेयुः ॥ ३ ॥

तस्मादिति । परगृहं प्रविश्य यत्परदाराभिगमनं तदशक्यं, महाजनेन गर्हणीयत्वाच्च, इतरोऽपि जनोऽनुविदध्यादिति, शिष्टानां कुत्सनीयं तस्मात्तदर्थं न ते किञ्चिदनुष्ठानमाचरेयुर्निष्फलत्वात्स्वपरिग्रहेष्वपि सुखसम्भवात् ॥ ३ ॥

अवश्यं त्वाचरितव्ये योगान्प्रयुञ्जीरन् ॥ ४ ॥

अवश्यं त्विति । अन्यकारणवशात्स्थानान्तरयायिनो वा रागवशादाचरितव्ये, योगानिति । प्रयोगान् ॥ ४ ॥

ते द्विविधाः—प्रच्छन्नाः प्रकाशाश्च, ईश्वरा अपि द्विविधाः-क्षुद्रामुख्याश्च, तत्र क्षुद्रानधिकृत्य प्रच्छन्नानाह—

ग्रामाधिपतेरायुक्तकस्य हलोत्थवृत्तिपुत्रस्य यूनो ग्रामीणयोषितो वचनमात्रसाध्याः, ताश्चर्षण्य इत्याचक्षते विटाः ॥ ५ ॥

ग्रामाधिपतेरिति । ग्रामभोक्तुरायुक्तस्याधिकृतस्य, हलोत्थवृत्तिर्ग्रामकूटः, तस्य ग्रामीणैः कर्षणफलिका दीयन्ते, तस्य पुत्रस्य, यून इति । प्रत्येकं योज्यं, तेषामीश्वरत्वाद्वचनमात्रसाध्या नाभियोगमपेक्षन्ते, किंसर्वा एवेत्याह—ताश्चर्षण्य इति ॥ ५ ॥

ताभिः सह विष्टिकर्मसु कोष्ठागारप्रवेशे द्रव्याणां निष्क्रमणप्रवेशनयोर्भवनप्रतिसंस्कारे क्षेत्रकर्मणि कर्पासोर्णाऽतसीशणवल्कलादाने सूत्रप्रतिग्रहे द्रव्याणां क्रयविक्रयविनिमयेषु तेषु तेषु च कर्मसु संप्रयोगः ॥ ६ ॥

ताभिरिति। चर्षणीभिः सह संप्रयोग इति, वक्ष्यमाणेन सम्बन्धः, अत्रोपायमाह—विष्टिकर्मस्विति। भक्तमात्रेण यानि पेषणकुट्टनरन्धनादीनि कार्याणि तानि विष्टिकर्माणि, कोष्ठागारप्रवेशे तत्रत्यं कर्म कर्तुं-प्रविष्टाभिः, द्रव्याणां धान्यादीनां कोष्ठागारान्निष्क्रमणे तत्र च प्रवेशे तत्र कर्म कर्तुं प्रविष्टाभिः, क्रियमाणे भवनप्रतिसंस्कारे गृहमण्डने क्षेत्रकर्मणि बीजानां रक्षणोत्पाटनादौ, कर्पासस्योर्णाया अतसीशणवल्कलस्य च भाण्डागारात्सूत्रकर्तनाय दाने, सूत्रस्य च कर्तितस्य प्रतिग्रहे स्वीकारे कर्तनिकाभिः, द्रव्याणामिति। धान्यादीनां, क्रयविक्रयविनिमयेष्विति। क्रेतुं विक्रेतुं वा प्रविष्टाभिः, तेषु तेषु चेति। राजकुलप्रवेशहेतुषु ॥ ६ ॥

तथा व्रजयोषिद्भिः सह गवाध्यक्षस्य ॥ ७ ॥

गोपीभिर्गवाध्यक्षस्य दधिमथनादिकर्मसु ॥ ७ ॥

विधवाऽनाथाप्रव्रजिताभिः सह सूत्राध्यक्षस्य ॥ ८ ॥

स ह्यधिष्ठाय राजकीयसूत्राणि विधवाऽऽदिभिः कर्तनिकाभिः कर्तयति ॥ ८ ॥

मर्मज्ञत्वाद्रात्रावटने चाटन्तीभिर्नागरस्य ॥ ९ ॥

नगरे नियुक्तस्य दाण्डपाशिकस्य स्त्रीमर्मज्ञत्वाद्रात्रावटने चोदिताभिः ॥ ९ ॥

क्रयविक्रये पण्याध्यक्षस्य ॥ १० ॥

राजकीयपण्यानि क्रेतुं विक्रेतुं च नियुक्तस्य क्रेतृविक्रेतृस्त्रीभिः, संप्रयोग इति सर्वत्र योज्यम् ॥ १० ॥

मुख्यानधिकृत्य प्रच्छन्नानाह—

अष्टमीचन्द्रकौमुदीसुवसन्तकादिषु पत्तननगरखर्वटयोषितामीश्वरभवने सहान्तःपुरिकाभिः प्रायेण क्रीडा ॥ ११ ॥

अष्टमीति। कौमुदी कोजागरः, नगरखर्वटौ व्याख्यातौ, पत्तनादिकमुपलक्षणार्थं द्रोणमुखस्य, ईश्वरभवन इति। यस्य नगरादि भुज्यते तस्य भवने, आन्तःपुरिकाः = अन्तःपुरस्त्रियः ॥ ११ ॥

तत्र चापानकान्ते नगरस्त्रियो यथापरिचयमन्तःपुरिकाणां-पृथक्पृथग्भोगावासकान्प्रविश्य कथाभिरासित्वा पूजिताः प्रपीता-श्चोपप्रदोषं निष्क्राम्येयुः ॥ १२ ॥

तत्रेति । क्रीडायाम्, आपानकान्त इति । आन्तःपुरिकाभिः सर्वाभिः-सह पेयं पीत्वा; तदन्ते विशेषविधिमाह—नगरस्त्रिय इति । अत्रापि नगरखर्वटद्रोणमुखस्त्रियश्च, भोगावासकानिति । परिभोगप्रदेशान्, कथाभिरासित्वेति । आन्तःपुरिकाभिः सह कथाभिः स्थित्वा; पूजिता-आन्तःपुरिकाभिः, प्रपीता इति । प्रपीतमासां विद्यत इति मत्वर्थेऽकारः, उपप्रदोषं=प्रदोषसमीपे, निष्क्राम्येयुर्दिनं राजभवनेऽतिवाह्य ॥ १२ ॥

तत्र प्रणिहिता राजदासी प्रयोज्यायाः पूर्वसंसृष्टा तां तत्र संभाषेत ॥ १३ ॥

तत्रेति । अष्टमीचन्द्रादिषु, प्रणिहिता राज्ञा प्रयुक्ता, प्रयोज्याया इति । यामभिगन्तुमिच्छेत्, पूर्वसंसृष्टेति । पूर्वमेव या गृहं यात्वा संसर्गं कृत-वती, तामिति । प्रयोज्यां राजभवने प्रविष्टां, भाषेत कुशलपूर्वकम् ॥ १३ ॥

रामणीयकदर्शने च योजयेत् ॥ १४ ॥

रामणीयकदर्शने च योजयेच्, चित्तहरणार्थम् ॥ १४ ॥

प्रागेव स्वभवनस्थां ब्रूयात् ॥ १५ ॥

प्रागेवेति । राजभवनप्रवेशात्, स्वभवनस्थां ब्रूयादौत्सुक्यवार-णार्थम् ॥ १५ ॥

अमुष्यां क्रीडायां तव राजभवनस्थानानि रामणीयकानि दर्शयिष्यामीति काले च योजयेत् ॥ १६ ॥

अमुष्यामिति । येयमेष्यति, काले प्रज्ञाते च योजयेत् ॥ १६ ॥

रामणीयकरोचनान्याह—

बहिः प्रवालकुट्टिमं ते दर्शयिष्यामि मणिभूमिकां वृक्षवाटिकां-मृद्वीकामण्डपं समुद्रगृहप्रासादान्गूढभित्तिसंचारांश्चित्रकर्माणि क्री-डामृगान्यन्त्राणि शकुनान्व्याघ्रसिंहपञ्जरादीनि च यानि पुरस्ता-द्वर्णितानि स्युः ॥ १७ ॥

बहिरिति । प्रवालकुट्टिमं मणिभूमिकां स्फटिकाद्याकारां कृतकु-ट्टिमां भूमिं, वृक्षवाटिकां=पुष्पफलसमृद्धां, मृद्वीकामण्डपं=द्राक्षाम-ण्डपं, समुद्रगृहप्रासादानिति । धारागृहान् प्रासादांश्च, गूढभित्तिसञ्चा-

रानिति । गूढो भित्तिमध्यगतत्वाद् जलसञ्चारो येषु समुद्रगृहेषु, प्रासादेष्वपि निष्कासनप्रवेशनलक्षणसञ्चारानिति योज्यं, यन्त्राणि सजीवानि निर्जीवानि घटितान्यन्यानि च यानि कौतुकानि, क्रीडार्था ये मृगाः, शकुनकान्हंसादीन् , व्याघ्रपञ्जरान्व्याघ्राधिष्ठितान् , कस्याश्चिदेव क चित्कौतुकमुत्पद्यत इत्यनेकोपदर्शनम् ॥ १७ ॥

एकान्ते च तद्गतमीश्वरानुरागं श्रावयेत् ॥ १८ ॥

एकान्त इति । ईश्वरः कृतसङ्केतस्तिष्ठति, तद्गतमिति । त्वय्यनुरक्त ईश्वर इति ॥ १८ ॥

संप्रयोगे चातुर्यं चाभिवर्णयेत् ॥ १९ ॥

संप्रयोगेऽपि स्वेश्वरेण सत्यायतिं प्रभावं वर्णयेद्, येनापरिभूता वत्स्यसि ॥ १९ ॥

अमन्त्रश्रावं च प्रतिपन्नां योजयेत् ॥ २० ॥

अमन्त्रश्रावं च वर्णयेद् , आवाभ्यामन्यो न कश्चिज्जानातीति, प्रतिपन्नां संप्रयोगं, योजयेदीश्वरेण ॥ २० ॥

अप्रतिपद्यमानायां विधिमाह—

अप्रातिपद्यमानां तु स्वयमेवेश्वर आगत्योपचारैः सान्त्वितां रञ्जयित्वा संभूय च सानुरागं विसृजेत् ॥ २१ ॥

अप्रतिपद्यमानां त्विति । उपचारैरिति । स्रगादिभिः पानादिभिश्च स्फीतैः सान्त्वितामभिमुखीकृताम्, उपचारैः स्त्रियो ह्रियन्त इत्यतिप्रतीतमेतद् , रञ्जयित्वा; तदनुकूलेन रतेन, सम्भूय चेति । दास्या नगरस्त्रीभिः संयोज्य विसृजेत्, सानुरागमिति क्रियाविशेषणं, यथा जानाति मय्यनुरक्त ईश्वर इति ॥ २१ ॥

प्रयोज्यायाश्च पत्युरनुग्रहोचितस्य दारान्नित्यमन्तःपुरमौचित्यात्प्रवेशयेत्, तत्र प्रणिहिता राजदासीति समानं पूर्वेण ॥ २२ ॥

अनुग्रहोचितस्येति । ईश्वरस्य यः प्रसादवित्तकः, स च प्रयोज्यायाः पतिः तस्य दाराः, नित्यमिति । प्रत्यहमन्तःपुरं प्रविशन्ति, औचित्यादिति । अनुग्रहोचितत्वादेव प्रवेशोऽपि तस्या उचित एवेति, तत्रेति । प्रविष्टायां प्रयोज्यायां, प्रणिहिता राजदासीत्यनेन पूर्वोक्तेन समानम्, प्रयोगद्वयेऽप्यत्र प्रयोज्यानुप्रवेशस्य सुकरत्वाद्, दास्येव प्रयुक्ता ॥ २२ ॥

आन्तःपुरिका वा प्रयोज्या सह स्वचेटिकासंप्रेषणेन प्रीतिं कुर्यात्, प्रसृतप्रीतिं च सापदेशं दर्शने नियोजयेत् , प्रविष्टां पूजितां पीतवतीं प्रणिहिता राजदासीति समानं पूर्वेण ॥ २३ ॥

आन्तःपुरिका चेति । या का चिदीश्वरप्रयुक्ता चेटिकासंप्रेषणेन प्रीतिं कुर्यादात्मनो विश्वासासंभवात्, प्रस्तुतप्रीतिं च प्रयोज्यां सापदेशं किंचित्कार्यमपदिश्य; तयैव चेट्या दर्शनेऽपि नियोजयेद्, यथा मां द्रष्टुमागच्छेदिति ॥ २३ ॥

यस्मिन्वा विज्ञाने प्रयोज्या विख्याता स्यात्तद्दर्शनार्थमान्तःपुरिका सोपचारं तामाह्वयेत्, प्रविष्टा प्रणिहिता राजदासीति समानं पूर्वेण ॥ २४ ॥

यस्मिन्वेति । गीततन्त्रीवाद्यादिविज्ञाने, विख्यातां=प्रवीणां, सोपचारमिति । वस्त्रादिदानपूर्वकमाह्वयेद्, अत्र च प्रवेशस्यासंभवाद् आन्तःपुरिका द्वितीया प्रयुक्ता ॥ २४ ॥

उद्भूतानर्थस्य भीतस्य वा भार्यां भिक्षुकी ब्रूयादसावान्तःपुरिका राजनि सिद्धा गृहीतवाक्या मम वचनं शृणोति, स्वभावतश्च कृपाशीला तामनेनोपायेनाधिगमिष्यास्यहमेव ते प्रवेशं कारयिष्यामि, सा च ते भर्तुर्महान्तमनर्थं निवर्तयिष्यतीति प्रतिपन्नां द्विस्त्रिरिति प्रवेशयेद्, आन्तःपुरिका चास्या अभयं दद्यादभयश्रवणाच्च संप्रहृष्टां प्रणिहिता राजदासीति समानं पूर्वेण ॥ २५ ॥

उद्भूतानर्थस्येति । अर्थप्रतिघाति यत्कार्यं तदुत्पन्नं यस्य, भीतस्य चेति । यो राजकुलाद्भीतस्तस्य जायां भिक्षुकी राजप्रणिहिता ब्रूयाद्, अस्मिन्प्रयोगे तृतीयाऽपरा प्रयुक्ता, साऽप्येवंविधं कार्यं बुद्ध्वा; प्रयोज्यामान्तःपुरिकायां योजयति, राजनि सिद्धा प्रसादवित्तिका, गृहीतवाक्येति । सा यदाह तद्राजा करोति, मम वचनं शृणोतीत्यात्मनो गृहीतवाक्यतामाह-स्वभावतः कृपाशीलेति । उत्कोचाभावं दर्शयति, तामनेनेति । तदानीं बुद्धिविकल्पितेनोपायेन, कथं मम ? प्रवेश इति चेदाह—अहमेवेति । अनर्थमित्युपलक्षणार्थम्, भयं च निवर्तयिष्यति, द्विस्त्रिरिति । प्रवेशयेत्पश्चाज्जातपरिचया स्वयमेव प्रवेक्ष्यति, अभयमस्यै दद्याद्, अभयं निवेदितवत्यै संप्रहृष्टामनुद्विग्नां सम्भाषेत ॥ २५ ॥

एतया वृत्त्यर्थिनां, महामात्राभितप्तानां, बलाद्विगृहीतानां, व्यवहारे दुर्बलानां, स्वभोगेनासंतुष्टानां, राजनि प्रीतिकामानां, राजभजनेषु व्यक्तिमिच्छतां, सजातैर्बाध्यमानानां, सजातान्बाधितुकामानां, सूचकानाम्, अन्येषां कार्यवशिनां, जाया व्याख्याताः॥२६॥

एतयेति । उद्भूतानर्थभीतजायया, वृत्त्यर्थिनां=जीवनार्थिनाम्, महामात्राभितप्तानां=महामात्रैः प्रभवद्भिः पीडितानाम्, वल्लाद्भिर्गृहीतानां राजवल्लभैर्व्यवहारे दुर्बलानां न्यायबलाभावात्, स्वभोगेन तावन्मात्रेणासन्तुष्टानामधिकमिच्छतां, राजनि प्रीतिकामानां क्व चित्परिभवं मम मा कार्षीदिति, बाह्यजनेषु, व्यक्तिं=प्रसिद्धिम्, इच्छतां, राज्ञः प्रसाद्योऽयमिति, सजातैः=दायादैः, सूचकानाम्=उद्भाषकाणां, कार्यवशिनामिति । कार्यार्थिनां, जाया व्याख्याताः, अत्रापि भिक्षुकी ब्रूयादिति योज्यम्, एते प्रच्छन्नयोगा अत्याजितस्वकुलासु स्त्रीषु ॥ २६ ॥

अन्येन वा सह संसृष्टां सङ्ग्राह्य प्रयोज्यां दास्यमुपनीतां क्रमेणान्तःपुरं प्रवेशयेत् ॥ २७ ॥

अन्येनेति । येन केन चित्संसृष्टां कृतसंसर्गां, संग्राह्येति । नागरकेण संग्रहविधिना ग्राहयित्वा, दास्यमुपनीतामिति । प्रकाशविनष्टायावेश्याविशेषत्वाद्, तां सामान्यस्त्रियं क्रमेणान्तःपुरं प्रवेशयेद्, न झटिति समनन्तरमेव मा भूदेतत्कृतः प्रयोग इति ॥ २७ ॥

प्रणिधिना चायतिमस्याः सन्दूष्य राजनि विद्विष्ट इति कलत्रावग्रहोपायेनैनामन्तःपुरं प्रवेशयेदिति प्रच्छन्नयोगाः, एते राजपुत्रेषु प्रायेण ॥ २८ ॥

प्रणिधिना=चारेण, सन्दूष्य सद्भूतेनैव दोषेण, अन्यथा-अदुष्टदूषणमधर्माय भवति, एवं चास्य कलत्रावग्रहो न दोषाय, एतद्योगद्वयं त्याजितस्वकुलासु, एते राजपुत्रेषु प्रायेण न तु राज्ञः, तस्य मण्डले प्रतिष्ठितत्वात्कादाचित्काः स्युः ॥ २८ ॥

ननु परभवनप्रवेशेनापि प्रच्छन्नयोगाः सम्भवन्ति, यदा दूत्या प्रयोज्यां सङ्केत्य प्रच्छन्नः प्रविशति, न च तदानीं चरितं महाजनेन दृश्यतेऽनुविधीयते चेत्यत्राह—

न त्वेव परभवनमीश्वरः प्रविशेत् ॥ २९ ॥

प्रविशेत्प्रच्छन्नोऽपीत्यर्थः ॥ २९ ॥

अत्र पूर्ववृत्तं दोषं दर्शयति—

आभीरं हि कोट्टराजं परभवनगतं भ्रातृप्रयुक्तो रजको जघान, काशिराजं जयत्सेनमश्वाध्यक्ष इति ॥ ३० ॥

आभीरं हीति । गूर्जराते कोट्टं नाम स्थानं, तस्य राजानमाभीरनामानं, परभवनगतमिति । श्रेष्ठिवसुमित्रस्य भार्यामधिगन्तुं तद्भवनगतं

रजको राज्यार्हेण तद्भ्रात्रा प्रयुक्तो जघान, काशिराजं चेति । काशीस्थं राजानं जयत्सेनमश्वाध्यक्षस्तद्भार्यामधिगन्तुं तद्भवनगतं जघान ॥३०॥

प्रकाशास्तु योगा राज्ञः प्रायेण द्रष्टव्या यदाह—

प्रकाशकामितानि तु देशप्रवृत्तियोगात् ॥ ३१ ॥

देशप्रवृत्तियोगादिति । यो यस्मिन्देशे समाचारः पूर्वैः स्थापितस्तद्योगादिति, अतो दृश्यमानान्यपि कामितानि महाजनेन नानुविधीयन्ते, राज्ञामेव तत्राधिकारात् ॥ ३१ ॥

प्रत्ता जनपदकन्या दशमेऽहनि किंचिदौपायनिकमुपगृह्य प्रविशन्त्यन्तःपुरमुपभुक्ता एव विसृज्यन्त इत्यान्ध्राणाम् ॥ ३२ ॥

प्रत्ता इति । ऊढा औपायनिकमुपायप्रयोजनं वस्त्रादि, उपभुक्ता राज्ञा संप्रयुक्ताः, विसृज्यन्ते त्यक्ष्यन्ते, इत्यान्ध्राणां प्रवृत्तिः ॥ ३२ ॥

महामात्रेश्वराणामन्तःपुराणि निशि सेवाऽर्थं राजानमुपगच्छन्ति वात्सगुल्मकानाम् ॥ ३३ ॥

महामात्राणां य ईश्वरा मुख्यास्तेषामन्तःपुराणि स्त्रियः, सेवाऽर्थमिति । सेवां कर्तुं, वात्सगुल्मकानामिति । दक्षिणापथे सोदर्यौ राजपुत्रौ वत्सगुल्मौ ताभ्यामध्यासितो देशो वत्सगुल्मक इति प्रतीतः, तत्र भवानामियं प्रवृत्तिः ॥ ३३ ॥

रूपवतीर्जनपदयोषितः प्रीत्यपदेशेन मासं मासार्धं वा वासयन्त्यान्तःपुरिका वैदर्भाणाम् ॥ ३४ ॥

रूपवतीरिति । प्रशंसायां मतुप् , प्रीत्यपदेशेनेति । परस्परस्नेहभावः प्रीतिस्तस्यापदेशः,संप्रयोगस्तु प्रयोजनं, वासयन्ति, अन्तःपुर एवान्तःपुरिकाः स्त्रियः, वैदर्भाणामिति । कालाञ्जराद्दक्षिणेन विदर्भो नामदेशः, तत्र भवानाम् ॥ ३४ ॥

दर्शनीयाः स्वभार्याः प्रीतिदायमेव महामात्रराजभ्यो ददत्यपरान्तकानाम् ॥ ३५ ॥

प्रीतिदायमिति । प्रीत्या यत् स्वत्वनिवृत्त्या दीयते ॥ ३५ ॥

राजक्रीडाऽर्थं नगरस्त्रियो जनपदस्त्रियश्च सङ्घ एकशश्च राजकुलं प्रविशन्ति सौराष्ट्रकाणामिति ॥ ३६ ॥

राजक्रीडाऽर्थमिति । प्रवेशस्य निमित्तं, संप्रयोगस्तु प्रयोजनं, नगरं यत्र राजधानी तत्र स्त्रियो नगरस्त्रियः, ततो बाह्या जनपदस्त्रियः,

संघश इति। संभूय, एकश इति। एकैकशश्च सौराष्ट्रकाणामिति ॥३६॥

उक्तमनुक्तं चोपसंहरन्नाह—

श्लोकावत्र भवतः—

एते चान्ये च बहवः प्रयोगाः पारदारिकाः।
देशे देशे प्रवर्तन्ते राजभिः संप्रवर्तिताः ॥ ३७ ॥

एते चेति। अन्ये चैवं प्रकाराः, पारदारिकाः = परदारप्रयोजनाः, एते देशे देशे प्रवर्तन्ते, पूर्वराजभिः संप्रवर्तितत्वात् ॥ ३७ ॥

अत्र प्रतिषेधमाह—

न त्वेवैतत् प्रयुञ्जीत राजा लोकहिते रतः।
निगृहीतारिषड्वर्गस्तथा विजयते महीम् ॥ ३८ ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे ईश्वरकामितं पञ्चमोऽध्यायः।

न त्वेवैतदिति। एतदिति, ईश्वरकामितम्, प्रवर्त्तितामिति, न प्रयुञ्जीत, लोकहिते रतः, यस्तु नैवं; स महीपतिर्न विजयते, अनिगृहीतारिषड्वर्गत्वाद्, विजयस्य कारणं कामक्रोधलोभमानमदहर्षजय इति ॥३८॥

ईश्वरकामितं सप्तचत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां पारदारिके पञ्चमेऽधिकरणे ईश्वरकामितं पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

यथेश्वराणां परभवनप्रवेशो नास्ति तथाऽऽन्तःपुरिकाणां, नागरकाणां चान्तःपुरवेशः, इत्यान्तःपुरिकाणां नागरकाणां चोभयथाऽप्यान्तःपुरिकावृत्तमुच्यते, तत्र पूर्वमधिकृत्याह—

नान्तःपुराणां रक्षणयोगात्पुरुषसंदर्शनं विद्यते पत्युश्चैकत्वादनेकसाधारणत्वाच्चातृप्तिस्तस्मात्तानि योगत एव परस्परं रञ्जयेयुः ॥ १ ॥

नान्तःपुराणामिति। तात्स्थ्यादान्तःपुरिकाणामित्यर्थः, तासां पतिरस्त्येवेति चेदाह—पत्युश्चैकत्वादिति। एकोऽपि तृप्तिं कुर्यादिति चेदाह—अनेकसाधारणत्वाच्चेति। स हि तासां साधारणः कथं ? तृप्तिं कुर्याद्, योगतः, परस्परमिति। या रतिमन्यस्यां कुर्यात्तस्यामन्येति ॥ १ ॥

प्रयोगमाह—

धात्रेयिकां सखीं दासीं वा पुरुषवदलंकृत्याकृतिसंयुक्तैः कन्दमूलफलावयवैरपद्रव्यैर्वाऽऽत्माभिप्रायं निवर्तयेयुः ॥ २ ॥

धात्रेयिकामिति । पुरुषवदलंकृत्येति । तत्र हि पुरुषवद् बुद्ध्याऽति मात्रे भावे तृप्तिरतिशयितवती भवति, आकृतिसंयुक्तैरिति । पुरुषेन्द्रियसंस्थानवद्भिः, कन्दमूलफलावयवैरिति । तत्र कन्दा आलुककदल्यादीनाम्, मूलं तालकेतकीनाम्, फलमलाबुकर्कटिकाऽऽदीनाम्, एतानि संशोध्य ग्राह्याणीति, अवयवग्रहणे फलं दर्शयति—आत्माभिप्रायमिति । रागभावं, निवर्तयेयुः, केवलं श्रद्धाविनोदनं तथाविधकामस्याप्राधान्यात् ॥ २ ॥

पुरुषप्रतिमा अव्यक्तलिङ्गाश्चाधिशयीरन् ॥ ३ ॥

पुरुषप्रतिमाः पुरुषदेहान्, अव्यक्तलिङ्गा अजातश्मश्रुत्वात्स्त्रीरूपाभासानित्यर्थः ॥ ३ ॥

एकोऽपि पतिः तृप्तिं कुर्याद्यः कामार्तासु कृपाशीलः, यथा प्राच्यानामित्याह—

राजानश्च कृपाशीला विनाऽपि भावयोगादायोजितापद्रव्या यावदर्थमेकया रात्र्या बह्वीभिरपि गच्छन्ति, यस्यां तु प्रीतिर्वासकऋतुर्वा तत्राभिप्रायतः प्रवर्तन्त इति प्राच्योपचाराः ॥ ४ ॥

राजान इति । विनाऽपि भावयोगादिति । अजातसंप्रयोगेच्छा अपि, आयोजितापद्रव्या इति । कट्यामाबद्धकृत्रिमसाधनाः,यावदर्थं = यावत्तृप्ति, बह्वीभिरपि स्त्रीभिः सह गच्छन्ति संप्रयोगमित्यर्थः, विशेषमाह—यस्यां त्विति । प्रीतिः=सहजः स्नेहः, वासकः=परिपाट्या शयनम्, ऋतुः=अपत्यार्थं, तत्र = तस्याम्, अभिप्रायतो भावेनेत्यर्थः, अयमन्तःपुरविषये योग उक्तः ॥ ४ ॥

स्त्रीयोगेणैव पुरुषाणामप्यलब्धवृत्तीनां वियोनिषु विजातिषु स्त्रीप्रतिमासु केवलोपमर्दनाच्चाभिप्रायनिवृत्तिर्व्याख्याता ॥ ५ ॥

स्त्रीयोगेणैवेति । यथा स्त्रीणां क्व चित्पुरुषबुद्धिमुत्पाद्याभिप्रायनिवृत्तिरेवं पुरुषाणामपि केषां चिदित्याह—अलब्धवृत्तीनामिति । ये स्त्रियं न प्राप्नुवन्ति, वियोनिषु = बालोरुकक्षादिषु, विजातिषु = एडीबडवाऽऽदिषु, स्त्रीप्रतिमासु = स्त्रीप्रतिकृतिषु, समुत्कीर्णस्त्रीलिङ्गादिषु, केवलोपमर्दनाच्चेति । सिंहाक्रान्तेन करेण वा साधनस्य मन्थनादेव केवलाद्,

यथोक्तम्--

'भुवि विन्यस्तहस्ताभ्यामवष्टभ्योत्कटासनः ।
बाहुमध्ये विमृद्नीयात्सिंहाक्रान्तेष्वयं विधिः' ॥

अस्थानेषु शुक्रविसृष्टिर्विधर्म इति चेत्, स्वप्नाभिमाने कथं ? तत्र प्रायश्चित्तविधानादिति चेदिहापि विहितत्वात् ॥ ५ ॥

बहिर्विषयमाह—

योषावेषांश्च नागरकान्प्रायेणान्तःपुरिकापरिचारिकाभिः सह प्रवेशयन्ति ॥ ६ ॥

योषावेषानिति । स्त्रीवेशान्, परिचारिकाभिरिति । प्रदोषे परिचरितुमन्तःपुरं प्रविशन्तीभिः ॥ ६ ॥

तेषामुपावर्तने धात्रेयिकाश्चाभ्यन्तरसंसृष्टाः, आयतिं दर्शयन्त्यः प्रयतेरन् ॥ ७ ॥

तेषामिति । नागरकाणामुपावर्तनेऽभिमुखीकरणे प्रयतेरन्, आभ्यन्तरसंसृष्टा इति । तासु नागरकाणां यथाऽर्थबुद्धिः, न बाह्यासु, आयतिमिति । आगामि फलमेवं भविष्यतीति ॥ ७ ॥

सुखप्रवेशितामपसारभूमिं, विशालतां वेश्मनः, प्रमादं रक्षिणामनित्यतां परिजनस्य, वर्णयेयुः ॥ ८ ॥

अपसारभूमिं अपक्रमणमार्गं, विशालामिति । विस्तीर्णत्वान्न ज्ञायते क्व किं वर्तत इति, प्रमादम् = असावधानताम्, अनित्यतामिति । राजपरिजनो न नित्यं संनिहित इति ॥ ८ ॥

न चासद्भूतेनार्थेन प्रवेशयितुं जनमावर्तयेयुर्दोषात् ॥ ९ ॥

असद्भूतेनेति । विना भावेन, सुप्रवेशितां विना च, जनमिति । नागरकम्, आवर्तयेयुरभिमुखीकुर्युः, दोषादिति । विना भावमदुष्टदूषणे, आत्मनः सुप्रवेशिताद्यभावे च जनस्यापकारः ॥ ९ ॥

द्वितीयं वृत्तमधिकृत्याह—

नागरकस्तु सुप्रापामप्यन्तःपुरमपायभूयिष्ठत्वान्न प्रविशेदिति वात्स्यायनः ॥ १० ॥

अपायभूयिष्ठत्वादिति । बहूनां विनाशकारणानां संनिधानात् ॥ १० ॥

अत्र विशेषमाह—

सापसारं तु प्रमदवनावगाढं विभक्तदीर्घकक्षमल्पप्रमत्तरक्षकं-

प्रोषितराजकं कारणानि समीक्ष्य बहुश आहूयमानोऽर्थबुद्ध्या कक्षाप्रवेशं च दृष्ट्वा ताभिरेव विहितोपायः प्रविशेत् ॥ ११ ॥

प्रमदवनं=क्रीडावनं, तेनावगाढं गहनं, कक्षाः=प्रकोष्ठकानि, प्रोषितराजकं राज्ञोऽन्यत्र गतत्वात्, कारणान्यभिगमनस्य, बहुश आहूयमानोऽर्थबुद्ध्या, कक्षाप्रवेशं दृष्ट्वा; अनेन मार्गेण मया प्रवेष्टव्यमिति, ताभिरिति। या उपावर्तयन्ते, विहितोपाय इति। एवं वेषोऽस्मिन्काले, गृहीत्वा चेममिति ॥ ११ ॥

शक्तिविषये च प्रतिदिनं निष्क्रामयेत् ॥ १२ ॥

शक्तिविषये चेति। येन प्रतिदिनं निष्क्रमितुं शक्तिस्तस्मिन्सति ॥ १२॥

इदमुपावर्तनस्य वृत्तं, यस्तु स्वयमुपावर्तते तस्य वृत्तमाह—

बहिश्च रक्षिभिरन्यदेव कारणमपदिश्य संसृज्येत ॥ १३ ॥

बाह्या ये रक्षिणस्तैः सह, अन्यदेवेति। अमुकसम्बन्धेन मम त्वं भ्राता भगिनीपतिर्वेति. संसृज्येत=प्रीतिं कुर्याद्, येन तेषां तन्निवारणे शथिल्यं स्यात् ॥ १३ ॥

अन्तश्चारिण्यां च परिचारिकायां विदितार्थायां सक्तमात्मानं रूपयेत्, तदलाभाच्च शोकम् ॥ १४ ॥

विदितार्थायामिति। मय्यनुरक्त इति, विदितार्थायां, सक्तं निरूपयेत्प्रकाशयेदाकारसंवरणार्थम्, एवं च दार्ढ्यार्थमाह—तदलाभादिति। परिचारिकाया अप्राप्तेः शोकं निरूपयेदित्येव ॥ १४ ॥

अन्तःप्रवेशिनीभिश्च दूतीकल्पं सकलमाचरेत् ॥ १५ ॥

अन्तःप्रवेशिनीभिश्चेति। बाह्याभिरन्तःपुरप्रवेशनशीलाभिः स्त्रीभिःकारणभूताभिः, दूतीकल्पं=दूतीविधानं यथोक्तम् ॥ १५ ॥

राजप्रणिधींश्च बुध्येत ॥ १६ ॥

राजप्रणिधींश्चेति। राजचरान् बुध्येतात्मसंरक्षणार्थं, यत्र यस्मिन्प्रदेशे दूरस्थाया एव दर्शनयोगः ॥ १६ ॥

दूत्यास्त्वसंचारे यत्र गृहीताकारायाः प्रयोज्याया दर्शनयोगस्तत्रावस्थानम् ॥ १७ ॥

गृहीताकाराया इति। अन्यथा सत्यपि दर्शनयोगेऽवस्थानं निष्फलमेव स्यात् ॥ १७ ॥

तस्मिन्नपि तु रक्षिषु परिचारिकाव्यपदेशः ॥ १८ ॥

तस्मिन्नपि तु प्रदेशे स्थितेन रक्षिषु परिचारिकाव्यपदेशः कार्यः, यस्यामात्मा सक्तो निरूपितः ॥ १८ ॥

चक्षुरनुबध्नत्यामिङ्गिताकारनिवेदनम् ॥ १९ ॥

चक्षुरनुबध्नत्यामिति। पुनः पुनः पश्यन्त्यां प्रयोज्यायाम्, इङ्गिताकारनिवेदनं भावसूचनार्थम् ॥ १९ ॥

यत्र संपातोऽस्यास्तत्र चित्रकर्मणस्तद्युक्तस्य द्व्यर्थानां गीतवस्तुकानां क्रीडनकानां कृतचिह्नानामापीडकस्याङ्गुलीयकस्य च निधानम् ॥२०॥

सम्पात इति। यत्रोद्देशे सम्यग्गमनं, तद्युक्तस्येति। प्रयोज्यायुक्तस्य, सानुरागमात्मानं फलके भित्तौ वा विलिख्य निदध्याद्, द्व्यर्थानामिति। यानि प्रयोज्याविषयमनुरागं सूचयन्ति, गीतवस्तूनां खण्डगाथावर्णादीनां पत्रस्थानां, क्रीडनकानां पुत्रिकाकन्दुकादीनां कृतचिह्नानाम्, आपीडकस्य नखदशनपदाङ्कितस्य, अङ्गुलीयकस्य स्वनामाङ्कितस्य ॥२०॥

प्रत्युत्तरं च तया दत्तं मपश्येत्, ततः प्रवेशने यतेत ॥२१॥

प्रत्युत्तरं चेति। तयाऽन्यया वा दत्तं प्रकर्षेण पश्येत्, तत इति। ल्यब्लोपे पञ्चमी, सानुरागं प्रत्युत्तरं दृष्ट्वेत्यर्थः, यत्नः क्रमणम् ॥ २१ ॥

प्रवेशोपायमाह—

यत्र चास्या नियतं गमनमिति विद्यात्तत्र प्रच्छन्नस्य प्रागेवावस्थानम् ॥ २२ ॥

यत्रेति। उद्यानादौ, प्रच्छन्नस्य गूढस्यावस्थानं प्राङ् नायिकागमनात्, तदानीं गमनं तु लक्षितं भवति ॥ २२ ॥

रक्षिपुरुषरूपो वा तदनुज्ञातो वेलायां प्रविशेत् ॥ २४ ॥

रक्षिपुरुषरूपो वेति। रक्षिपुरुषव्यञ्जनः, तदनुज्ञातो रक्षिणाऽनुमतो वेलायां रात्रौ ॥ २३ ॥

आस्तरणप्रावरणवेष्टितस्य वा प्रवेशनिर्हारौ ॥ २३ ॥

आस्तरणं = कुथातूलकादि, आवरणं = कम्बलादि, तद्वेष्टितस्य तस्य स्त्रिया पुरुषेण वा गृहीतस्य, निर्हारः = निष्क्रमणम् ॥ २४ ॥

पुटापुटैर्योगैर्वा नष्टच्छायारूपः ॥ २५ ॥

पुटापुटैरिति। मञ्जूषायां सपिधानायां प्रक्षिप्तस्य योगैरन्तर्धानयोगैराम्नायागतैः ॥ २५ ॥

तत्रायं प्रयोगो नकुलहृदयं चोरकतुम्बीफलानि सर्पाक्षीणि चान्तर्धूमेन पचेत्, ततोऽञ्जनेन समभागेनोदकेन पेषयेदनेनाभ्यक्तनयनो नष्टच्छायारूपश्चरति ॥ २६ ॥

नष्टच्छायारूपश्चरतीति । कश्चिद्रूपमेव तिरस्करोति न च्छायां, यैरुभयमपि न दृश्यते ॥ २६ ॥

रात्रिकौमुदीषु च दीपिकासंबाधे सुरङ्गया वा ॥ २७ ॥

रात्रिकौमुदीषु चेति । सुखरात्रिकासु वा, दीपिकासंबाधे गृहीतदीपिकानां चेटिकानां समूहे, तद्वेषधारिणः, सुरङ्गया वा, अन्तःपुरोद्भिन्नया, प्रवेशनिर्हारौ सर्वत्र योज्यौ ॥ २७ ॥

प्रवेशननिर्हारयोरेतद्वक्ष्यमाणमुपायान्तरमाह—

भवन्ति चात्र श्लोकाः—

'द्रव्याणामपि निर्हारे यानकानां प्रवेशने ।
आपानकोत्सवार्थेऽपि चेटिकानां च संभ्रमे ॥ २८ ॥

द्रव्याणामिति । सारदार्वादीनां, यानकानां = युग्यादीनां, कर्मकरैर्निर्हारे प्रवेशने च तन्मध्यवर्तिनोऽपि प्रवेशनं निष्क्रमणं चेति, सर्वत्र योज्यम्, आपानकमुत्सवः, चार्थेऽपिः, चेटिकानां च, संभ्रमे = इतस्ततोगमने ॥ २८ ॥

व्यत्यासे वेश्मनां चैव रक्षिणां च विपर्यये ।
उद्यानयात्रागमने यात्रातश्च प्रवेशने ॥ २९ ॥

व्यत्यास इति । आन्तःपुरिकाणां वेश्मपरिचये कर्मकरवेशस्य, रक्षिणां विपर्यये द्वारान्तरगमने, तथा हि—न ज्ञायते क आत्मीयः कः पर इति, यात्रातश्चेति । चकारादुद्यानतश्च ॥ २९ ॥

दीर्घकालोदयां यात्रां प्रोषिते चापि राजनि ।
प्रवेशने भवेत्प्रायो यूनां निष्क्रमणं तथा ॥ ३० ॥

दीर्घकालोदयामिति । दीर्घकाल उदयः फलं यस्याः, शत्रुर्न यानमात्रसाध्यो भवतीत्यर्थः । ॥ ३० ॥

ननु या नैवंविधा आन्तःपुरिकास्ताभिर्मन्त्रो भिद्येतेत्याह—

परस्परस्य कार्याणि ज्ञात्वा चान्तःपुरालयाः ।
एककार्यास्ततः कुर्युः शेषाणामपि भेदनम् ॥ ३१ ॥

परस्परस्येति । कार्याणि रहस्यानि, आन्तःपुरिकाः, एककार्या इति । एकस्या यत्कार्यं तत्सम्भूयास्माभिर्निष्पाद्यमिति, कृतसङ्गानां, शेषाणां भेदनं कुर्युर्यथा ता अपि समानधर्मिण्यः स्युः ॥ ३१ ॥

किं फलमिति चेदाह—

दूषयित्वा ततोऽन्योन्यमेककार्यार्पणे स्थिरः ।
अभेद्यतां गतः सद्यो यथेष्टं फलमश्नुते ॥ ३२ ॥

दूषयित्वेति। एककार्यार्पण इति। एकं चारित्रखण्डनाख्यं कार्यं परस्परस्यार्पयति य आन्तःपुरिकासंघः,अभेद्यतां गतो मन्त्रभेदाभावादेवं च स्थिरः ॥ ३२ ॥

इदमान्तःपुरिकावृत्तं प्रच्छन्नमुक्तम्, प्रकाशं तु देशप्रवृत्त्या, यदाह—

तत्र राजकुलचारिण्य एव लक्षण्यान्पुरुषानन्तःपुरं प्रवेशयन्ति नातिसुरक्षत्वादापरान्तिकानाम् ॥ ३३ ॥

तत्रेति। राजकुलचारिण्यो या राजकुले चरन्ति स्त्रियः, लक्षण्यानिति। ये स्त्र्यादिलक्षणे साधवस्तज्ज्ञास्तानित्यर्थः, नातिसुरक्षत्वादिति। नात्यन्तं स्वा राजकीयास्तत्र रक्षन्ति ॥ ३३ ॥

क्षत्रियसंज्ञकैरन्तःपुररक्षिभिरेवार्थं साधयन्त्याभीरकाणाम्॥ ३४॥

क्षत्रियसंज्ञकैरिति। नान्यै रक्षिभिः, तेषां तत्राभ्यन्तरप्रवेशाद्, अर्थमिति। सम्प्रयोगं साधयन्ति राजकुलचारिण्य इत्येव ॥ ३४ ॥

प्रेष्याभिः सह तद्वेषान्नागरकपुत्रान्प्रवेशयन्ति वात्सगुल्मकानाम् ॥ ३५ ॥

प्रेष्याभिरिति। दासीभिः, तद्वेषान् = दासीवेषान्, प्रवेशयन्ति, राजकुलचारिण्य इति वर्तते ॥ ३५ ॥

स्वैरेव पुत्रैरन्तःपुराणि कामचारैर्जननीवर्जमुपयुज्यन्ते वैदर्भकाणाम् ॥ ३६ ॥

स्वैरिति। राजापेक्षया, कामचारैरिति। अनिषिद्धसञ्चारैः, जननीवर्जमिति। मुख्यमातरं मुक्त्वा, उपयुज्यन्ते = अभिगम्यन्ते ॥ ३६ ॥

तथा प्रवेशिभिरेव ज्ञातिसंबन्धिभिर्नान्यैरुपयुज्यन्ते स्त्रैराजकानाम् ॥ ३७ ॥

तथा प्रवेशिभिरिति। राजपुत्रवत् प्रवेशिभिः, ज्ञातिसम्बन्धिभिः, नान्यैरुपभुज्यन्ते, स्त्रैराजकानामिति। स्त्रीराजः = स्त्रीपुरी, तत्र भवानाम् ॥ ३७ ॥

ब्राह्मणैर्मित्रैर्भृत्यैर्दासचेटैश्च गौडानाम् ॥ ३८ ॥

मित्रैर्भृत्यैरिति। मित्रैर्भृत्यैश्च, दासचेटैरिति। दासा गृहजातास्ततोऽन्ये चेटाः, गौडानामिति। गौडाः कामरूपकाः प्राच्यविशेषाः ॥३८॥

परिस्कन्दाः कर्मकराश्चान्तःपुरेष्वनिषिद्धा अन्येऽपि तद्रूपाश्च सैन्धवानाम् ॥ ३९ ॥

परिस्कन्दाः = प्रतीहाराः, कर्मकराः = शयनासनचमरादिकर्मकराः,

अन्येऽपि तद्रूपा येऽनिषिद्धसंचाराः, उपयुज्यन्त इत्यर्थकत्वाद्विभक्तिविपरिणामेन संबन्धः, सैन्धवानामिति । सिन्धुनामा नदस्तस्य पश्चिमेन सिन्धुदेशस्तत्र भवानाम् ॥ ३९ ॥

अर्थेन रक्षिणमुपगृह्य साहसिकाः संहताः प्रविशन्ति हैमवतानाम् ॥ ४० ॥

अर्थेनोपगृह्य रक्षिणां लुब्धत्वात्, साहसिका निर्भया नान्ये, संहता एकीभूय, हैमवतानामिति । हिमवद्द्रोणीभवानाम् ॥ ४० ॥

पुष्पदाननियोगान्नगरब्राह्मणा राजविदितमन्तःपुराणि गच्छन्ति पटान्तरितश्चैषामालापः, तेन प्रसङ्गेन व्यतिकरो भवति बङ्गाङ्गकलिङ्गकानाम् ॥ ४१ ॥

नगरब्राह्मणा इति । तत्रैव नगरे ये ब्राह्मणास्ते पुष्पाणि दातुमन्तःपुरं गच्छन्ति, राजविदितमिति । राजप्रज्ञातम् , पटान्तरितश्चैषामालापो न ताभिः साक्षाद् दृश्यमानाभिरिति देशस्थितिः, तेनेति । पुष्पदानप्रसङ्गेन, व्यतिकरः = संप्रयोगः, बङ्गाः तिरुहितात् पूर्वेण, अङ्गा महानद्याः पूर्वेण, कलिङ्गा गौडविषयाद्दक्षिणेन ॥ ४१ ॥

संहत्य नव दशेत्येकैकं युवानं प्रच्छादयन्ति प्राच्यानामित्येवं परस्त्रियः प्रकुर्वीत ॥ ४२ ॥

इत्यान्तःपुरिकावृत्तम् ॥

संहत्य नव दशेतीति । अत्रेतिशब्दः प्रकारे, एकैकं युवानं व्यवायक्षमं प्रच्छादयन्ति न यथा दृश्यते, एवमित्युक्तेन पारदारिकेण विधिना प्रकुर्वीताभिगच्छेत् ॥ ४२ ॥

इत्यान्तःपुरिकावृत्तमष्टचत्वारिंशं प्रकरणम् ॥

यथा परस्त्रियमेभिरुपायैरभिगच्छेत्तथा तद्दारानपरोऽपीति, दाररक्षिकमुच्यते, दाररक्षा प्रयोजनमस्येति, यदाह—

एभ्य एव च कारणेभ्यः स्वदारान्रक्षेत् ॥ ४३ ॥

एभ्य एवेति । कारणेभ्य इति । निमित्तेभ्यः, तत्र व्यावर्त्तनकारणबधनेन तदुच्छेदनकारणेभ्यो रक्षेत्, तथा सिद्धपुरुषेभ्यः, यैश्च द्वारदेशावस्थानादिभिः कारणैरभियोगमात्रसाध्यत्वं, यानि च परिचयकारणानि, अभियोगदूतीकर्माणि, ईश्वरकामितोपाय आन्तःपुरिकावृत्तं च तेभ्यो रक्षेत्, तत्रायं प्रथमो रक्षणोपायो यद्रक्षानिवेशनम् ॥ ४३ ॥

यदाह—

कामोपधाशुद्धान्रक्षिणोऽन्तःपुरे स्थापयेदित्याचार्याः ॥४४॥

कामोपधेति । कामविषये या परीक्षा तया शुद्धान् ॥ ४४ ॥

**ते हि भयेन चार्थेन चान्यं प्रयोजयेयुस्तस्मात्कामभयार्थोपधाशुद्धानिति गोणिकापुत्रः ॥ ४५ ॥**

ते हीति । यद्यपि स्वयं कामोपधाशुद्धा नाभिगच्छन्ति, तथाऽपि भयेन लोभेन वाऽन्यं प्रयोजयेयुस्तदशुद्धिसंभवात्तस्मात् कामभयार्थोपधाशुद्धान् स्थापयेदिति गोणिकापुत्रः ॥ ४५ ॥

**अद्रोहो धर्मस्तमपि भयाज्जह्यादतो धर्मभयोपधाशुद्धानिति वात्स्यायनः ॥ ४६ ॥**

धर्मभयोपधाशुद्धानिति । वात्स्यायन एवं मन्यते धर्मोपधाशुद्धो न परदारानभिगच्छति, नार्थलोभात्स्वामिद्रोहमाचरति, भयात्तु धर्मं परित्यजेदिति ॥ ४६ ॥

स्वदारेषु परीक्षणमपि रक्षणोपाय इति केचिदित्याह—

**परवाक्याभिधायिनीभिश्च गूढाकाराभिः प्रमदाभिरात्मदारानुपदध्याच्छौचाशौचपरिज्ञानार्थमिति बाभ्रवीयाः ॥ ४७ ॥**

परवाक्येति । अमुकस्त्वय्यनुक्तः स एवमाह—मम प्राणा धार्यन्तामिति । गूढाकाराभिरिति । यथा सा न जानाति पत्या प्रयुक्तेति, तयोपदध्यात्परीक्षेत, तथा ह्यप्रतिपन्नायाः शौचं, प्रतिपन्नायाश्चाशौचं ज्ञातं भवति ॥ ४७ ॥

**दुष्टानां युवतिषु सिद्धत्वान्नाकस्माददुष्टदूषणमाचरेदिति वात्स्यायनः ॥ ४८ ॥**

दुष्टानामिति । विनाशकारणानामित्यर्थः, एवं मन्यते विनाशकारणेषु सत्स्वसत्सु वा परीक्षावान्स्यात्, तत्र पूर्वस्मिन्पक्षे दुष्टानां युवतिषु प्रत्यक्षेण सिद्धत्वात् किं परीक्षया, द्वितीयेऽप्यकस्मात् कारणेन विना, नादुष्टानामविद्यमानविनाशकारणानां दूषणमाचरेद्, शुद्धशोधनस्य दोषवत्त्वाद्, यथोक्तम्—

> न शोधनमदुष्टस्य विशेषेणारभसश्चरेत् ।
> कदा चिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥ ४८ ॥

तस्माद्विनाशकारणान्येव निरूप्यानि, येभ्यो व्यावर्तनेनोपदध्यादित्याह—

**अतिगोष्ठी, निरङ्कुशत्वं, भर्तुः स्वैरता, पुरुषैः सहानियन्त्रणता, प्रवासेऽवस्थानं, विदेशे निवासः, स्ववृत्त्युपघातः, स्वैरिणीसंसर्गः, पत्युरीर्ष्यालुता, चेति स्त्रीणां विनाशकारणानि ॥ ४९ ॥**

अतिगोष्ठी = स्त्रीभिः सह सदा गोष्ठी, भर्तुः स्वैरता = भर्त्रा स्वातन्त्र्येण व्यवहारिता, पुरुषैः यैः कैश्चिदनियन्त्रणता = नियन्त्रणाभावः, प्रवासेऽवस्थानं = भर्तरि प्रोषिते यदेकाकिन्याऽवस्थातव्यं, विदेशे वासः = स्वस्थानादन्यस्मिन् स्थाने वासः, स्ववृत्त्युपघातः = स्वशरीरस्थित्युपघातो ग्रासाच्छादनवैकल्याद्, स्वैरिण्याः = पुंश्चल्याः संसर्गः, पत्युरीर्ष्यालुतेति । पत्यावीर्ष्यासम्भव इति विनाशकारणानि, एषु सत्सु परदाराभिमर्शयोगसम्भवात् ॥ ४९ ॥

अधिकरणार्थमुपसंहरन्नाह—

संदृश्य शास्त्रतो योगान् पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित्स्वदारान्प्रति शास्त्रवित् ॥ ५० ॥

पारदारिकलक्षितानिति । पारदारिकेऽधिकरणे ये प्रोक्तास्तैर्लक्षितान्, शास्त्रविदिति । अन्यथा कथमेताः शास्त्रतः पश्येत् ॥ ५० ॥

पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥ ५१ ॥

पाक्षिकत्वादिति । यदाऽन्यकारणानि पश्येद्, अपायानां च शरीरोपघातादीनां, वैलोम्यादिति । विपक्षत्वात्, परदारप्रयोजनप्रयोगं नाचरेदिति ॥ ५१ ॥

तर्हि किमर्थं ? तदधिकरणमुक्तमिति चेदाह—

तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयो ह्ययं विधिः ॥ ५२ ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरण-
आन्तःपुरिकं दाररक्षिकं षष्ठोऽध्यायः ।

तदेतदिति । श्रेयस इति । अन्यथा खण्डितचारित्रायां सर्वधर्मविलोपः स्यात्, प्रजानामिति । न हि तदर्थं मुख्यं विधानमित्यर्थः ।

इति दाररक्षिकमेकोनपञ्चाशत्तमं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां पारदारिके पञ्चमेऽधिकरण आन्तःपुरिकं दाररक्षिकं षष्ठोऽध्यायः ।

समाप्तं चेदं पारदारिकं नाम पञ्चममधिकरणम् ।

# वैशिकं नाम षष्ठमधिकरणम् ।

## प्रथमोऽध्यायः ।

तिसृभिर्नायिकाभिः समागमोपाय उक्तो वेश्याभिः सह वक्तव्यस्तदर्थं वैशिकमधिकरणमुच्यते, तत्र सहायादिनिरूपणव्यापारपूर्वकत्वादुत्तरव्यापारस्य सहायगम्यागम्यगमनकारणचिन्तोच्यते, पुंवेश्ययोस्तुल्येऽपि रतिफले वेश्याया एव प्रयोक्तृतया तत्राधिकारः, न पुंसः तत्प्रतिबद्धत्वाज्जीविकायास्तदाह—

**वेश्यानां पुरुषाधिगमे रतिर्वृत्तिश्च सर्गात् ॥ १ ॥**

वेश्यानामिति । पुरुषस्याधिगमे प्राप्तौ सतीति शेषः, रतिर्विसृष्टिसुखं, वृत्तिर्जीविका, अर्थोपादानात्, सर्गादिति । सृष्टेः, एषैव हि सृष्टिर्यत्कामोऽर्थाधिगमश्च वेश्यानां, कामोऽर्थनाशश्च पुंसामिति ॥ १ ॥

**रतितः प्रवर्तनं स्वाभाविकं, कृत्रिममर्थार्थम् ॥ २ ॥**

रतित इति । तत्र द्वयोः फलयोर्यदा रतिमभिसंधाय प्रवर्तनं तदा स्वाभाविकं, तत्र रागस्य सहजत्वाद्, यदा त्वर्थमभिसंधाय तदा कृत्रिमं,-रागाभावात् ॥ २ ॥

**तदपि स्वाभाविकवद्रूपयेत् ॥ ३ ॥**

तदपीति । तदपि कृत्रिमं स्वाभाविकवद्रूपयेत्प्रकाशयेत्कान्तानुवृत्त्या ॥ ३ ॥

किमर्थं तत्राह—

**कामपरासु हि पुंसां विश्वासयोगात् ॥ ४ ॥**

कामेति । स्नेहेन मयि वर्तत इति पुंसां विश्वासयोगः = सक्तियोगः, न त्वर्थपरासु ॥ ४ ॥

कामपरतां च ख्यापयन्ती नार्थरूपतामपि ख्यापयेदित्याह—

**अलुब्धतां च ख्यापयेत्तस्य निदर्शनार्थम् ॥ ५ ॥**

अलुब्धतामिति । तस्य निदर्शनार्थमिति । स्वाभाविकत्वस्य ख्यापनार्थम् ॥ ५ ॥

एवं च सति सक्ताद्वित्तादानमपि स्वाभाविकं सिद्धं भवति, तत्रापि विनोपायेन माददीतेत्याह—

**न चानुपायेनार्थान्साधयेदायतिसंरक्षणार्थम् ॥ ६ ॥**

न चेति । आयतीति । आयतिः प्रभावः ॥ ६ ॥

तत्र सहायचिन्तामाह—

नित्यमलंकारयोगिनी राजमार्गावलोकिनी दृश्यमाना न चातिविवृता तिष्ठेत् पण्यसधर्मत्वात् ॥ ७ ॥

नित्यमिति । सदाऽलंकृता स्यादन्यथाऽऽयतिहानिः, निरुज्ज्वलत्वाद्, राजमार्गावलोकिनी स्याद् गम्यैर्यथा दृश्येत तथा, तत्रापि दृश्यमाना नातिविवृता नाति प्रकटा स्यात्, पण्यसधर्मत्वादिति । अतिप्रकटं पण्यमपि न श्लाघनीयं भवति ॥ ७ ॥

यैर्नायकमावर्जयेदन्याभ्यश्चावच्छिन्द्यादात्मनश्चानर्थं प्रतिकुर्यादर्थं च साधयेन्न च गम्यैः परिभूयेत तान्सहायान्कुर्यात् ॥ ८ ॥

यैरिति । आवर्जयेदभिमुखीकुर्याद्, अन्याभ्यश्च स्त्रीभ्योऽवच्छिन्द्यात्संसृष्टमाकर्षयेद्, आत्मनश्चानर्थं राजकुलादन्यस्माद्वोत्पन्नं प्रतिकुर्याद्, अर्थं च प्राप्तं साधयेद्, न च गम्यैः कामुकैः परिभूयेत, याना-श्रित्य तान् सहायान्कुर्याद्यथोक्तकार्यसाधकानित्यर्थः ॥ ८ ॥

ते त्वारक्षकपुरुषा धर्माधिकरणस्था दैवज्ञा विक्रान्ताः शूराः समानविद्याः कलाग्राहिणः पीठमर्दविटविदूषकमालाकारगान्धिकशौण्डिकरजकनापितभिक्षुकास्ते च ते च कार्ययोगात् ॥ ९ ॥

आरक्षकाः=नागरकादयः, धर्माधिकरणस्थाः=प्राड्विवाकादयः, उभयेऽप्यनर्थघातिनोऽर्थसाधकाः, दैवज्ञाः=ज्योतिर्गणकाः, ये शुभाशुभं कथयन्तीति तया संयोगे ते वृद्धिर्भविष्यतीति गम्यं प्रोत्साह्य योजयन्ति, विक्रान्ताः=शरीरनिरपेक्षाः साहसिकाः, ततोऽन्ये शूराः; उभयेऽनर्थं घ्नन्त्यर्थं च साधयन्ति, समानविद्या इति । ते स्निह्यन्तोऽस्यास्त्वर्थं साधयन्ति, कलेति । ये नायिकातः कलां गृह्णन्ति ते तद्विज्ञतां प्रकाशयन्तो गम्यान्योजयन्ति, पीठमर्दादयः स्वकर्मभिरर्थकृतः परभवनप्रवेशाद्गम्यं योजयन्ति, ते च ते च कार्ययोगादिति । कश्चिदेव किञ्चित्कार्यं साधयतीति, तद्वशादन्येऽपि स्युः, सहायाः प्रियहिताभ्यामनुवर्तनीयाः, न त्वभिगम्याः, तदभिगमने स्वार्थमेवैते कुर्युर्न तदर्थम् ॥ ९ ॥

गम्यचिन्तामाह—

केवलार्थास्त्वमी गम्याः स्वतन्त्रः, पूर्वे वयसि वर्तमानः, वित्तवान्, अपरोक्षवृत्तिः, अधिकरणवान्, अकृच्छ्राधिगतवित्तः, संघर्षवान्, सन्ततायः, सुभगमानी, श्लाघनकः, पण्डकश्च, पुंशब्दार्थी, समा-

नस्पर्धी, स्वभावतस्त्यागी, राजनि महामात्रे वा सिद्धः, दैवप्रमाणः, वित्तावमानी, गुरूणां शासनातिगः, सजातानां लक्ष्यभूतः, सवित्तः, एकपुत्रः, लिङ्गी, प्रच्छन्नकामः, शूरः, वैद्यश्चेति ॥ १० ॥

गमनार्हा गम्याः, अर्हे कृत्यप्रत्ययः, ते द्विविधाः–केवलार्थाः केवलः प्रीतिरहितोऽर्थो येभ्य इति, प्रीतियशोऽर्थाश्च रतियशसी अर्थः प्रयोजनं येभ्योऽर्थस्त्वानुषङ्गिकः, स्वतन्त्रो गुरुष्वपरायत्तः, पूर्वे वयसि वर्त्तमानो न वृद्धः, वित्तवान् न दरिद्रः, अपरोक्षेति। अपरोक्षा प्रत्यक्षा न देशान्तरवृत्तिर्जीवनं यस्य, परोक्षवृत्तेस्तु यदा ततः किञ्चिदेष्यति तदा दास्यतीति कदर्थितं दानं स्याद्, अधिकरणवानध्यक्षो योऽर्थाधिकारेऽधिकृतः सोऽर्थदः, अकृच्छ्रेति। येन क्लेशं विनाऽन्वयाधिगतं निधिलाभाद्वा राजप्रसादाद्वाऽवाप्तं धनं सोऽकृच्छ्रेण ददाति, अन्यथा कृच्छ्रप्रदः स्यात्, संघर्षवानिति। स्पर्धावानन्येन गम्येन बहु ददाति, सन्ततायः शौलिको वार्धुषिकश्च, सुभगाभिमानीति। दुर्भगोऽपि यः सुभगमात्मानमभिमन्यते दुर्भगत्वमात्मनोऽप्रकटयितुं नायिकामन्यतो व्यावर्त्तयन् बहु ददाति, श्लाघनिकः स्वश्लाघाकर्तुर्बहुप्रदः, पण्डको नपुंसकः स पुंस्त्वख्यापनार्थं बहु ददाति, पुंशब्दार्थी मां लोकः पुमानित्यभिदध्यादित्यपेक्षी याच्यमानो ददाति, समानस्पर्धीति। यौ कुलविद्यावित्तवयोभिः समानौ तयोरन्यतरं स्पर्धते वेश्या सेयमनेन समानेनाधिका कृता, अहमपि यां काञ्चिदधिकतरां करोमीति, स आधिक्यमिच्छन्नाश्वेवाधिकव्ययेन गम्यः, संघर्षिता चैकस्मिन् विषये द्रष्टव्या, स्वभावतस्त्यागी सोऽवश्यं ददाति दातृस्वभावत्वात्, सिद्धो ग्राह्यवचनः स यदि स्वयं न ददाति राजानममात्यं वाऽभिधाय दापयति ममेयं प्रीतेति, दैवप्रमाणो भाग्यक्षयेण क्षीयते नोपभोगेन संपदिति मन्यमानो बहु ददाति, वित्तावमानीति। कुलसमं द्रव्यमित्यवमन्यमानो ददाति, गुरूणामिति। तदधीनस्य पराधीनत्वादबहुदातृत्वं गुरुवचनमतिक्रम्य यः प्रवर्त्तते सोऽपकार्यमपि कृत्वा ददाति, सजातानामिति। दायादानामेकस्मिन् गृहे वर्त्तमानानां यो लक्ष्यभूतः प्रधानभूतः स दाता नान्यः, एकपुत्र इति। बहु प्रयच्छन्नपि न पितृभ्यां स निवार्यते माऽन्यत्र यासीदिति, लिङ्गी = प्रव्रजितः, प्रच्छन्नकामी प्रकटं न कामयते लोको मा ज्ञासीदिति स कामेन बाध्यमानो बहु ददाति, शूरो यः सहायभावेनोपचरितो वित्तवांश्च स हि नार्थगृध्नुः, वैद्यस्य दातृत्वाभावेऽपि व्याधितायाश्चिकित्साकारित्वाद्दातृत्वमेव ॥१०॥

प्रीतियशोऽर्थास्तु गुणतोऽधिगम्याः ॥ ११ ॥

प्रीतीति । यतो गुणवद्भ्य एव प्रीतिर्यशश्च भवति ॥ ११ ॥

यच्चोक्तमुभयोरपि गुणागुणान्वैशिके वक्ष्याम इति तानाह—तत्र नायकमधिकृत्याह—

महाकुलीनः, विद्वान्, सर्वसमयज्ञः, कविः, आख्यानकुशलः, वाग्मी, प्रगल्भः, विविधशिल्पज्ञः, वृद्धदर्शी, स्थूललक्षः, महोत्साहः, दृढभक्तिः, अनसूयकः, त्यागी, मित्रवत्सलः, घटागोष्ठीप्रेक्षणकसमाजसमस्यक्रीडनशीलः, नीरुजः, अव्यङ्गशरीरः, प्राणवान्, अमद्यपः, वृषः, मैत्रः, स्त्रीणां प्रणेता लालयिता च, न चासां वशगः, स्वतन्त्रवृत्तिः, अनिष्ठुरः, अनीर्ष्यालुः, अनवशङ्की, चेति नायकगुणाः ॥ १२ ॥

महेति । महत् कुलं यस्य तस्यापत्यं, विद्वान्=आन्वीक्षिक्यादिज्ञः, आख्यानकुशलः=कथाकुशलः, वाग्मी=वक्ता, सर्वेति । पाषण्डादिसमयपरिज्ञाता, कविः=संस्कृतादिकाव्यकृत्, प्रगल्भः=प्रतिभावान्, शिल्पं=लेख्यादि, वृद्धदर्शी=विद्यावयोवृद्धानामुपासकः, स्थूललक्षः=महेच्छः, महोत्साह इति । यो महतोत्साहेन युक्तः, महत्त्वं च गुणान्तरयोगाद्, यथोक्तं—'शौर्यममर्षता शीघ्रता दाक्ष्यं चोत्साहगुणा' इति, दृढभक्तिः-न हरिद्राराग इव प्रीतिर्यस्य, अनसूयुः=क्षमावान्, त्यागी=दाता, मित्रवत्सलः, मित्रेष्वत्यन्तप्रीतिमाधत्ते, घटाऽऽदिशीलः, घटाऽऽदि यः शीलयति सः, घटागोष्ठ्यौ व्याख्याते, प्रेक्षणकं=नटादिदर्शनं, समाजः=पानगोष्ठी, समस्यक्रीडा=संभूय क्रीडा, नीरुजः=अरोगप्रकृतिः, अव्यङ्गम्=अहीनम्, प्राणः=बलम्, अमद्यपः=ब्राह्मणः, अर्थाल्लभ्यते, वृषः=व्यवायक्षमः, मैत्रः=करुणावान्, स्त्रीणां प्रणेता प्रणेतृत्वमुपदेशेन तासां समुदाचारेषु स्थापनं, लालनं तासां शरीरस्थितिवैकल्यसंवरणं, न चासामिति । स्त्रीणां वशगो-वश्यः, स्वतन्त्रवृत्तिः, स्वतन्त्रकृत्येषु न परायत्तः, अनीर्ष्यालुः=ईर्ष्यारहितः, अनवशङ्की=निःशङ्कमारम्भवान्, नायकगुणा इति । गुणिद्वारेण गुणाभिधानमत्र प्रकरणायत्तत्वाद्, गम्यगुणा इति वक्तव्ये नायकग्रहणं सामान्यसंज्ञाप्रतिपत्त्यर्थं; ततश्च पूर्वोक्तं गुणागुणान् वैशिके वक्ष्याम इति तद्व्याख्यातं भवति, स एव नायको गुणान्तरयोगात् कन्यापुनर्भूपरदारवेश्याऽपेक्षया यथाक्रमं वरो जारः सिद्धो गम्यश्चेति संज्ञाऽन्तराणि लभते ॥ १२ ॥

रूपयौवनलक्षणमाधुर्ययोगिनी, गुणेष्वनुरक्ता न तथाऽर्थेषु, प्रीतिसंयोगशीला, स्थिरमतिः, एकजातीया, विशेषार्थिनी, नित्यमकदर्यवृत्तिः, गोष्ठीकलाप्रिया, चेति नायिकागुणाः ॥ १३ ॥

रूपेति। रूपं=वर्णसंस्थानं यच्छोभनं, लक्षणं=सौभाग्यादिसूचकम्, माधुर्यं=प्रियवाक्यत्वं, तैर्योगः स यस्यास्तद्योगिनीति, तेषु गुणेषु नायकसंबन्धिष्वनुरक्ता, न तथाऽर्थेषु तदीयेषु, प्रीतिसंयोगशीलेति। प्रीतिग्रहणं बाह्यसंयोगनिवृत्त्यर्थं रतिसंभोगशीलेत्यर्थः, स्थिरमतिः, कर्तव्यमिति निश्चित्यान्यथा न करोति, एकजातीयेति। एकप्रकारा, न मायाविनी, विशेषार्थिनी न यत्र क्व चन वस्तुनि रमते, अकदर्यवृत्तिरिति। आत्मवृत्त्यवरोधेनार्थसंचयः कदर्यवृत्तिः सा न यस्याः, तत्रापि न कदाचिदित्याह—नित्यमिति। गोष्ठीकलाप्रियेति। गोष्ठी या क्रीडामात्रैककार्या, नायिकागुणा इति। अत्रापि पूर्ववद्वेश्याया इति नोक्तम् ॥ १३ ॥

एते द्वयोरप्यसाधारणास्साधारणानाह—

बुद्धिशीलाचारः, आर्जवं, कृतज्ञता, दीर्घदूरदार्शित्वम्, अविसंवादिता, देशकालज्ञता, नागरकता, दैन्यातिहासपैशुन्यपरिवादक्रोधलोभस्तम्भचापलवर्जनं, पूर्वाभिभाषिता, कामशास्त्रे कौशलं, तदङ्गविद्यासु चेति साधारणगुणाः ॥ १४ ॥

बुद्धीति। बुद्धिः प्रज्ञा, शीलं=सुस्वभावता, आचारः=देशकालोचितःसमुदाचारः, आर्जवम्=अवक्रता, कृतज्ञता=पूर्वापकारस्मरणं, दीर्घदूरदर्शित्वम्=आगामिनोऽर्थस्य देशान्तरगतस्य परिज्ञानम्, अविसंवादिता=प्रतिज्ञायान्यथा न करणं, देशकालज्ञता, अस्मिन् देशे काले चेदं प्रयुज्यत इति, नागरकता=नागरकवृत्तानुष्ठानं, दैन्यं=याच्ञा, अतिहासः=नित्य हसनता, पैशुन्यं=परस्परसंभेदनम्, परिवादः=परदोषोदाहरणं, क्रोधः=कोपः, लोभः=तृष्णा, स्तम्भः=मान्येष्वप्रतिपत्तिशीलता, चापलम्=अधैर्यं, तेषां, वर्जनं=त्यागः, तेन गुणा एवोक्ता अदैन्यादयः, पूर्वाभिभाषिता यावदेव परो न संभाषते, कामशास्त्रे कौशलं=कामशास्त्रपरिज्ञानं, तदङ्गविद्यासु च नृत्यादिषु कौशलम्, अत्र न गुणिद्वारेण गुणाभिधानं, साधारणत्वाद्, अन्यतरलिङ्गनिर्देशेन हि गुणाभिधाने साधारणत्वन्न गम्यते ॥ १४ ॥

गुणविपर्यये दोषाः ॥ १५ ॥

गुणविपर्यय इति। साधारणानां विपर्यये, दोषा दौष्कुलेयत्वादयो वैरूप्यादयो दौर्बुद्ध्यादयश्च, तद्योगान्न नायको नापि नायिकोच्यते ॥१५॥

सत्स्वपि गुणेषु दोषान्तरयोगादगम्या इत्यगम्यचिन्तामाह—

**क्षयी, रोगी, कृमिशकृद्, वायसास्यः, प्रियकलत्रः, परुषवाक्, कदर्यः, निर्घृणः, गुरुजनपरित्यक्तः, स्तेनः, दम्भशीलः, मूलकर्मणि प्रसक्तः, मानापमानयोरनपेक्षी, द्वेष्यैरप्यर्थहार्यः, अतिलज्जः, इत्यगम्याः ॥ १६ ॥**

क्षयीति । क्षयः=राजयक्ष्मा, रोगशब्दः सामान्यवाच्यपि लोकप्रसिद्ध्या कुष्ठवाची, द्वयोरपि सांक्रामिकत्वात्, कृमिशकृदिति । पुरीषमक्षिकेति प्रसिद्धा, सा हि यस्मिन्व्रणे पुरीषं मुञ्चति तत्र कृमिर्भवति, तद्वद्यच्छुक्रं तत्संसर्गाद्या हि गर्भमाधत्ते सा स्त्री जरां धत्ते, वायसास्यः=दुर्गन्धमुखः, स वैमुख्यं जनयति, यद्वा-काकः शुच्यशुचौ मुखं निक्षिपति, एवं निर्विचारं स्त्रीत्येव यः कामयते स तासामनभिगमनीयः स्यात्, प्रियकलत्र इति । तस्यान्यत्रानासक्तेः नाप्यर्थदः, परुषवाग्=असह्यवाक्, कदर्यः, य आत्मानं भृत्यांश्च संपीड्यार्थसंचयकरः, निर्घृणः=निर्दयः, उभावप्यदातारावकार्यकरौ च, गुरुजनपरित्यक्तः, दुष्टत्वात् सोऽभिगतो दोषमपि कुर्यात्, स्तेनः=चोरः, तत्संपर्कादर्थापगमः, दम्भशीलः, मायया व्यवहरन् कथमर्थदः, मूलकर्मणि=वशीकरणादौ प्रसक्तः, तेन हि वशीकृतायां नान्यत्र प्रवृत्तिः शरीरवैरूप्यं च, अनपेक्षी यो मानमपरेण क्रियमाणमगुणज्ञतया नापेक्षते; अपमानमपि नीचप्रकृतित्वात् तस्य संपर्काद् भूमिकाऽपि पतति, द्वेष्यैरप्यर्थहार्यः, यो द्वेष्यैरप्यर्थलोभात्संधत्ते स लुब्धः कथं ददाति, अतिलज्जः, यो लोके वेश्यासंपर्केणातिलज्जते स कथं तामभिगच्छेद्दद्याच्च ॥ १६ ॥

यैः कारणैरभिगमनं तत्र चिन्तामाह—

**रागः, भयम्, अर्थः, संघर्षः, वैरनिर्यातनं, जिज्ञासा, पक्षः, खेदः, धर्मः, यशः, अनुकम्पा, सुहृद्वाक्यं, ह्रीः, प्रियसादृश्यं, धन्यता, रागापनयः, साजात्यं, साहवेश्यं, सातत्यम्, आयतिश्च, गमनकारणानि भवन्तीत्याचार्याः ॥ १७ ॥**

राग इति । क्वचित्स्वाभाविक उत्पन्नः, भयं=व्यापादनभयं, यथा रम्भाया रावणाद्, यदि मां न कामयसे व्यापाद्यसे मयेति, अर्थः=भूम्यादिलाभः, संघर्षः=स्पर्धा यथा देवदत्ताया अनङ्गसेनयेति ततो हि समाकृष्य स्पर्धया मूलदेवः कामितः, वैरं निर्यातयन्ती क्वचिदभिगच्छेति, जिज्ञासेति । विदग्धोऽयमिति श्रूयते तत्किं तथैवेति, पक्षः=आश्रयः,

यमाश्रित्य कार्यं साधयति, खेदः=परिश्रमः संप्रयोगो हि जीविका तत्र चाकृतखेदा सहसा क चित्क्व चित्प्रवृत्ता विमर्दं न सहेत, धर्मः अकिञ्चनविद्वद्ब्राह्मणाभिगमनाद्, यशः कस्यां चित्तिथौ कामसत्त्रप्रदानाद्, अनुकम्पा अकामयमानायां त्वयि म्रियेऽहमित्येवंवादिनि दया भवति, सुहृद्वाक्यं मम प्रीतिकरः समायातस्तेन सहाद्य शयितव्यमिति, ह्रीः, यो गुरुस्थानीयोऽभिमतं भाणयति सोऽपि लज्जयाऽभिगम्यते, प्रियसादृश्यं मत्प्रियस्यायं सदृश इत्यनुरागवशात् काम्यते, धन्यतेति । पुण्यवानयमतोऽस्य संयोगात् कीर्त्तनीयाऽहं भविष्यामि, यत एष गुणवान् कुलीनो धनवान्रूपवांश्च, रागापनयः शुक्रधातोरुद्रिक्तस्य कं चिदभिगम्यापनयनं, साजात्यं सजातिरयमिति विप्रतिपन्नायाः कुलयोषितोऽभिगमनकारणमेतत्, साहवेश्यं सहवेशकोऽयमिति, सातत्यं=नित्यसाहचर्यम्, आयतिः=प्रभावः ॥ १७ ॥

अर्थोऽनर्थप्रतीघातः प्रीतिश्चेति वात्स्यायनः ॥ १८ ॥

अत्राह शास्त्रकारः—परिगणनमेतत्प्रदर्शनं वा, तत्र परिगणने चिकित्सा मैत्री शोकापनयः कलाऽऽगम इत्येवमादीनामपि सम्भवात्, प्रदर्शने चार्थोऽनर्थप्रतीघातः प्रीतिरिति तावद्वक्तव्यं सर्वेषामत्रैवान्तर्भावात्, तत्र संघर्षजिज्ञासापक्षखेदधर्मयशःसुहृद्वाक्यायतिकलाऽऽगमा अर्थे, भयं वैरमनुकम्पा शोकापनय इत्यनर्थप्रतीघाते, शेषाः प्रीतौ स्नेह इत्यर्थः, ह्रीरपि प्रीत्यंशमेव स्पृशति ॥ १८ ॥

अर्थं तु प्रीत्या न बाधेतास्य प्राधान्यात् ॥ १९ ॥

अर्थमिति । अर्थप्रीत्योर्यथास्वं विषयेषु युगपत्प्रत्युपस्थिते प्रीतिविषयं त्यक्त्वाऽर्थविषयमधिगच्छेदित्यर्थः, अर्थस्य प्राधान्यात्तत्प्रतिबद्धत्वात्तज्जीविकायाः ॥ १९ ॥

भयादिषु तु गुरुलाघवं परीक्ष्यम् ॥ २० ॥

॥ इति सहायगम्यागम्यगमनकारणचिन्ता ॥

भयादिषु त्वनर्थेषु गुरुलाघवं परीक्ष्यं कोऽत्र गुरुर्यम्प्रति करिष्यामीति, अर्थानर्थप्रतीकारयोस्तु गुरुलाघवमग्रे वक्ष्यति ॥ २० ॥

इति सहायगम्यागम्यगमनकारणचिन्ता
पञ्चाशत्तमं प्रकरणम् ॥

एवं सहायं निरूप्य गम्यमभिमुखीकुर्यादिति गम्योपावर्तनमुच्यते—

उपमन्त्रिताऽपि गम्येन सहसा न प्रतिजानीयात् पुरुषाणां सुलभावमानित्वाद् ॥ २१ ॥

उपेति । स्वयमनुपावर्तितेन नायकेनाभिगन्तुं प्रार्थिता न सहसा प्रतिजानीयात् तत्क्षणमेव नाङ्गीकुर्यादित्यर्थः, सुलभावमानित्वात्, तथा-ह्युक्तं "सुलभामवमन्यते, दुर्लभामभिकाङ्क्षत इति प्रायोवादः," पुनःपुन-रुपमन्त्र्यमाणा तु प्रतिजानीयादित्यर्थोक्तम् ॥ २१ ॥

यदा तु तामुपावर्त्तयेत्तदाऽयं प्रथम उपायः, यत्तेषु प्रणिधानमित्याह—

भावजिज्ञासार्थं च परिचारकमुखान् संवाहकगायनवैहासिकान् गम्ये तद्भक्तान्वा प्रणिदध्यात् तदभावे पीठमर्दादीन् ॥ २२ ॥

भावजिज्ञासाऽर्थं चेति । परिचारकमुखान्=परिचारकरूपान्, वैहा-सिकः=विदूषकः तस्य गम्यस्य, भक्तान्=सेवापरान्, प्रणिदध्याद्= नियुञ्जीत, पीठमर्दादीत्यादिशब्दाद्विटमालाकारगान्धिकशौण्डिकादयः सहायाः ॥ २२ ॥

भावोऽभिप्रायः तस्मिन्ननेकप्रकारेऽपि प्राधान्याच्छौचादिभावेष्वेव जिज्ञासनमित्याह—

तेभ्यो नायकस्य शौचाशौचं रागापरागौ सक्तासक्ततां दाना-दाने च विद्यात् ॥ २३ ॥

तेभ्य इति । नायकस्येति । गम्यसंज्ञकस्य, शुचिसमुदाचाराद् शौचं-भावं तद्विपरीतमशौचं, यतः कश्चित्स्वयमौपरिष्टकं प्रयुङ्क्ते प्रयोज-यति नोभयं वेति, रागः=संयोगेच्छा, तद्विपरीतोऽपरागः, सक्तां-वक्ष्यमाणलक्षणां, तद्विपरीतामसक्ततां, दानं=दातृत्वं, तद्विपरीत-मदानम् ॥ २३ ॥

संभावितेन च सह विटपुरोगां प्रीतिं योजयेत् ॥ २४ ॥

सम्भावितेन चेति । भावाञ् ज्ञात्वा, संयुज्येतैवं प्रयोग इति निश्चित्य, विटपुरोगामिति । विटो हि जीर्णनागरकवृत्तः, तेन पूर्वप्रहितेन प्रीतिं योजयेत् ॥ २४ ॥

योजितायां विधिमाह—

लावककुक्कुटमेषयुद्धशुकशारिकाप्रलापनप्रेक्षणककलाव्यपदे-शेन पीठमर्दो नायकं तस्या उदवसितमानयेत् तां वा तस्य ॥२५॥

लावकेति । लावकादीनां युद्धं, शुकादेः प्रलापनम्=पाठनम्, प्रेक्ष-णकं=नटादिदर्शनं, कला=गीतादिका, तद्व्यपदेशेनानयेद्, उदवसितं= गृहं, तां चेति । नायिकां वा, तस्योदवसितम् ॥ २५ ॥

आयतस्य प्रीतिकौतुकजननं किञ्चिद् द्रव्यजातं स्वयमिदमसाधारणोपभोग्यमिति प्रीतिदायं दद्यात् ॥ २६ ॥

प्रीतिकौतुकजननमिति । यत्प्रीतिं जनयति तस्मै हितत्वात्, कौतुकं चादृष्टपूर्वत्वाद्, द्रव्यजातं, स्वयमिति । अनुरागख्यापनार्थं नान्येन, असाधारणेति । भवत एवेदमुपभोगार्हं नान्यस्येत्युक्त्वा देयम्, प्रीतिदायं यत्पुनर्नादीयते ॥ २६ ॥

यत्र च रमते तया गोष्ठ्यैनमुपचारैश्च रञ्जयेत ॥ २७ ॥

यत्र चेति । काव्यगोष्ठ्यां कलागोष्ठ्यां वा, उपचारैः सरकताम्बूलस्रगादिभिः ॥ २७ ॥

प्रत्ययवच्छेदनार्थं विधिमाह—

गते च सपरिहासप्रलापां सोपायनां परिचारिकामभीक्ष्णं प्रेषयेत्, सपीठमर्दायाश्च कारणापदेशेन स्वयं गमनम् ॥ २८ ॥

इति गम्योपावर्तनम् ।

गते चेति । सपरिहासेति । सक्रीडप्रकृष्टालापा हि प्रीतिं वर्धयति, सोपायनामभिज्ञानार्थं सह कौशलिकया प्रेषयेत्, तत्राप्यभीक्ष्णम् अन्तरा नायिकाऽन्तरप्रवेशो मा भूदिति, सपीठमर्दायाश्चेति । पीठमर्दो हि मन्त्री संयोगस्य घटयिता, कारणापदेशेन स्वयं गमनमिति । सहसा गमने हि हेया स्यात् ॥ २८ ॥

उक्तं च श्लोकैराह—

भवन्ति चात्र श्लोकाः—

ताम्बूलानि स्रजश्चैव संस्कृतं चानुलेपनम् ।
आगतस्याहरेत्प्रीत्या कलागोष्ठीश्च योजयेत् ॥ २९ ॥

ताम्बूलानीति । संस्कृतमिति सर्वत्र योज्यं, कलागोष्ठीश्चेति । चशब्दात्काव्यगोष्ठीश्च ॥ २९ ॥

द्रव्याणि प्रणये दद्यात्कुर्याच्च परिवर्तनम् ।
संप्रयोगस्य चाकूतं निजेनैव प्रयोजयेत् ॥ ३० ॥

द्रव्याणीति । प्रीतिकौतुकजनकानि परिवर्तनमुत्तरीयांशुकानामङ्गुलीयानां, तत्रापि प्रणये सति, अनुत्पन्नप्रणयाया दानं परिवर्तनं च कपटं ज्ञायेत, आकूतम्=अभिप्रायम्, प्रयोजयेत्प्रकाशयेत ॥ ३० ॥

यस्तु कथञ्चिदागत्यागत्य गच्छति यत्र योज्यमानं लाघवं जनयति

तच्च कथं ? योजयेदित्याह—

प्रीतिदायैरुपन्यासैरुपचारैश्च केवलैः ॥

गम्येन सह संसृष्टा रञ्जयेत्तं ततः परम् ॥ ३१ ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे सहायगम्यागम्यगमनकारणचिन्ता गम्योपावर्तनं प्रथमोऽध्यायः ।

प्रीतिदायैरिति । प्रीत्यर्थं यानि दीयन्ते, उपन्यासैः पीठमर्दादिकृतैरत्रैव किं न सुप्यत इति, केवलैः शुद्धैः, ये सम्प्रयोगमेव सूचयन्ति, संसृष्टा सम्प्रयुक्ता, ततः परमिति । अनन्तरप्रकरणानुसन्धानम् ॥ ३१ ॥

इति गम्योपावर्तनमेकपञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां वैशिके षष्ठेऽधिकरणे सहायगम्यागम्यगमनकारणचिन्ता गम्योपावर्तनं प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

उक्तमपि संबन्धं स्पष्टीकुर्वन्नाह--

संयुक्ता नायकेन तद्रञ्जनार्थमेकचारिणीवृत्तमनुतिष्ठेत् ॥ १ ॥

तद्रञ्जनार्थमिति । तद्रञ्जनार्थम् एकचारिणीवृत्तमनुतिष्ठेद्यद्येकचारिणी स्यात्, तथा चोक्तं प्राग्–'वेश्या वाऽप्येकचारिणी' इति, यदा तु नैकचारिणी तदा कान्ताऽनुवृत्तमुच्यते, सम्प्रयुक्तस्य गम्यस्य कान्तत्वात्, तच्च संक्षेपेण विस्तरेण च ॥ १ ॥

तत्र पूर्वमुद्घाटितबुद्धीनामाह—

सञ्जयेन्न तु सजेत् सक्तवच्च विचेष्टेतेति संक्षेपोक्तिः ॥ २ ॥

सञ्जयेदिति । षञ्ज्–सङ्गे, प्रयोजकव्यापारे णिज्, न तु सजेत्, स्वयं सक्ता स्यात्, कथं ? तस्यां पुंसो विश्वासयोग इत्याह—सक्तवच्च विचेष्टेतेति । सक्तमिवात्मानं प्रकाशयेदित्यर्थः, विस्तरोक्तावपि प्रथमं परतन्त्रा स्याद्, व्याधिं चात्मनः प्रकाशयेद् ॥ २ ॥

मा भूत्कार्यहानिरित्याह—

मातरि च क्रूरशीलायामर्थपरायां चायत्ता स्यात्, तदभावे मातृकायाम् ॥ ३ ॥

मातरीति । मातुरयमप्युपदेशो यदपिधानपरयाऽर्थपरया च भवितव्यमिति, तस्यामायत्ता स्यान्न तद्वचनमतिक्रामेदित्यर्थः, मातृकायां कृतकमातरि ॥ ३ ॥

सा तु गम्येन नातिप्रीयेत प्रसह्य च दुहितरमानयेत् ॥ ४ ॥

सा त्विति। सत्या कृतका वा, नातिप्रीयेत नातिस्निह्येद्, अयमुपदेशो यदि प्रीयेत कार्यमेव हन्यादित्यर्थः, अप्रीयमाणाया व्यापारमाह—प्रसह्य च दुहितरमानयेदिति। गम्यमभिभूय कार्यवशाद् गम्यान्तरं नयेदित्यर्थः॥ ४ ॥

तत्र तु नायिकायाः सन्ततमरतिर्निर्वेदो व्रीडा भयं च न त्वेव शासनातिवृत्तिः ॥ ५ ॥

तत्र त्विति। तस्मिन्गमने सति, नायिकायाः कालविशुद्ध्यर्थमाह-सन्ततमिति। अरतिः=असुखं, रम्येऽपि स्याद्, निर्वेदः=निर्विण्णता, व्रीडा, कथं? पुनर्मया द्रष्टव्य इति, भयं किमपि प्रतिविधास्यतीति, न त्वेवेति। काममरत्यादयः स्युर्न पुनर्मातुराज्ञामतिक्रामेदित्यर्थः ॥ ५ ॥

व्याधिं च कृतकमेकमनिमित्तमजुगुप्सितमचक्षुर्ग्राह्यमनित्यं ख्यापयेत् ॥ ६ ॥

व्याधिं चेति। व्याधिं च कृतकं ख्यापयेत्, किं विशिष्टमित्याह-एकमिति। अनन्यं ख्यापयेद्, येन कृतको ज्ञायेत, अनिमित्तम्=आकस्मिकम्, अजुगुप्सितम्=अनिन्दितं, निन्दिते ह्यनभिगमनीया स्याद्, अचक्षुरिति। इन्द्रियोपलक्षणार्थं चक्षुर्ग्रहणं, शिरोऽर्तिमुदरशूलं च, अनित्यमस्थायिनम् ॥ ६ ॥

अस्मिन्ख्यापिते किं फलमित्याह—

सति कारणे तदपदेशं च नायकानभिगमनम् ॥ ७ ॥

सतीति। कारणे कामुकान्तराभिगमने, तदपदेशं=व्याध्यपदेशम् ॥७॥

अनभिगमने च व्याधिपीडाख्यापनार्थं विधिमाह—

निर्माल्यस्य तु नायिका चेटिकां प्रेषयेत्ताम्बूलस्य च ॥ ८ ॥

निर्माल्यस्य त्विति। कृते, इत्यध्याहार्यं, नायिकेत्युक्ते न माता चेटिकां प्रेषयेद्, अनेनापि सुखं स्थास्यामीत्युक्त्वा ताम्बूलस्योपयुक्तस्य वा कृते॥८॥

वृत्तं च प्रत्यक्षे परोक्षे वा कान्तेन, तत्र पूर्वमधिकृत्य रहोगतमाह—

व्यवाये तदुपचारेषु विस्मयः, चतुःषष्ट्यां शिष्यत्वं, तदुपदिष्टानां च योगानामाभीक्ष्ण्येनानुयोगः, तत्सात्म्याद्रहसि वृत्तिः, मनोरथानामाख्यानं, गुह्यानां वैकृतप्रच्छादनं, शयने परावृत्तस्यानुपेक्षणम्, आनुलोम्यं गुह्यस्पर्शने, सुप्तस्य चुम्बनम्,

आलिङ्गनं, च ॥ ९ ॥

व्यवाय इति । व्यवाये = मैथुने, नायकसम्बन्धिनि, तदुपचारेषु मैथुनोपचारेषु च सरकताम्बूलादिषु, विस्मयोऽननुभूतपूर्वं सर्वमेतदिति, चतुःषष्ट्यां पाञ्चालिक्यां शिष्यत्वं, तद्विज्ञाय कर्तव्यं शिक्षय मामिति, योगानामिति । चातुःषष्टिकानां तेनोपदिष्टानामाभीक्ष्ण्येनानुयोगः, पश्चात्तस्मिन्नेव नायके पुनर्योजना, येनायमवगच्छेदस्मत्सुखार्थमेवास्या यत्न इति, तत्साम्स्यादिति । यथा तस्य सुखं तथैकान्ते वर्तेतेत्यर्थः, मनोरथेति । रहसीत्यनुवर्तते, मम मनोरथा एवमासन् कदा त्वया सह दीर्घरजन्यां सपरिहासः सम्प्रयोगः स्यादिति, गुह्यानामिति । नाभिकक्षोरुजघनस्य यद्वैकृतं वैरूप्यं, किञ्चित्तस्य प्रच्छादनं, स्प्रष्टुं द्रष्टुं न दद्यादित्यर्थः, मा भूद्वैराग्यमस्येति, शयने परावृत्तस्यानुपेक्षणं, स्नेहख्यापनार्थमभिमुखं स्वपेदित्यर्थः, गुह्यस्पर्शन आनुलोम्यं, कक्षां वराङ्गं च स्पृशन्तं न वारयेद्, मा भूत्सम्प्रयोगेच्छाविघात इति, सुप्तस्य चुम्बनमालिङ्गनं च, येन स्नेहात्स्वप्तुमपि न ददातीति जानीयात् ॥ ९ ॥

प्रत्यक्ष एव बहिर्गतं वृत्तमाह—

प्रेक्षणमन्यमनस्कस्य राजमार्गे च प्रासादस्थायाः, तत्र विदितायां व्रीडाशाठ्यनाशः, तद् द्वेष्ये द्वेष्यता, तत्प्रिये प्रियता, तद्रम्ये रतिः, तमनु हर्षशोकौ, स्त्रीषु जिज्ञासा, कोपश्चादीर्घः, स्वकृतेष्वपि नखदशनचिह्नेष्वन्याशङ्का ॥ १० ॥

प्रेक्षणमिति । अन्यचित्तं पश्येत्, किमयमुत्कण्ठयोद्वेगाद्वाऽन्यमनस्क इति, राजमार्गे वर्तमानस्य प्रेक्षणं, तत्रापि प्रासादस्थायाः, कर्त्रर्थेयं षष्ठी, तत्रेति । प्रेक्षणे, विदितायां नायकस्य माम् पश्यतीति, व्रीडा = लज्जा स्यात्, सैव शाठ्यनाश इत्युच्यते, तद्धेतुत्वादस्या यदि व्रीडां न दर्शयेत्, कृतकस्नेहोऽस्याः, यन्मामसकृत्पश्यतीति, शाठ्यं सम्भाव्येत, तद्द्वेष्य इति । नायकद्वेष्ये कस्मिंश्चित् प्रियेऽपि द्वेषणं ख्याप्यं, तत्प्रिये द्वेष्येऽपि प्रियता, तथा च तदानुलोम्यं ख्यापितं भवति, तद्रम्य इति । यद्यसावसम्प्रयोगशीलस्तदा रम्ये प्रदेशेऽनया रतिः कार्या, येन तद्गतस्य सम्प्रयोगेच्छा भवति, तमन्विति । तस्य हर्षशोकाभ्यां हर्षशोकौ, स्त्रीषु जिज्ञासा कार्या, किमेवं स्यादित्याह-कोपश्चादीर्घः, यदि तत्र स्नेहईर्ष्या तदा कोपः स्नेहख्यापनार्थं कार्यः, स चादीर्घः, कदाचिद्विरागः स्याद्, अन्याशङ्केति । अन्यथा तव कृतानि न मयेत्याशङ्क्य तत्स्नेहबन्धनमीर्ष्यां ख्यापयितुम् ॥ १० ॥

अनुरागस्यावचनमाकारतस्तु दर्शयेन्मदस्वप्नव्याधिषु तु निर्वचनं, श्लाघ्यानां नायककर्मणां च ॥ ११ ॥

अनुरागस्येति। जातरागाऽस्मि कामयस्व मामिति, न वाच्यं लज्जाऽपरिहारार्थं, कथमनुरागं ख्यापयेदित्याह—आकारतस्तु दर्शयेद्, यथा जानाति कामातुरेति, तत्राप्यपरिज्ञाने मदस्वप्नव्याधिषु निर्वचनं, कृतकमत्ता कृतकसुप्ता च ब्रूयाद्, अगत्या व्याधिमपदिशेद्, असम्भोगेनैव व्याधिताऽस्मीति, श्लाघ्यानामिति। श्लाघनीयानां देवकुलतडागादीनां धर्मयशोऽर्थानां निर्वचनं साधु कृतमिति ॥ ११ ॥

तस्मिन्ब्रुवाणे वाक्यार्थग्रहणं, तदवधार्य प्रशंसा, विषये भाषणं, तद्वाक्यस्य चोत्तरेण योजनं, भक्तिमांश्चेत् ॥ १२ ॥

तस्मिन्निति। नायके किंचिद् वस्तु ब्रुवाणे वाक्यार्थग्रहणम्, इदमनेनोक्तमिति, न त्ववधीरयेदन्यथा मयि जातावज्ञेत्याशङ्केत, तदवधार्य्येति। न केवलमर्थग्रहणं तदुक्तमवधार्य प्रशंसा कर्तव्या, सुभाषितमुक्तं कोऽन्यो नाम जानात्येवमभिधातुमिति, विषये भाषणं, शब्दस्पर्शादिषूक्तिः कर्तव्या, कस्मिन्विषये स्वाभिरुचिरिति ज्ञापनार्थं तथैवानुतिष्ठेद्, वाक्यस्योत्तरेण योजनं बुद्धिवैदग्ध्यख्यापनार्थं, तत्रापि भक्तिमांश्चेद् यदि स्नेहवान् अजातस्नेहस्य वचने प्रत्युतावधीर्यमाणं वैलक्ष्यं स्यात्॥ १२ ॥

कथास्वनुवृत्तिरन्यत्र सपत्न्याः ॥ १३ ॥

कथास्वनुवृत्तिस्तेन कथ्यमानास्वनुवर्तनं तन्मुखावलोकनहुंकाराभ्याम्, अन्यथाऽस्या मय्यवज्ञेति मन्येत, अन्यत्रेति। सपत्न्याः सपत्नीकथायामीर्ष्याकोपख्यापनार्थं नानुवृत्तिः ॥ १३ ॥

निःश्वासे जृम्भिते स्खलिते पतिते वा तस्य चार्तिमाशंसीत ॥ १४ ॥

निःश्वासे=दीर्घनिःश्वसिते, जृम्भिते=क्षणं क्षणं जृम्भिकायां, स्खलिते=अर्थविस्मरणे, पतिते वा समेत्य पिच्छिले भूमिभागे पतने, तस्य नायकस्यार्तिमाशंसीत, मा भूत्पीडेति, तेषामनिष्टसूचकत्वात् ॥ १४ ॥

क्षुतव्याहृतविस्मितेषु जीवेत्युदाहरणम् ॥ १५ ॥

क्षुतं=छिक्का, तदादिषु, जीवेत्युक्तिः स्नेहसूचिका ॥ १५ ॥

दौर्मनस्ये व्याधिदौर्हृदापदेशः ॥ १६ ॥

दौर्मनस्य इति। नायकान्तरसम्बन्ध्यनिष्टश्रवणाद् दौर्मनस्ये जाते, तत्कारणं पृच्छतेऽपि तस्मै न कथयेत्, तद्गतस्नेहप्रच्छादनार्थं, किन्तु व्याधिदौर्हृदापदेशः, व्याधेः शत्रुत्वं व्यपदिशेद्, चिरानुबन्धो मे

व्याधिः शत्रुर्बाधत इति ॥ १६ ॥

गुणतः परस्याकीर्तनं, न निन्दा समानदोषस्य, दत्तस्य धारणम् ॥ १७ ॥

गुणतः परस्याकीर्तनम्, अन्यथाऽन्यासक्तेति जानीयात्, समानदोषस्येति । नायकेन तुल्यदोषस्यान्यस्य न निन्दा, मा भूदेतद्द्वारेण मां जुगुप्सत इत्यस्याशङ्का, दत्तस्य तेन दत्तस्य खर्परखण्डकस्यापि ग्रहणम् ॥ १७ ॥

वृथाऽपराधे तद्व्यसने वाऽलङ्कारस्याग्रहणमभोजनं च ॥ १८ ॥

वृथाऽपराधे, यावदेव जानात्यनपराद्धमिति, तावदेव प्रतिविधानार्थं स्वेदाभ्यङ्गोपवासादिभिः शरीरपीडा दर्शयितव्या, तद्व्यसने नायकस्य पुत्रभ्रात्रादिनाशे, व्याधौ वा ज्वरादावुत्पन्नेऽलंकाराग्रहणमिति, मण्डनप्रतिषेधः, भोजनाभावश्च ॥ १८ ॥

तद्युक्ताश्च विलापाः, तेन सह देशमोक्षं रोचयेद्, राजनि निष्क्रयं च ॥ १९ ॥

तद्युक्ताश्चेति । नायकेन व्याधिव्यसनाभ्यां च युक्ताः कथमपापस्य पतितमेतद् इति विलापाः कार्याः, तथा च त्वद्दुःखेनाहं दुःखितेति सूचितं भवति, तेनेति । नायकेन सह देशमोक्षः स्वदेशत्यागस्तमेव रोचयेद्, माता मे विषमशीला; अपलाप्य मां देशान्तरं नयेः येन स्वातन्त्र्यात्तवानुवृत्तिं विधास्य इति, राजनि निष्क्रयं च, यदि राजप्रतिबद्धा तदानीं राज्ञः सकाशान्मां निष्क्रीणीहीति रोचयेद्, अन्यथा पलायितां मामानाययेत् ॥ १९ ॥

सामर्थ्यमायुषस्तदवाप्तौ तस्यार्थाधिगमेऽभिप्रेतसिद्धौ शरीरोपचये वा पूर्वसम्भाषित इष्टदेवतोपहारः ॥ २० ॥

तदवाप्ताविति । यत्प्रायशो न घटते, तस्यावाप्तौ सत्यां समर्थं ममायुः येन त्वं घटितः, अन्यथा नियतं विनष्टाऽस्मीति ब्रूयाद्, अर्थाधिगम इति । अचिन्तितस्यार्थस्य लाभेऽभिप्रेतसिद्धावीप्सितार्थप्राप्तौ शरीरोपचये वा व्याध्याद्यपगमात्, पूर्वेति । न तदानीमेव संभाषेत, अर्थलाभादिनिमित्तमाशापूरिकाया देव्या मयोपयाचितकं कृतं तेन च तव संपन्ना मनोरथाः सांप्रतं तस्यै बलिरुपहर्तव्य इति ॥ २० ॥

नित्यमलङ्कारयोगः, परिमितोऽभ्यवहारः ॥ २१ ॥

नित्यमिति । यत्तु 'नित्यमलंकारयोगिनी स्याद्, इत्युक्तं तदुपावर्तन-

काले द्रष्टव्यं, परिमित इति। बहुभक्षणे प्रायशो वेश्यानां दोषवत्त्वात्, तत्रापि स्निग्धं, न रूक्षं, ज्वरकारित्वाद्रूक्षस्य ॥ २१ ॥

गीते च नामगोत्रयोर्ग्रहणं, ग्लान्यामुरसि ललाटे च करं कुर्वीत ॥ २२ ॥

गीते चेति। गीते प्रस्तुते, विष्णुमित्रो वात्सगोत्र इति प्रस्तुत्य गातव्यमित्यर्थः, ग्लान्यामिति। करं प्रकुर्वीत, नायकसंबन्धिनं स्वहस्तेन गृहीत्वा स्थापयेदित्यर्थः ॥ २२ ॥

तत्सुखमुपलभ्य निद्रालाभे, उत्सङ्गे चास्योपवेशनं स्वपनं च, गमनं वियोगे ॥ २३ ॥

तत्सुखमिति। न्यस्तहस्तस्पर्शसुखम्, उपलभ्य = अनुभूय, निद्रालाभः, यथा मत्करस्पर्शान्निद्रासुखं लब्धवतीति मन्यते, उत्सङ्गेति। यदि न शयनीयं तर्हि तदुत्सङ्गे ग्लानावनया स्वकायवयो बुद्ध्वोपवेशनं स्वपनं च, गमनं वियोग इति। सुहृद्गृहं देवतां वा द्रष्टुं गच्छति, तदा मा भूत् क्षणमप्यनेन वियोग इति, तन्निमित्तं स्वयमनुगच्छेत् ॥ २३ ॥

तस्मात्पुत्रार्थिनी स्यादायुषो नाधिक्यमिच्छेत् ॥ २३ ॥

तस्मात्पुत्रार्थिनीति। ऋतुमत्यहमन्यत्र त्वया न शयितव्यमिति, नाधिक्यमिति। एतस्मान्मम मृतिः प्राग्भवति चेद्भद्रमिति ॥ २४ ॥

तस्याविज्ञातमर्थं रहसि न ब्रूयाद् ॥ २५ ॥

तस्येति। नायकस्य, अविज्ञातमर्थं रहसि न मन्त्रयेत केन चित्सह, मा भूदस्याशङ्काऽस्मद्गतं किमपि मन्त्रयत इति ॥ २५ ॥

व्रतमुपवासं चास्य निर्वर्तयेद्, मयि दोष इत्यशक्ये स्वयमपि तद्रूपा स्यात् ॥ २६ ॥

मयि दोषमिति। व्रतोपवासयोर्भङ्गे कामं मयि दोषोऽस्तु, न त्वयाऽनुष्ठेयं शरीरं तव न क्षमत इति, अशक्ये निर्वर्तयितुं, स्वयमपि तद्रूपा गृहीतव्रता स्यात् ॥ २६ ॥

विवादे तेनाप्यशक्यमित्यर्थनिर्देशः ॥ २७ ॥

विवाद इति। कस्मिंश्चिद्वस्तुनि केन चिद्विप्रतिपत्तौ, तेनाप्यशक्यमिति निर्देशः, नायकेनाप्येतज्ज्ञातुमशक्यं किमु त्वया, यदि शक्तश्चेत्स एवेति कथयेदित्यर्थः ॥ २७ ॥

तदीयमात्मीयं वा स्वमाविशेषेण पश्येत् ॥ २८ ॥

स्वमिति द्रव्यं, नायकसंबन्धि, आत्मीयं वा स्थापनपालनाभ्यामविशेषेण पश्येत् ॥ २८ ॥

तेन विना गोष्ठ्यादीनामगमनमिति ॥ २९ ॥

तेनेति । नायकेन विना गोष्ठ्यादीनामगमनं, यदि गमनं तेनैव, तत्र गोष्ठी सखीभिस्सह, आदिशब्दाद् घटोद्यानादयः ॥ २९ ॥

निर्माल्यधारणे श्लाघोच्छिष्टभोजने च ॥ ३० ॥

निर्माल्येति । स्वकीयं माल्यादि मम देयमिति, मदीयं वा स्पृष्ट्वा परिधार्य्यमिति, निमन्त्रितो न मां नयसि भुक्तशेषमवश्यम् प्रेषयितव्यमिति ॥ ३० ॥

कुलशीलशिल्पजातिविद्यावर्णवित्तदेशमित्रगुणवयोमाधुर्यपूजा ॥ ३१ ॥

कुलशीलेति । उदितोदितं कुलमस्य नानुदितानुदितम् अनुदितोदितं वेति, शोभनं शीलं न विषममिति, प्रकृष्टमालेख्यादि शिल्पं नाप्रकृष्टमिति, विशुद्धाऽस्य जातिर्न संकीर्णेति, निर्मलाऽस्यान्वीक्षिक्यादिविद्या न दुर्गृहीतेति, कनकपिञ्जरोऽस्यवर्णो न पाण्डुरिति, न्यायेनोपार्जितं वित्तं नान्यायेनेति, पूज्योऽस्य देशो नापूज्य इति, गुणवन्त्यस्य मित्राणि न दोषवन्ति, शोभना अस्य गुणा न त्वशोभनाः, प्रथमं वयो न तृतीयमिति, मधुरं वचो नामधुरं चेति, पूजा = स्तुतिः कर्तव्या ॥ ३१ ॥

गीतादिषु चोदनमभिज्ञस्य ॥ ३२ ॥

अभिज्ञस्य तद्विद्याज्ञस्य गीतादौ प्रेरणम्, अनभिज्ञश्चोद्यमानो मामुपहसतीत्याशङ्केत, अभिज्ञस्तु मद्विज्ञानं श्लाघत इति मन्येत ॥ ३२ ॥

भयशीतोष्णवर्षाण्यनपेक्ष्य तदभिगमनम् ॥ ३३ ॥

भयेति । रात्रावन्धकारेऽपि भयं, हेमन्ते शीतं, ग्रीष्म उष्णं, वर्षासु वर्षमनपेक्ष्य तदभिगमनम्, इदमासक्तिख्यापनार्थम् ॥ ३३ ॥

स एव च मे स्यादित्यौर्ध्वदेहिकेषु वचनम् ॥ ३४ ॥

और्ध्वदेहिकेष्विति । वर्तमानाद् देहात् परलोके यो देहस्स ऊर्ध्वदेहः तत्प्रयोजनकेषु दानादिषु, स एव मे स्यादिति, अनेन पुण्येन जन्मान्तरेऽपि स एव मे वल्लभो भूयादिति वचनमुदाहर्त्तव्यम् ॥ ३४ ॥

तदिष्टरसभावलीलाऽनुवर्तनम् ॥ ३५ ॥

तदिष्टेति । नायकस्य शृङ्गारादिषु य इष्टो रसो भावः, स्थायिसंचारिसात्त्विकेषु, लीलाचेष्टितानि तेषामनुवर्त्तनम् ॥ ३५ ॥

मूलकर्माभिशङ्का ॥ ३६ ॥

मूलेति। नियतं मयि वशीकरणमूलिका त्वया प्रयुक्ता, येन तव विधेयाऽस्मीत्याशङ्का कार्या, नैवमहं क्व चिदेवं प्रवृत्तेति ज्ञापनार्थम्॥३६॥

तदभिगमने च जनन्या सह नित्यो विवादः ॥ ३७ ॥

तदभिगमन इति। नायकमनुगच्छन्तीं किं मां धारयसीति, मात्रा सह नित्यं कृतककलहोऽनुरागप्रकटनार्थः ॥ ३७ ॥

बलात्कारेण च यद्यन्यत्र तया नीयते तदा विषमनशनं शस्त्रं रज्जुं वा कामयेत ॥ ३८ ॥

बलात्कारेण चेति। हठात्, तया जनन्या, अन्यत्र=गस्ये, कार्यापेक्षया नीयेत मात्रा यदा तदा तत्समक्षं पूर्वोक्ता अरत्यादयः सम्भवन्त्येव, किं त्वेतदधिकं विषमिति। विषं भक्षयामीति, अशनं न भक्षयामीति, शस्त्रेण कुक्षिमुत्पाटयामीति, रज्जुमुद्बध्यात्मानं व्यापादयामीति, आपातमृत्युहेतं कामयेत वाचैव न तु क्रियया ॥ ३८ ॥

प्रत्यायनं च प्रणिधिभिर्नायकस्य ॥ ३९ ॥

प्रत्यायनं च प्रणिधिभिरिति। मातुरेवास्या दोषो यदन्यत्र गमनं न त्वस्या अनभीष्टत्वादिति चारैः परिबोधनमिति ॥ ३९ ॥

स्वयं वाऽऽत्मनो वृत्तिगर्हणम् ॥ ४० ॥

स्वयं वेति। कुत्सिता वेश्यानां जीविका, यत्स्निग्धं सन्त्यज्यार्थतृष्णया मातरोऽन्येन योजयन्तीति ॥ ४० ॥

न त्वेवार्थेषु विवादः ॥ ४१ ॥

न त्वेवेति। कामं तदभिगमने विवादः स्याद्, नायकेन तु यद्येवं तत्साधयन्त्या जनन्या न विवादस्तदर्थत्वात्प्रयासस्य ॥ ४१ ॥

मात्रा विना किं चिन्न चेष्टेत ॥ ४२ ॥

मात्रा विना न किं चिच्चेष्टेतेति। अन्ततो भोक्तुमपि यदाऽऽह माता तदैव कुर्यादन्यथा न कुर्यात्, कार्येषु सैव व्यापारयितव्येत्यर्थः ॥ ४२ ॥

प्रवासे शीघ्रागमनाय शापदानम् ॥ ४३ ॥

प्रवास इति। नायकस्य कार्यवशाद् देशान्तरगमने शापदानं शपथदानं, मज्जीवितेन शापितोऽसि यदि शीघ्रं नागच्छेरिति ॥ ४३ ॥

परोक्षे वृत्तमाह—

प्रोषिते मृजानियमश्चालङ्कारस्य प्रतिषेधः मङ्गलं त्वपेक्ष्यम्, एकं शङ्खवलयं वा धारयेत् ॥ ४४ ॥

प्रोषित इति। मृजानियमः=शरीरासंस्कृतिः, परोक्षे विफलमिति

चेन्न, तदीयजनसमक्षे सफलत्वात्; प्रवासचर्यायामुक्तमपि चैतत्प्रायशः-कुलयोषितस्तद्, इदं तु वेश्याया एवेति; अलंकारस्य, प्रतिषेधः=अधारणम्, मङ्गलं शङ्खवलयादि त्वपेक्ष्यम्, प्रोषितस्य मङ्गलापेक्षया तावन्मात्रं धार्यमित्यर्थः ॥ ४४ ॥

स्मरणमतीतानां, गमनमीक्षणिकोपश्रुतीनां, नक्षत्रचन्द्रसूर्यताराभ्यः स्पृहणम् ॥ ४५ ॥

स्मरणमतीतानां नायकेन सहोपभुक्तानाम्, ईक्षणिकाः=विप्रश्निकाः, तासां गमनं गृहे इत्यर्थाद्, उपश्रुतिर्निशीथे शुभाशुभपरिज्ञानार्थं प्रथमवाक्यग्रहणं तेन तस्याः कृते रथ्याचत्वरेषु गमनमिति, नक्षत्रादिभिः-स्पृहणमिति, पुण्यवन्त एते यन्नायकेन दृश्यन्ते, अहमपुण्या यन्मांनेक्षत इति ॥ ४५ ॥

इष्टस्वप्नदर्शने तत्संगमो ममास्त्विति वचनम् ॥ ४६ ॥

इष्टस्वप्नेति । सद्भूतं शुभं स्वप्नं दृष्ट्वा; प्रत्यूषे तज्जनसमक्षं प्रकाश्य; आस्तां तावदन्यत्तत्समागम एव ममास्त्विति वचनमुदाहर्तव्यम्, अदृष्ट्वाऽपि कृतकमिष्टं स्वप्नं प्रकाशयेद्, यदि देशान्तरस्थस्य नायकस्याभिप्रेतसिद्धिश्चारैरुपलब्धा स्यात् ॥ ४६ ॥

उद्वेगोऽनिष्टे, शान्तिकर्म च ॥ ४७ ॥

उद्वेगोऽनिष्ट इति । अशुभसूचके स्वप्नदर्शने सत्युद्वेगः, तस्य किमप्यनिष्टमस्तीति, शान्तिकर्म ब्राह्मणानाहूय कार्यं, कृतके चानिष्टे विधिरयमेव यद्युपलब्धमनिष्टं किञ्चित् ॥ ४७ ॥

प्रत्यागते कामपूजा ॥ ४८ ॥

प्रत्यागत इति । प्रतीपमागते नायके, प्रत्यक्षे वृत्तमाह–कामेति । त्वत्प्रसादादागत इति, कामदेवपूजनम् ॥ ४८ ॥

देवतोपहाराणां करणम् ॥ ४९ ॥

देवतोपहाराणामिति । तज्जनसमक्षं प्रतिपन्नानां, करणं=निष्पादनम् ॥ ४९ ॥

सखीभिः पूर्णपात्रस्याहरणम् ॥ ५० ॥

पूर्णपात्रस्येति । दिष्टिवृद्ध्या स्निग्धजनेन यदुत्तरीयमाच्छिद्य गृह्यते, तत्पूर्णपात्रं, तस्य सखीभिराहरणम् ॥ ५० ॥

वायसपूजा च ॥ ५१ ॥

वायसेति । यन्मया प्रतिज्ञातं, संक्रामवायस ! वल्लभे समागते पिण्डं ते दास्यामीति, तददिं प्रतिज्ञातं गृहाणेति ॥ ५१ ॥

प्रथमसमागमानन्तरं चैतदेव वायसपूजावर्जम् ॥ ५२ ॥

नायकेन सह यः प्रथमः समागमस्तदनन्तरमेतत्कामपूजाऽऽदिकमनुष्ठेयं सम्भवाद्, वायसपूजावर्जं तस्या असम्भवात् ॥ ५२ ॥

प्रत्यक्षे परोक्षे च वृत्तमाह--

सक्तस्य चानुमरणं ब्रूयात् ॥ ५३ ॥

सक्तस्य चेति । अनुमरणं ब्रूयात्, त्वयाते न मया जीवितव्यमिति, सक्तो ह्येवं सम्भावयति नान्यः ॥ ५३ ॥

कः पुनः सक्त इत्याह—

निसृष्टभावः, समानवृत्तिः, प्रयोजनकारी, निराशङ्कः, निरपेक्षोऽर्थेषु, इति सक्तलक्षणानि ॥ ५४ ॥

निसृष्टभाव इति । सर्वात्मना विश्वस्तः, समानवृत्तिस्तावत्प्रवृत्तौ निवृत्तौ च, प्रयोजनकारी नायिकाया यत्कार्यं तदुदीरितमात्रं यः कर्तुं शक्नोति, निराशङ्कः न कुतश्चिदाशङ्कते तस्यां प्रवर्तमानः, निरपेक्षोऽर्थेष्वात्मीयेषु तया गृह्यमाणेष्वपि ॥ ५४ ॥

तदेतन्निदर्शनार्थं दत्तकशासनादुक्तमनुक्तं च लोकतः शीलयेत्पुरुषप्रकृतितश्च ॥ ५५ ॥

तदिति । उक्तं वृत्तं निदर्शनार्थं =प्रदर्शनार्थं, दत्तकशासनादिति । दत्तकशास्त्रं दृष्ट्वा, लोकत इति । पराराधनकुशलाद्, शीलयेद् = आगमयेत् ॥ ५५ ॥

गम्यस्याप्यनुवर्तमानस्य वेश्यास्वरूपप्रतिपत्त्यर्थमाह—

भवतश्चात्र श्लोकौ—

सूक्ष्मत्वादतिलोभाच्च प्रकृत्याऽज्ञानतस्तथा ।
कामलक्ष्म तु दुर्ज्ञानं स्त्रीणां तद्भावितैरपि ॥ ५६ ॥

सूक्ष्मत्वादिति । स्त्रीणामिति । वेश्याशब्दवाच्यानां, य इच्छालक्षणः कामस्तस्य लक्ष्म स्वरूपं दुर्ज्ञानं, किमिदं स्वाभाविकं वा कृत्रिममिति दुःखेन ज्ञायते, कथमित्याह—सूक्ष्मत्वादिति । चेतोधर्मत्वेनातीन्द्रियत्वात्, क्रियया सुज्ञानमिति चेदाह—अतिलोभादिति । लुब्धा हि स्वाभाविकमिव रूपयन्ति, प्रकृत्याऽज्ञानत इति । कामपरासु हि विश्वसन्ति पुमांसः, ततश्च तेषां स्वभावत एव रागाचरणसंभवादज्ञानमेव प्रादुर्भवति न ज्ञानं, तद्भावितैरपि, लक्ष्मपरिज्ञानाभियुक्तैरपि दुर्ज्ञेयं, किमिदं स्वाभाविकं कृत्रिमं वेति ॥ ५६ ॥

तदेवाकृतकं कृतकं च कामलक्ष्म दर्शयन्नाह--

कामयन्ते विरज्यन्ते रञ्जयन्ति त्यजन्ति च ।
कर्षयन्त्योऽपि सर्वार्थाञ्ज्ञायन्ते नैव योषितः ॥ ५७ ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे
कान्तानुवृत्तं द्वितीयोऽध्यायः ।

कामयन्त इति । अकृतकं कामयन्ते पुरुषं, तदपि न स्थिरमित्याह—विरज्यन्त इति । कृतकं केलिवशाद्रञ्जयन्ति, तदपि न स्थिरमित्याह—त्यजन्तीति, किमर्थमित्याह—कर्षयन्त्योऽपीति । सर्वार्थान् गृह्णन्त्योऽपि त्यजन्तीत्यर्थः, अलक्तकवन्निष्पीडितसारत्वाज्ज्ञायन्ते नैव किंरूपा इति, योषितो वेश्या इत्यर्थः, तस्मात्तास्वतिसक्तिं न कुर्यात्, केवलं यावदर्थं प्रतिपद्येरन्नित्युपदेशः ॥ ५७ ॥

इति कान्तानुवृत्तं द्विपञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां वैशिके षष्ठेऽधिकरणे कान्तानुवृत्तं द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः ।

एवमनुवर्तितात्कान्ताद्वित्तमाददीत, तच्च नानुपायेन साधयेदित्युक्तम्, इदानीमर्थागमोपाया उच्यन्ते, तच्चादानं द्विविधं—स्वाभाविकमितरच्च, यदाह—

सक्ताद्वित्तादानं स्वाभाविकमुपायतश्च ॥ १ ॥

सक्तादिति । उक्तलक्षणात्, स्वाभाविकं न यत्नमपेक्षते, सक्तस्यार्थेषु निरपेक्षत्वाद्, उपायतश्च यदसक्ताद्भवति तत्प्रायत्निकम् ॥ १ ॥

तत्र स्वाभाविकं संकल्पितं संकल्पसमधिकं वा लभमाना नोपायान्प्रयुञ्जीतेत्याचार्याः ॥ २ ॥

तत्र स्वाभाविकं वित्तं संकल्पितम्, एतावत्त्वया देयमिति संकल्पितात्समधिकं वा लभमाना नोपायान्प्रयुञ्जीत, सुलभत्वात्, तेनासंकल्पिते च प्रयोगः ॥ २ ॥

विदितमप्युपायैः परिष्कृतं द्विगुणं दास्यतीति वात्स्यायनः ॥३॥

विदितमपीति । स्वाभाविकत्वेन समधिकत्वेन च, परिच्छिन्नमप्युपायैः परिष्कृतमुपबृंहितं द्विगुणं दास्यतीति, तत्र प्रयोगो युक्तः ॥ ३ ॥

यैरुपायैरादीयमानेऽप्यर्थे नार्थपरता ज्ञायते तानुपायानाह—

अलंकारभक्ष्यभोज्यपेयमाल्यवस्त्रगन्धद्रव्यादि व्यवहारिषु कालिकमुद्धार्यमर्थप्रतिनयनेन तत्समक्षम् ॥ ४ ॥

अलंकारेति। भक्ष्यं = लड्डुकादि, भोज्यम् = अन्नादि, कृतमकृतं वा, पेयं = सुरादि, वस्त्रं, चतुर्विधं-त्वक्फलकृमिरोमजं, गन्धः = कुङ्कुमादिः, माल्यं = ग्रथितकुसुमादि, आदिशब्दात्ताम्बूलपूगफलपशुभाण्डोपस्करादि, तदुद्धार्यमिति संबन्धः, व्यवहारिष्विति। विक्रेतृषु व्यवस्थितं, कालिकमिति। कालेन देयम्, उद्धार्यमादातव्यमित्यर्थः, अर्थप्रतिनयनेनेति। मूल्यप्रतिदानेन न तु द्रव्यस्यैव प्रतिनयनेन तत्समक्षं यतो दृष्ट्वा स्वयमेव मूल्यं दास्यति ॥ ४ ॥

तद्वित्तप्रशंसा ॥ ५ ॥

तद्वित्तप्रशंसा, तत्समक्षमित्येव, रोचयते मदीयमिति तत्प्रशंसत इति ददाति ॥ ५ ॥

व्रतवृक्षारामदेवकुलतडागोद्यानोत्सवप्रीतिदायव्यपदेशः ॥ ६ ॥

व्रतेति। आगाम्यष्टम्यां मम व्रतं, तत्रानेन प्रयोजनमिति, दर्शे मया वृक्षो रोपितस्तस्य प्रतिष्ठेति, आम्राणां मधूकानां मयाऽऽरामः कार्यः, कृतस्य वा कर्णवेधादिकं कार्यमिति, देवकुलमुत्थापितमुत्थापितस्य वा प्रतिष्ठेति, तडागं पुष्करिण्यादिकं खानितस्य वा प्रतिष्ठेति, उत्सवः परश्वो भविता तत्रानेन प्रयोजनमिति, स्निग्धोऽयमागतस्तस्य प्रीत्याऽवश्यं किंचिद्देयमिति तद्व्यपदेशः ॥ ६ ॥

तदभिगमननिमित्तो रक्षिभिश्चौरैर्वाऽलङ्कारपरिमोषः ॥ ७ ॥

तदभिगमनेति। नायकाभिगमनं निमित्तं यस्य, रक्षिभिर्दाण्डपाशिकैः सहायैः कृतसंवित्कैश्चोरैर्वा कृतसंवित्कैरलंकारपरिमोषः कार्यः, येनेयमस्मन्मूलमागच्छन्ती मुषितेति ज्ञात्वाऽन्यमलंकारं प्रयच्छति ॥ ७ ॥

दाहात्कुड्यच्छेदात्प्रमादाद्भवने चार्थनाशः ॥ ८ ॥

दाहादिति। प्रमादादुत्थितेऽग्नौ च दग्धमिति, नाशः प्रकाश्यः न तु स्वयमादीप्योऽनेकप्राण्युपघातदोषात्, कुड्यच्छेदादिति। चोरैः संधिं खात्वाऽपहृतमिति नाशः, चोरव्यञ्जनैर्वा कुड्यच्छेदान्नाशः, प्रमादादिति। मम मातुर्वा प्रमादाद् गृह एव द्रव्यनाशः ॥ ८ ॥

तथा याचितालंकाराणां नायकालंकाराणां च तदभिगमनार्थस्य व्ययस्य प्रणिधिभिर्निवेदनम् ॥ ९ ॥

तथेति । यथा स्वद्रव्यस्य दाहादिना नाशस्तथा याचितालंकाराणां-कार्यवशादन्यतो मार्गितानां, नायकालङ्काराणां तेन स्थापितानां, दाहादिना नाशे प्रकाशितेऽवश्यं प्रयच्छति, स्वकीयं च न मृगयते, प्रणिधिभिरिति । परिचारकमुखा ये नायकेन प्रणिहितास्तैर्व्ययस्य निवेदनं,-नायकाग्रतस्त्वामभिगन्तुमस्याः सरकताम्बूलादिभिरियान् व्यय उत्थित इति ॥ ९ ॥

तदर्थमृणग्रहणं, जनन्या सह तदुद्भवस्य व्ययस्य विवादः ॥१०॥

तदर्थमिति । नायकनिमित्तव्ययार्थम्, ऋणग्रहणं, तत्समक्षमित्यर्थाद्, जनन्येति । ऋणं किमिति गृह्णासि कथं त्वया शोधयितव्यम् ? इत्यभिदधत्या मात्रा सह, तदुद्भवस्य नायकसंबन्धिनः कृते नात्मीयस्य, विवादः कर्तव्यः किं तवाहमेवात्मानमपि विक्रीय शोधयिष्यामीति, तेन तथाविधं दृष्ट्वाऽवश्यं ददातीत्यर्थः ॥ १० ॥

सुहृत्कार्येष्वनभिगमनमनभिहारहेतोः ॥ ११ ॥

सुहृत्कार्येष्विति । नायकमित्त्रोत्सवादिष्वनभिगमनं कार्यमाहूयमानयाऽपि नायकेन शब्द्यमानयाऽपि, कारणमाह—अनभिहारहेतोरिति । अभिहारः = उपायनं, तन्मम नास्तीति ॥ ११ ॥

तैश्च पूर्वमाहृता गुरवोऽभिहाराः पूर्वमुपनीताः पूर्वं श्राविताः-स्युः ॥ १२ ॥

तैश्च पूर्वमाहृता इति । सुहृद्भिरस्माकमप्युत्सवे महान्तोऽभिहाराः-पूर्वमुपनीता इति नायकस्य पूर्वं श्राविताः स्युः, यावदेव सुहृत्कार्यं न संभवति, पूर्वं याचितं हि कार्यकाले प्रयच्छति, यदि न दद्यादवश्यमेव तदानीमनभिगमनम् ॥ १२ ॥

उचितानां क्रियाणां विच्छित्तिः ॥ १३ ॥

उचितानामिति । प्रत्यहं शरीरस्थित्यर्थं क्रियमाणानां, विच्छेदः-कार्यः, येनायमिदानीं शरीरस्थितिरप्यस्या न संभवतीति ॥ १३ ॥

नायकार्थं च शिल्पिषु कार्यम् ॥ १४ ॥

नायकार्थं चेति । नायकादर्थो यस्मिन् कार्ये तत् कार्यं, शिल्पिषु निर्देश्यमिति शेषः, अयमुत्कृष्टः शिल्पी कारयेयं बहु मृगयते, तच्च मम नास्ति यदि त्वं प्रयच्छसि नो चेद्यदा भविष्यति तदा कारयिष्यामीति ॥ १४ ॥

वैद्यमहामात्रयोरुपकारक्रिया कार्यहेतोः ॥ १५ ॥

उपकारक्रिया = उपकारकरणं, कार्यहेतोरिति । इदं तत्कार्यं यदुप-

कृतो वैद्यो भेषजापदेशेन नायकेन दापयति, महामात्रश्चोपकृतो हठाद्दातुकामेनापि ॥ १५ ॥

मित्राणां चोपकारिणां व्यसनेष्वभ्युपपत्तिः ॥ १६ ॥

मित्राणामिति । नायकसम्बन्धिनामुपकर्तुं शीलं येषां नान्येषां,- व्यसनेषु दैवमानुषेषु, अभ्युपपत्तिः = साहाय्यं, तानि हि व्यसनेष्वभ्युपपन्नानि नायकमभिधायोपकुर्वन्ति ॥ १६ ॥

गृहकर्म, सख्याः पुत्रस्योत्सञ्जनं, दोहदं, व्याधिः, मित्रस्य दुःखापनयनमिति ॥ १७ ॥

गृहकर्म=छादनवेष्टनादि कारयितव्यं, सख्याः स्वस्याः पुत्रस्योत्सञ्जनं यस्योत्सवताप्रतिपत्तिः, क्रियाकालोपलक्षणं चैतद्, अन्नप्राशनं चूडाकरणादि वा करणीयं, दोहदः = अभिलाषः, अस्मत्सख्याः, व्याधिर्वाऽऽकस्मिकः प्रतिकर्तव्यः, मित्रस्य च युष्मदीयस्य, पुत्रादिमरणान्ममेह दुःखमुत्पन्नं तस्य दर्शनादपनेतव्यमित्येवं गृहकर्मादि व्यपदेश्यमिति शेषः ॥१७॥

अलङ्कारैकदेशविक्रयो नायकस्यार्थे ॥ १८ ॥

अलङ्कारैकदेशविक्रय इति । स्वस्यालङ्कारस्यैकदेशमाकृष्य तत्समक्षं विक्रयो येनायं मदर्थं विक्रीणातीति प्रयच्छति ॥ १८ ॥

तया शीलितस्य चालंकारस्य भाण्डोपस्करस्य वा वणिजो- विक्रयार्थं दर्शनम् ॥ १९ ॥

तया नायिकया, शीलितस्य रुचितालङ्कारस्य, भाण्डोपस्करस्य वा शीलितस्य, वणिजः कृतसङ्केतस्य,नायकसमक्षं दर्शनं कर्तव्यं येनायं नास्त्यस्याः किमपि यच्छीलितमपि विक्रेतुमारब्धमिति प्रयच्छति ॥१९॥

'भाण्डसंप्लवे विशिष्टग्रहणम्'इति, दत्तकसूत्रम्, अस्य स्पष्टार्थं सूत्रान्तरमाह—

प्रतिगणिकानां च सदृशस्य भाण्डस्य व्यतिकरे प्रतिविशिष्टस्य ग्रहणम् ॥ २० ॥

प्रतिगणिकानामिति । भाण्डस्य सादृश्यादन्येन भाण्डेन व्यतिकरे परिवर्ते सति, मा भूत्पुनरेवमिति प्रतिशिष्टस्य, प्रमाणसंस्थानाभ्यां ततोऽधिकस्य, ग्रहणं, वणिजो हस्तात् क्रमेण नायकसमक्षं कुर्याद्, येनायं क्रीत्वा प्रयच्छति, प्रायशश्च वेश्यानां सामान्यानां कार्योत्पत्तावन्योन्यस्य भाण्डं याचितकं भवतीति प्रतिगणिकाग्रहणम् ॥ २० ॥

पूर्वोपकाराणामविस्मरणमनुकीर्तनं च ॥ २१ ॥

अविस्मरणमिति । विस्मरणे हि तवेदं मयोपहृतमिति यदि तेनाभिहिता किं ब्रूयाद्, अनुकीर्तनं च तत्समक्षं येनोपकृतमत्र न नश्यतीति, पुनः प्रयच्छति ॥ २१ ॥

प्रणिधिभिः प्रतिगणिकानां लाभातिशयं श्रावयेत् ॥ २२ ॥

प्रणिधिभिः = चारैः, प्रतिगणिकानामात्मना तुल्यदानमनर्हाणां, लाभातिशयश्रावणं नायकसमक्षं, भवदावासाद्विष्णुमित्त्रया लब्धमिदमधिकमित्यादि ॥ २२ ॥

तासु नायकसमक्षमात्मनोऽभ्यधिकं लाभं भूतमभूतं वा व्रीडिता नाम वर्णयेत् ॥ २३ ॥

तास्विति । प्रतिगणिकासु. यो लाभस्तस्मादप्यधिकमिति योज्यम्, भूतं वा नायकेन दत्तम्, अभूतमदत्तम्, व्रीडिता नामेति । लज्जितेव वर्णयेद्, येन सोऽपि लज्जितः प्रयच्छेत् ॥ २३ ॥

पूर्वयोगिनां च लाभातिशयेन पुनः संधाने यतमानानामाविष्कृतः प्रतिषेधः ॥ २४ ॥

पूर्वयोगिनामिति । पूर्वसंसृष्टानां विशीर्णानां, लाभातिशयेनाधिकेन लाभेन, पुनः सन्धाने यतमानानां यत्नं कुर्वताम्, आविष्कृतः = प्रकटः, प्रतिषेधः कर्तव्यः, यथाऽसौ श्रुत्वा मय्यनुरक्तेति प्रयच्छति ॥ २४ ॥

तत्स्पर्धिनां च त्यागयोगितानिदर्शनम् ॥ २५ ॥

तत्स्पर्धिनां चेति । नायकस्पर्धिनां त्यागयोगितानिदर्शनं प्रणिधिभिस्त्यागयोगित्वख्यापनार्थमित्यर्थः, येनायं श्रुत्वाऽवतार एषां मा भूदिति प्रयच्छति ॥ २५ ॥

न पुनरेष्यतीति बालयाचितकमित्यर्थागमोपायाः ॥ २६ ॥

न पुनरेष्यतीति । न पुनर्गृहमनेनागन्तव्यमिति, बालेन प्रयुक्तेन याचितकं कार्यमिदं मे देहीति, बालवद्वा लज्जां त्यक्त्वा याचितव्यमित्यर्थः, एतेऽर्थागमोपाया देशकालावस्थाऽपेक्षया प्रयोक्तव्याः ॥ २६ ॥

इत्यर्थागमोपायास्त्रिपञ्चाशत्तमं प्रकरणम् ॥

सक्ताद्वित्तादानमुपायैरुक्तं, विरक्ते तु किं प्रतिपद्येतेति, विरक्तप्रतिपत्तिरुच्यते, तत्र विरक्तस्य लक्षणमाह—

विरक्तं च नित्यमेव प्रकृतिविक्रियातो विद्याद् मुखवर्णाच्च ॥ २७ ॥

विरक्तं चेति । नित्यमेवेति । सर्वत्र क्रियासु वर्तमानम्. प्रकृतिविक्रियात इति । स्वभावान्यथात्वेनेत्यर्थः, अनेनेङ्गितमन्यथावृत्तिलक्षणं दर्श-

यति, मुखवर्णाच्च विद्यादित्येव, मुखरागादित्यर्थः, कश्चिदेव मुखरागे विरागं सूचयति, तेनेङ्गिताकाराभ्यां रक्तवद्विरक्तमपि विद्यादित्युक्तम्॥२७॥

तामन्यथावृत्तिमाह—

ऊनमतिरिक्तं वा ददाति ॥ २८ ॥

ऊनमिति । अतिरिक्तं वा यथादीयमानात् ॥ २८ ॥

प्रतिलोमैः सम्बध्यते ॥ २९ ॥

प्रतिलोमैः संबध्यते, नायिकाया विपक्षैः सह प्रीतिं करोति ॥ २९ ॥

व्यपदिश्यान्यत्करोति ॥ ३० ॥

व्यपदिश्य 'स्नातव्यम्' इति, अन्यत्करोति, सज्जीकृतेऽपि स्नानोपकरणे भुङ्क्ते ॥ ३० ॥

उचितमाच्छिनत्ति ॥ ३१ ॥

उचितमाच्छिनत्ति, प्रत्यहं दीयमानं न ददाति ॥ ३१ ॥

प्रतिज्ञातं विस्मरत्यन्यथा वा योजयति ॥ ३२ ॥

प्रतिज्ञातमिदं मया देयमिति विस्मरति, न प्रतिज्ञातमिति, अन्यथा योजयति न त्विदमिति ॥ ३२ ॥

स्वपक्षैः संज्ञया भाषते ॥ ३३ ॥

स्वपक्षैरिति। मित्रादिभिः सह, संज्ञया भाषते न वचसा मा श्रौषीदियमिति ॥ ३३ ॥

मित्रकार्यमपदिश्यान्यत्र शेते ॥ ३४ ॥

मित्रकार्यमपदिश्य, मयाऽद्य कर्तव्यमित्यन्यत्र शेते, नायिकाऽन्तरगृहे॥ ३४ ॥

पूर्वसंसृष्टायाश्च परिजनेन मिथः कथयति ॥ ३५ ॥

पूर्वसंसृष्टायाश्च नायिकायाः परिचारकेण सह, मिथः = रहसि, कथयति यत्पूर्ववृत्तं वर्तमाननायिकागतं वा ॥ ३५ ॥

तस्मिन्विरक्त इति ज्ञातेऽनुष्ठानमाह—

तस्य सारद्रव्याणि प्रागवबोधादन्यापदेशेन हस्ते कुर्वीत ॥३६॥

तस्येति । विरक्तस्य, सारद्रव्याणि = सुवर्णरजतादीनि, हस्ते कुर्वीत, प्रागवबोधादिति । यावदसौ न जानाति, ज्ञातोऽहमनया विरक्त इति, अन्यथा प्रतिविधानान्तरं चिन्तयेत्, तत्राप्यन्यापदेशेन यत्किंचिद्व्याजं कृत्वेत्यर्थः ॥ ३६ ॥

तानि चास्या हस्तादुत्तमर्णः प्रसह्य गृह्णीयात् ॥ ३७ ॥

तानि चेति । सारद्रव्याणि, अस्या इति । नायिकाया हस्ताद्, उत्तमर्ण इति । यस्मादुत्तमर्णान्नायकार्थमृणमाहृतं गृहीतवती स तया कृतसंकेतः प्रसह्याभिभूय गृह्णीयात् ॥ ३७ ॥

विवदमानेन सह धर्मस्थेषु व्यवहरेदिति विरक्तप्रतिपत्तिः ॥ ३८ ॥

विवदमानेनेति । मदीयमेतत्त्वं किं गृह्णासीति विवादं कुर्वता नायकेन सह, धर्मस्थेषु प्राड्विवाकादिषु च, व्यवहरेदुत्तमर्णः, यदि तु न विवदेत सिद्धं कार्यम् ॥ ३८ ॥

इति विरक्तप्रतिपत्तिश्चतुःपञ्चाशत्तमं प्रकरणम् ॥

विरक्तस्य स्वयमेव निष्कासितत्वान्न निष्कासनं, यस्तु सक्तत्वात्स्वयं न निष्कसति, तस्य निष्कासनक्रमा उच्यन्ते, तत्रायं प्रथमः कल्पो यदस्यानुपालनं, यदाह—

सक्तं तु पूर्वोपकारिणमप्यल्पफलं व्यलीकेनानुपालयेत् ॥ ३९ ॥

सक्तमिति । अल्पं ददतमपि, व्यलीकेनापराधेनानुपालयेत्, तस्य सक्तत्वात्, पूर्वं बहुधा कृतोपकारोऽपि परामिच्छति यदा तदा निष्कासयेदित्यर्थः ॥ ३९ ॥

असारं तु निष्प्रतिपत्तिकमुपायतोऽपवाहयेदन्यमवष्टभ्य ॥ ४० ॥

असारं = निर्द्रव्यम्, अपवाहयेद् = निष्कासयेद्, यद्यपि तदात्वे नास्ति, तथाऽपि भविष्यतीति चेदाह—निष्प्रतिपत्तिकमिति । निरनुष्ठानमित्यर्थः, ननु रतिफलत्वात्कथं निष्कास्य इति-चेन्न, अन्यमवष्टभ्येति । अन्यस्मादुभयोपपत्तेः, वर्तमानादन्यं पूर्वसंसृष्टं विशीर्णम्, अन्यं वाऽऽसृत्यापवाहयेदिति योज्यम्, अन्यथा विपक्षस्याभावात् सत्यप्युपायप्रयोगे सक्तस्यानिष्कासनात् ॥ ४० ॥

ते च निष्कासनोपायाः प्रकाशे रहसि वा स्थितस्य, तत्र पूर्वमधिकृत्याह—

तदनिष्टसेवा, निन्दिताभ्यासः, ओष्ठनिर्भोगः, पादेन भूमेरभिघातः, अविज्ञातविषयस्य संकथा, तद्विज्ञातेष्वविस्मयः, कुत्सा च, दर्पविघातः, अधिकैः सह संवासः, अनपेक्षणं, समानदोषाणां निन्दा, रहसि चावस्थानम् ॥ ४१ ॥

तदनिष्टसेवेति । तस्य नायकस्य यदनिष्टं तस्य सेवा कर्तव्या, येनायं- प्रागेवेयं मम च्छन्दानुवर्तिनी संप्रति कामं परीवादयुक्ता विरक्तेति व्यावर्तते, निन्दितं = तृणच्छेदलोष्टमर्दनादि तस्याभ्यासः पुनः पुनः करणं- तदग्रतो, येनायं ममाशुभं काङ्क्षत इति जानाति, ओष्ठनिर्भोगः, तं दृष्ट्वा

३८ का० सू०

स्वमोष्ठं च क्रोडीकृत्य बहिर्निष्कासयेत्, पादेन भूमेरभिघातः, भूमौ पादास्फालनं, तदुभयं नित्यक्रुद्धताख्यापनार्थम्, अविज्ञातविषयस्य संकथेति। यस्मिन्विषये नायकस्य परिज्ञानं नास्ति, तस्मिन् तस्य संबन्धिनः- शोभनमिदं जानातीति संकथा कर्तव्या, यथाऽस्य लोकमध्ये वैलक्ष्यं भवति, विज्ञातेष्वविस्मयो विरागख्यापनार्थं, कुत्सा च, दुःशिक्षितमस्यैतदिति. दर्पविघातः शौर्यादिजनितदर्पस्यापनयनम्, अन्यं प्रोत्साह्य येनायं विलक्षीभवति, अधिकैः सह संवासः, येन तेभ्यो बिभ्यन्न ढौकते, अनपेक्षणमिष्टानिष्टवस्तुष्ववज्ञाख्यापनार्थं, समानदोषाणां निन्दा, यथाऽयं तद्द्वारेण मां कुत्सयतीति जानाति, रहसि चावस्थानं, रतार्थं संकथाऽर्थं वा ॥ ४१ ॥

तत्र रतमधिकृत्याह—

**रतोपचारेषूद्वेगः, मुखस्यादानं, जघनस्य रक्षणं, नखदशनक्षतेभ्यो जुगुप्सा, परिष्वङ्गे भुजमय्या सूच्या व्यवधानं, स्तब्धता गात्राणां, सक्थ्नोर्व्यत्यासः, निद्रापरत्वं च, श्रान्तमुपलभ्य चोदना, अशक्तौ हासः, शक्तावनभिनन्दनं, दिवाऽपि भावमुपलभ्य महाजनाभिगमनम् ॥ ४२ ॥**

रतोपचारेष्विति। रतार्थं स्रक्ताम्बूलादिषूपचारेषु, उद्वेग इत्यप्रतिग्रहणम्, प्रतिग्रहणे वाऽसौमनस्यम्, मुखस्यादानं मुखं चुम्बितुं न देयं, जघनस्य रक्षणं द्रष्टुं स्प्रष्टुं वा न देयं, नखदशनक्षतेभ्यस्तत्कृतेभ्यः जुगुप्सा=निन्दा, भुजमय्येति। भुजौ व्यत्यस्य स्तनस्कन्धयोर्निदध्यात्, ततो भुजावेकीकृत्य सूचीव सूची तया व्यवधानं परिष्वङ्गस्य, स्तब्धता गात्राणां कर्तव्या नाक्रष्टुं दद्यादित्यर्थः, सक्थ्नोर्व्यत्यासः, सक्थिनी व्यत्यस्येद् यन्त्रयोगे प्रतिषेधार्थमूरू व्यत्यस्येदित्यर्थः, निद्रापरत्वं चात्मनः ख्याप्यं, श्रान्तमुपलभ्येति। यदि कथं चिद्रन्तुं प्रवृत्तस्तत्र श्रान्तं चोदयेत्प्रवर्तयितुं न पुरुषायितेन साहाय्यं दद्यात्, तत्र चोदितस्याशक्तौ हासः कर्तव्यः, पार्ष्ण्याऽभिहत्य यथाऽयं विरक्तीभवति, शक्तावनभिनन्दनं वैराग्यख्यापनार्थं, दिवाऽपीति। अस्त्येव कश्चित्कामगर्दभो यः प्रतिषिद्धमपि दिवा मैथुनमाचरति, भावमुत्कण्ठां संप्रयोगेच्छामुपलभ्य; चेङ्गिताकाराभ्यां महाजनाभिगमनं, रतिगृहान्निर्गत्य तदिच्छाव्याघातार्थम् ॥ ४२ ॥

संकथामधिकृत्याह—

**वाक्येषु च्छलग्रहणम्, अनर्मणि हासः, नर्माणि चान्यमपादिश्य**

हसेद्, वदति तस्मिन्कटाक्षेण परिजनस्य प्रेक्षणं ताडनं च, आहत्य चास्य कथामन्याः कथाः, तद्व्यलीकानां व्यसनानां चापरिहार्याणामनुकीर्तनं, मर्मणां च चेटिकयोपक्षेपणम् ॥ ४२ ॥

वाक्येष्विति । छलग्रहणं विरूपकमुक्तमिति, अनर्मणीति । क्रीडारहितेऽपि संकथने हासोऽकस्मात्कर्तव्यः, येनायं विनैव क्रीडाक्रियया मामुपहसतीति मन्यते, नर्मणि चेति । क्रीडायां प्रस्तुतायामर्थान्तरमपदिश्य हसेत्, तस्मिन्नायके वदति सति परिजनस्य स्वस्य कटाक्षेण प्रेक्षणं कर्तव्यं, ताडनं च, सहासं हस्तेन येनायं जानाति नास्मत्कथायां रमत इति, आहत्य चेति । तेन क्रियमाणां कथामपास्यान्याः कथाः कर्तव्याः, तद्व्यलीकानां नायकापराधानां व्यसनानां द्यूतादीनाम्, अपरिहार्याणामिति । यान्युभयान्यपि परिहर्तुमशक्यानि तेषामनुकीर्तनं वैराग्यजननार्थम्, मर्मणां चानुकीर्तनं येषूक्तेषु दुःखमास्ते, चेटिकामुपक्षिप्य सर्वमभिधापयेद्, एभिरुपायैर्निष्क्रमणयोग्यतामापादितस्योपायद्वयं यतः पुनर्नागच्छतीति ॥ ४३ ॥

यदाह—

आगते चादर्शनमयाच्ययाचनमन्ते स्वयं मोक्षश्चेति परिग्रहकल्पो दत्तकस्य ॥ ४४ ॥

आगते चादर्शनमिति । यावद्यावदागच्छति तावत्तावदात्मानं न दर्शयेत्, पश्यति चेदयाच्ययाचनं, यन्न याचितुमर्हति तद्याचेत, अन्ते चावसाने मोक्षः स्वयमेव परित्यागः कर्तव्यः, तस्योपायैः प्रायेण निवारितत्वात्, परिग्रहकल्प इति । वेश्याया गम्यस्य यः परिग्रहस्तस्य कल्पो विधिरेतावानेव दत्तकप्रोक्तो न मयाऽभिहितः, तेन हि गणिकानां नियोगात्संक्षेपेणाभिधातुमीप्सितत्वात् ॥ ४४ ॥

यत्तु तच्छेषभूतं विशीर्णप्रतिसंधानादिकमपि बाभ्रव्योक्तं, तदहं वक्ष्यामीति मन्मते, यदि परिग्रहः कर्तव्योऽनेनाधिकरणेन कथ्यते, कथं वैशिकम् ? इत्युच्यत इत्याह—

भवतश्चात्र श्लोकौ—

परीक्ष्य गम्यैः संयोगः संयुक्तस्यानुरञ्जनम् ।
सक्तार्थस्य चादानमन्ते मोक्षश्च वैशिकम् ॥ ४५ ॥

परीक्ष्येति । सहायगम्यागम्यगमनकारणचिन्तां कृत्वेत्यर्थः, गम्यैः संयोगो गम्योपावर्तनेन, संयुक्तस्यानुरञ्जनं कान्तानुवृत्तैः, सक्तादर्थस्य चादानं तदुपायैः, अन्ते मोक्षश्च निष्कासनक्रमैः, एतत्सर्वं वेश्योचितं न

कुलयोषिदुचितं, तच्च वैशिकमिति संज्ञितं, यदाह कात्यायनः-'वेशं वेश्याजनोचितम्' इति, स प्रयोजनमस्येति वैशिकम् ॥ ४५ ॥

तस्य वेशस्य प्रयोजनमाह—

एवमेतेन कल्पेन स्थिता वेश्या परिग्रहे ।
नातिसंधीयते गम्यैः करोत्यर्थांश्च पुष्कलान् ॥ ४६ ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणेऽर्थागमोपाया विरक्तप्रतिपत्तिर्निष्कासनक्रमा-स्तृतीयोऽध्यायः ।

एवमिति । कल्पेनेति । वैशिकाख्येन, नातिसंधीयते = नातिवञ्च्यते, पुष्कलानिति । अनेकानित्यर्थः ॥ ४६ ॥

इति निष्कासनक्रमाः पञ्चपञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां वैशिके षष्ठेऽधिकरणेऽर्थागमोपाया विरक्तप्रतिपत्तिर्निष्कासनक्रमास्तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः

शास्त्रकार एव प्रकरणसंबन्धमाह--

वर्तमानं निष्पीडितार्थमुत्सृजन्ती विशीर्णेन सह संदध्यात् ॥१॥

वर्तमानमिति । तस्यां यो वर्तते तमलक्तकवन्निष्पीडितार्थमुत्सृजन्ती यदा त्यक्तुकामा तदा, विशीर्णेनेति । पूर्वसंसृष्टेन निष्कासितेन संधित्सुना सह संदध्याद्, एवं सति 'अपवाहयेदन्यमवष्टभ्य' इत्यनुगतं भवतीति विशीर्णप्रतिसंधानमुच्यते ॥ १ ॥

विशीर्णस्यालक्तकवदुत्सृष्टस्य किं संधानेनेति चेदाह—

स चेदवसितार्थो वित्तवान्सानुरागश्च ततः संधेयः ॥ २ ॥

सेति । वित्तवानपि यदाऽवसितार्थोऽवश्यं दास्यतीति, सानुरागश्च, अन्यथा विश्वसनार्थं यत्किञ्चिद्दत्त्वाऽपि निष्कासितोऽहमनयेति विरक्तोऽपकुर्यात्, तत इति । तस्मात्कारणात्संधेयः, सोऽप्यन्यया यदि न संसृष्टः ॥ २ ॥

यस्तु संसृष्टस्तत्र विधानान्तरमाह—

अन्यत्र गतस्तर्कयितव्यः स कार्ययुक्त्या षड्विधः ॥ ३ ॥

अन्यत्र गत इत्यनेन षड्विधा विशीर्ण इति, तर्कयितव्य इति । निरूप्यो वक्ष्यमाणेन न्यायेन सहसा न संधेयः, स इति । योऽन्यत्र गतः, कार्ययुक्त्येति । कार्ययोगाद् षड्विधः, असंसृष्टस्त्वेकविधः ॥ ३ ॥

कार्ययुक्तिमाह—

इतः स्वयमपसृतस्ततोऽपि स्वयमेवापसृतः ॥ ४ ॥

इत इति । स्वदोष एवास्य, यदस्या नायिकातः स्वयमेवापसृत्यान्यत्र गतः, यत्रापि गतस्तत्रापि स्वयमेवापसृत इत्येकः ॥ ४ ॥

इतस्ततश्च निष्कासितापसृतः ॥ ५ ॥

इतस्ततश्चेति । अत्राश्रययोर्दोषो नाश्रितस्य दोषः,यस्मादितो निष्कासितोऽपसृतस्तत्र गतस्ततोऽपि निष्कासित एवापसृत इति द्वितीयः ॥५॥

इतः स्वयमपसृतस्ततो निष्कासितापसृतः ॥ ६ ॥

इतः स्वयमपसृत इति । आश्रितस्य दोषः, ततोऽपि निष्कासितोऽपसृत इत्याश्रयस्य चेति तृतीयः ॥ ६ ॥

इतः स्वयमपसृतस्तत्र स्थितः ॥ ७ ॥

इतः स्वयमपसृत इत्याश्रितस्य दोषः, तत्र स्थित इति । नोभयोरिति चतुर्थः ॥ ७ ॥

इतो निष्कासितापसृतः ॥ ८ ॥

इतो निष्कासितापसृत इति । उभयस्य दोषः, ततः स्वयमपसृत-इत्याश्रितस्येति पञ्चमः ॥ ८ ॥

इतो निष्कासितापसृतस्तत्र स्थितः ॥ ९ ॥

इतो निष्कासितः सन्नपसृत इत्याश्रयदोषः, तत्र स्थित इति । नोभयोरपीति षष्ठः ॥ ९ ॥

एषु संधेयासंधेयतया तर्कमाह—

इतस्ततश्च स्वयमेवापसृत्योपजपति चेदुभयोर्गुणानपेक्षी चलबुद्धिरसंधेयः ॥ १० ॥

उपजपति चेदिति । यदि संधातुं पीठमर्दादिमुखेनोपसृत्य भणतीत्यर्थः, तत्र द्वितीयपक्षाभावात्तर्कयितव्य इति नोक्तं, यदाह—उभयोरिति । तस्यास्तस्याश्च, ताभ्यामनिष्कासितत्वात्, सतोऽपि गुणाननपेक्ष्य चलबुद्धित्वात्स्वदोषेणैवापसृतः, स संहितोऽपि न स्थायी न च तस्मादर्थेन योग इत्यसंधेयः ॥ १० ॥

इतस्ततश्च निष्कासितापसृतः स्थिरबुद्धिः स चेदन्यतो बहु लभमानया निष्कासितः स्यात्ससारोऽपि तया रोषितो ममामर्षाद्, बहु दास्यतीति संधेयः ॥ ११ ॥

इतस्ततश्च निष्कासितेति । उपजपति चेदिति वर्तते, स्थिरबुद्धिः-

स्वयमनपसृतत्वाद्, अत्र पक्षद्वयमप्यस्ति, यदाह-स चेदिति। अत्र तर्कयितव्य इति नोक्तं, चेच्छब्देनैव यद्यर्थेन तदर्थस्योक्तत्वाद्, अन्यत इति। अन्यस्माद्रस्याद्बहु लभमानया निष्कासितः, ससारोऽपि सद्रव्योऽपि, ततश्च तया सरोषितो जनितरोषोऽमर्षाद्बहु दास्यतीति ज्ञात्वा; तदानीमेव संधेयस्तयैव रोषितत्वात्, तस्यामनुशयं बध्नाति ॥ ११ ॥

निःसारतया कदर्यतया वा त्यक्तो न श्रेयान् ॥ १२ ॥

निःसारतया निर्द्रव्यतया ससारश्च कदर्यतयाऽवदान्यतया, त्यक्तो निष्कासितः, न श्रेयान् संधातुमिहापि तुल्यत्वात् ॥ १२ ॥

इतः स्वयमपसृतस्ततो निष्कासितापसृतो यद्यतिरिक्तमादौ च दद्यात्ततः प्रतिग्राह्यः ॥ १३ ॥

इतः स्वयमपसृतस्ततो निष्कासितापसृत इति। अत्राप्युपजपेदिति वर्तते, अत्रापि यदिशब्दात्तर्कयितव्य इति नोक्तम्, अतिरिक्तं पूर्वस्माद्दानाद्, आदौ च यावन्न संप्रयोगः, कृतकृत्यस्य हि स्वयमपसर्पणसंभवात्, प्रतिग्राह्यः, संधेयः अत्र विपर्ययेणाप्रतिग्राह्य इत्यर्थोक्तो द्वितीयपक्षः ॥ १३ ॥

इतः स्वयमपसृत्य तत्र स्थित उपजपंस्तर्कयितव्यः ॥ १३ ॥

तर्कयितव्यः किमुपकर्तुमपकर्तुं वोपजपतीति ॥ १४ ॥

अत्र संधेयपक्षमाह—

विशेषार्थी चागतस्तत्र विशेषमपश्यन्नागन्तुकामो मयि मां जिज्ञासितुकामः स आगत्य सानुरागत्वाद्दास्यति ॥ १५ ॥

विशेषार्थितया यत्र गतस्तत्र विशेषं सुरतगतमपश्यंस्तस्या अविदग्धत्वात्, तत इति। तस्याः सकाशाद्, अस्मन्मूलमागन्तुकामो-मयि दृष्टविशेषत्वाद्, मां जिज्ञासितुकाम इति। तत्रत्य एव मयि जिज्ञासां कर्तुमिच्छुः, किमियं मां स्वयमपसृतमिच्छति न वेति, सानुरागत्वाद्दास्यति दृष्टविशेषत्वात् ॥ १५ ॥

तस्यां वा दोषान्दृष्ट्वा मयि भूयिष्ठान्गुणानधुना पश्यति स गुणदर्शी भूयिष्ठं दास्यति ॥ १६ ॥

तस्यां वा दोषान्गुणविपर्ययान्दृष्टवान्, आगन्तुकाम इति योज्यं, सत्सु वा गुणेषु मयि भूयिष्ठान्प्रभूततमान्गुणानधुना पश्यति, तद्गुणान्स्तोकान्दृष्ट्वा, स उभयस्मिन्नपि पक्षे मयि गुणदर्शी, भूयिष्ठं=प्रभूतं, दास्यति ॥ १६ ॥

असंधेयपक्षमाह—

बालो वा नैकत्रदृष्टिरतिसंधानप्रधानो वा हरिद्राराणो वा यत्किंचनकारी वेत्यवेत्य संदध्यान्न वा ॥ १७ ॥

बालो वेति । आरोहद्यौवनत्वाद्, नैकत्रदृष्टिस्तत्रान्यत्र वाऽभिप्रायोऽस्य स काकाक्षिवद् वर्त्तमानः किं दास्यति, अतिसंधानप्रधानो वा, वञ्चनैकनिष्ठः, हरिद्राराणो वेति । हरिद्राराग इव रागो यस्य, न चिरस्थायी, मयि विरक्तो यत्र गतस्तत्रापि विरक्तः पुनरागन्तुकामः किं दास्यति, यत्किंचनकारी वा सोऽनर्थमपि कुर्याद्, इत्येवमवेत्य ज्ञात्वा संदध्यात् प्रथमे पक्षे, न वेति । नैव संदध्यादिति द्वितीये ॥ १७ ॥

इतो निष्कासितापसृतस्ततः स्वयमपसृत उपजपंस्तर्कयितव्यः ॥ १८ ॥

तर्कयितव्य इत्युपकारापकाराभ्याम् ॥ १८ ॥

अनुरागादागन्तुकामः स बहु दास्यति मम गुणैर्भावितो योऽन्यस्यां न रमते ॥ १९ ॥

अनुरागादागन्तुकामः, तत्रानिष्कासितत्वाद्, मम गुणैर्भावितोऽनुरञ्जितोऽयं, योऽन्यस्यां न रमते, येन ततोऽपि स्वयमेवापसृतः ॥ १९ ॥

पूर्वमयोगेन वा मया निष्कासितः स मां शीलयित्वा वैरं निर्यातयितुकामः, धनमभियोगाद्वा मयाऽस्यापहृतं तद्विश्वास्य प्रतीपमादातुकामः, निर्वेष्टुकामो वा, मां वर्तमानाद्भेदयित्वा त्यक्तुकाम इत्यकल्याणबुद्धिरसंधेयः ॥ २० ॥

पूर्वमयोगेनेति । अन्यायेन निष्कासितः, स मां शीलयित्वेति । अनुरागप्रदर्शनेनानुप्रविश्य, वैरं निर्यातयितुकामः प्रच्छन्नप्यहमनया हठान्निष्कासित इति, धनमभियोगाद्वेति । अस्याभियोगमेव कुर्वत्या मया धनं बह्वपहृतमाकृष्टं, संप्रयोगश्च कादाचित्कः कृतः, तद्धनं स्नेहोपदर्शनेन मां विश्वास्य प्रतीपमादातुकामः, निर्वेष्टुकामो वेति । निष्पूर्वो विशतिर्निर्वेशे भृतौ वर्तते, इदानींतनसंप्रयोगे तदेव धनं निर्वेशं कर्तुकामो नान्यद्दातुकामः, मां वा वर्तमानादिति । निष्कास्यैनं येन सह वर्तेऽहं तस्माद्वर्तमानाद्दातुकामात् संधानेन मां भेदयति, मा भूदस्या लाभेन योग इति, स्वयं दास्यतीति चेदाह—त्यक्तुकाम इति । अकल्याणबुद्धिर्वैरनिर्यातनाद्यभिप्रायः ॥ २० ॥

अन्यथाबुद्धिः कालेन लम्भयितव्यः ॥ २१ ॥

अन्यथाबुद्धी रागाद् दातुकामः कालेन, न तदानीमेव तस्य निष्का-

सनेनापादितवैकृतत्वाद्, लम्भयितव्य इति। प्रापयितव्यो न तु प्राप्यः-स्वातन्त्र्येण लाघवात् ॥ २१ ॥

इतो निष्कासितस्तत्र स्थित उपजपन्नेतेन व्याख्यातः ॥२२॥

एतेनेति। अनन्तरोक्तेन विशीर्णेन व्याख्यातः, अयमपि तथैव तर्कयित्वा; अकल्याणबुद्धिरसंधेयोऽन्यथाबुद्धिः कालेन, न तदानीमेव लम्भयितव्य इति ॥ २२ ॥

तेषूपजपत्स्वन्यत्र स्थिता स्वयमुपजपेत् ॥ २३ ॥

येऽन्यत्र ये च न गताः संधेयास्तेषूपजपत्सु, न त्वनुपजपत्सु लाघवाद्, अन्यत्र स्थितेति। द्विधा-वर्तमाना, त्याज्य इतरस्मिंश्च, कारणापेक्षया स्वयमुपजपेत् ॥ २३ ॥

बहूनि कारणान्याह—

व्यलीकार्थं निष्कासितो मया, असावन्यत्र गतो यत्नादानेतव्यः ॥ २४ ॥

व्यलीकार्थमिति। व्यलीकमपराधो यदन्यस्याभिगमनं तन्निमित्तं मया निष्कासितः स पुनर्ददातीति, यत्नादानेतव्यः, ततोऽपि फलेन योगात् ॥ २४ ॥

इतः प्रवृत्तसम्भाषो वा ततो भेदमवाप्स्यति ॥ २५ ॥

इतः प्रवृत्तसम्भाषो वेति। मामुद्दिश्य प्रवृत्तसम्भाषः, इदं ते दास्यामीति, तत इति। यत्र गतस्तस्याः सकाशाद् भेदमवाप्स्यतीति ॥ २५ ॥

वर्तमानस्य वा दर्पविघातं करिष्यामि ॥ २६ ॥

किमन्यस्या ददासीति तद्दर्पविघातं करिष्यामि, येन तद्दर्पो वर्तमानो विलक्षीभूतो निष्क्रामति ॥ २६ ॥

अर्थागमकालो वाऽस्य, स्थानवृद्धिरस्य जाता, लब्धमनेनाधिकरणं, दारैर्वियुक्तः, पारतन्त्र्याद्व्यावृत्तः, पित्रा भ्रात्रा वा विभक्तः ॥ २७ ॥

अर्थागमकालो वाऽस्य, वणिज्यया सेवया वा, स्थानवृद्धिर्वा, ग्रामादेरधिकस्य लाभाद्, लब्धं वाऽनेनाधिकरणमक्षपटलादिकं, दारैर्वियुक्तः, ममेदानीमवसरः प्राप्तः, पारतन्त्र्याद्व्यावृत्तः, कर्मस्थानेषु गृहे वा स्वतन्त्रः सुखं दास्यति, पित्रा जीवतैव विभक्तः, भ्रात्रा पितरि मृते ॥ २७ ॥

अनेन वा प्रतिबद्धमनेन संधिं कृत्वा नायकं धनिनमवाप्स्यामि ॥ २८ ॥

अनेन वा प्रतिबद्धमिति । तस्य मित्रत्वाद्, अनेन संधिं कृत्वा संक्रमस्थानीयेन ॥ २८ ॥

विमानितो वा भार्यया तमेव तस्यां विक्रमयिष्यामि ॥ २९ ॥

विमानितो वेति । मत्तो विशीर्णः स्वभार्यया संसृष्टः, तया चास्मदमर्षादवमानितोऽहं चाकृष्टा तमेव संधाय: तस्यां विक्रमयिष्यामि = विग्रहं कारयिष्यामि, आक्रोशस्य निर्यातनार्थम् ॥ २९ ॥

अस्य वा मित्रं मद्द्वेषिणीं सपत्नीं कामयते तदमुना भेदयिष्यामि ॥ ३० ॥

अस्य वा विशीर्णस्य मित्रं शक्तिद्रव्यसंपन्नं मद्द्वेषिणीमपकर्तुकामां मम सपत्नीं वर्तमानां भूतपूर्वां वा कामयते, तन्मित्रमधुना विशीर्णेन भेदयिष्यामि, येन सा लाभेन न योक्ष्यते, मां चोपकरिष्यति ॥ ३० ॥

चलचित्ततया वा लाघवमेनमापादयिष्यामीति ॥ ३१ ॥

चलचित्ततया वेति । इतोऽन्यत्र गतस्ततोऽन्यत्र गतस्तमपि चलचित्ततया लाघवमापादयिष्यामि ॥ ३१ ॥

स्वयमुपजपेदित्युक्तं तस्य स्वरूपमाह—

तस्य पीठमर्दादयो मातुर्दौःशील्येन, नायिकायाः सत्यप्यनुरागे विवशायाः पूर्वं निष्कासनं वर्णयेयुः ॥ ३२ ॥

तस्येति । विशीर्णस्य, मातुर्दौःशील्येनेति । मातैवास्या दुःशीला, तयाऽर्थपरतया त्वं निष्कासितः, नायिका त्वय्यनुरक्तैव ॥ ३२ ॥

वर्तमानेन चाकामायाः संसर्गं विद्वेषं च ॥ ३३ ॥

केवलं परवशा वर्तमानेन गम्येन यः संसर्गः सम्प्रयोगो नायिकाया अनिच्छन्त्या अकामाया औषधपानवद् विद्वेषः परमार्थतो यस्य दर्शनपथेऽपि न तिष्ठतीति वर्णयेयुः ॥ ३३ ॥

तस्याश्च साभिज्ञानैः पूर्वानुरागैरेनं प्रत्याययेयुः ॥ ३४ ॥

तस्याश्चेति । नायिकायाः, साभिज्ञानैरिति । अभिज्ञानं वक्ष्यति, पूर्वानुरागैरिति । पूर्वमविशीर्णे येऽनुरागा आसंस्तएनं प्रत्याययेयुर्नायकं बोधयेयुः, तथैव प्रतिपद्यते ॥ ३४ ॥

अभिज्ञानं च तत्कृतोपकारसंबद्धं स्यादिति विशीर्णप्रतिसंधानम् ॥ ३५ ॥

तत्कृतोपकारसंबद्धमिति । नायकेन यः कृत उपकारोऽर्थेनानर्थप्रतीकारेण वा तेन युक्तं स्यात् कृतज्ञतासूचनार्थम् ॥ ३५ ॥

अपूर्वस्यासम्भवे विशीर्णप्रतिसंधानमुक्तं, सम्भवति चापूर्वे, विशीर्णे चोपजपति सति, केन संधानं युक्तमित्याह—

अपूर्वपूर्वसंसृष्टयोः पूर्वसंसृष्टः श्रेयान्, स हि विदितशीलो-दृष्टरागश्च सूपचरो भवतीत्याचार्याः ॥ ३६ ॥

अपूर्वेति। विदितशील इति। संवासेन ज्ञातस्वभावः, दृष्टानुरागश्च पूर्वमासक्तत्वात्, स ह्युभयधर्माध्यासितत्वात्कान्तानुवृत्त्या सुखेनोपचर्यत इति सूपचरो न त्वपूर्वः ॥ ३६ ॥

पूर्वसंसृष्टः सर्वतो निष्पीडितार्थत्वान्नात्यर्थमर्थदो दुःखं च पुनर्विश्वासयितुमपूर्वस्तु सुखेनानुरज्यत इति वात्स्यायनः ॥ ३७ ॥

नात्यर्थमर्थद इति। अर्थार्थं सन्धीयते स चेन्न यथावत् किं तेन संहितेन, दुःखं च पुनर्विश्वासयितुं तस्य सत्यपि विदितशीलत्वे दृष्टानुरागत्वे च निष्कासनेनोत्पादितवैकृत्यात्, सुखेनानुरज्यत इति। तद्दोषस्यादृष्टत्वात्, तस्य वा निष्पीडितार्थत्वादत्यर्थमर्थद इत्यर्थोक्तम्, अपूर्वो द्विविधः—अन्यवेश्यासंसृष्टोऽसंसृष्टश्चेति, संसृष्टोऽपि द्विविधः—निष्कासितोऽनिष्कासितश्च, तेषां सन्धानोपायो गम्योपावर्तने द्रष्टव्यः ॥ ३७ ॥

तथाऽपि पुरुषप्रकृतितो विशेषः ॥ ३८ ॥

पुरुषप्रकृतित इति। पुरुषस्वभावात्, कश्चिदपूर्वोऽपि दुरुपचरः-कदर्यश्च भवति, पूर्वसंसृष्टश्च निष्पीडितार्थोऽपि दाता, निष्कासितोऽपि सविश्वास इति ॥ ३८ ॥

संक्षेपेण सन्धाने कारणं त्रिविधं नायिकान्तरस्थं विशीर्णस्थं वर्तमानस्थं चेति, तदेव दर्शयन्नाह—

भवन्ति चात्र श्लोकाः—

अन्यां भेदयितुं गम्यादन्यतो गम्यमेव वा।
स्थितस्य चोपघातार्थं पुनः संधानमिष्यते ॥ ३९ ॥

अन्यामिति। भेदयितुं विशीर्णात्, 'तदनेन विमानितो वा भार्यया तमेव तस्यां विक्रमयिष्यामि', 'अस्य वा मित्रं मद्द्वेषिणीं कामयते तदमुना भेदयिष्यामि' इत्युभयमुक्तं वेदितव्यं, स्थितस्योपघातार्थमित्यनेन 'वर्त्तमानस्य वा दर्पविघातं करिष्यामि' इत्येतदुक्तम्, अन्यतो गम्यमेव वेति। अन्यस्या नायिकातो विशीर्णं भेदयितुमित्यनेन च विशीर्णस्थं कारणमुक्तम् ॥ ३९ ॥

संप्रयोगार्थं विशीर्णः संधत्ते, तादृशमस्ति संधानं यत्र वर्त्तमानम-

तिसक्तं विशीर्णं वाऽनुरक्तमपेक्ष्य तदैव सम्प्रयोग इति दर्शन्नाह—

बिभेत्यन्यस्य संयोगाद्व्यलीकानि च नेक्षते ।
अतिसक्तः पुमान्यत्र भयाद्बहु ददाति च ॥ ४० ॥

बिभेतीति । यत्र यस्मिन्संनिधाने वर्तमानेऽतिसंसक्तोऽप्यन्यस्य संयोगाद्बिभेति, संयुक्तोऽयं कदा चिदपकरिष्यतीति, व्यलीकानि च नायिकाकृतानपराधान्नेक्षतेऽवधीरयत्यतिसक्तत्वादेव, भयादिति । परित्यागभयाद् बहु ददाति ॥ ४० ॥

असक्तमभिनन्देच्च सक्तं परिभवेत्तथा ।
अन्यदूतानुपाते च यः स्यादतिविशारदः ॥ ४१ ॥

असक्तमिति । यो विशीर्णोऽप्यनुरक्तत्वाद्वर्तमानमसक्तमभिनन्देद्-विज्ञातभावत्वाद्, यदस्यां न रक्त इति, सक्तं परिभवेद्, अलक्तकावस्थां-प्राप्स्यस्यचिरेणेति, अन्यदूतानुपाते चेति । अन्यस्य सम्बन्धिन्यायाति दूतेऽतिविशारदोऽत्यर्थमर्थदो मा भूदन्येन सन्धानमिति ॥ ४१ ॥

तत्रोपजापिनं पूर्वं नारी कालेन योजयेत् ।
भवेच्चाच्छिन्नसंधाना न च सक्तं परित्यजेत् ॥ ४२ ॥

तत्रेति । तस्मिन्संधाने, पूर्वमिति । पूर्वसंसृष्टं विशीर्णमुपजापिनं, नारीति । सामान्याभिधानेऽपि प्रकरणाद्वेश्यैव द्रष्टव्या, कालेन योजयेद्, न तदैव सम्प्रयोजयेद्, अन्यथा तदात्व एव वर्तमानेनातिसक्तेन फलवतां विश्लेषः स्याद्, विशीर्णोऽप्यतिरक्तत्वात् प्रत्याशया कालान्तरमपेक्षत एव, यदाह—'भवेच्चाच्छिन्नसंधानेति । विशीर्णेन सहेत्यर्थः, न च सक्तं परित्यजेत्, तदात्व एव तस्य सफलत्वात् ॥ ४२ ॥

सक्तं तु वशिनं नारी संभाष्याप्यन्यतो व्रजेत् ।
ततश्चार्थमुपादाय सक्तमेवानुरञ्जयेत् ॥ ४३ ॥

यस्य तदात्वेऽन्यस्माल्लाभो महान्; न च सम्प्रयोगं विना तत्र किं-प्रतिपत्तव्यमित्याह—सक्तं त्विति । वशिनं यथोक्तकारिणम्, अन्यत इति । अन्यमुद्दिश्य, ततश्चेति। यत्र व्रजिता सक्तमेवानुरञ्जयेत् कान्तानुवृत्त्या तत्र स्थितत्वाद्, नान्यम् ॥ ४३ ॥

प्रतिसन्धानात् प्राक् चतुष्टयं निरूप्यमित्याह—

आयतिं प्रसमीक्ष्यादौ लाभं प्रीतिं च पुष्कलाम् ।
सौहृदं प्रतिसंदध्याद्विशीर्णं स्त्री विचक्षणा ॥ ४४ ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे विशीर्ण-प्रतिसंधानं चतुर्थोऽध्यायः ।

आयतिमिति । प्रभावं, लाभमायत्यां, तदात्वे प्रीतिं पुष्कलां निर्व्याजं तस्यात्मविषये, सौहृदमात्मनस्तस्मिन् विषये, विचक्षणेति । परीक्षणे विचक्षणा = कुशला ॥ ४४ ॥

इति विशीर्णप्रतिसन्धानं षट्पञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां वैशिके षष्ठेऽधिकरणे विशीर्णप्रतिसन्धानं चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

त्रिविधा वेश्या—एकपरिग्रहा, अनेकपरिग्रहा, अपरिग्रहा चेति, तत्र पूर्वस्या लाभ उक्तः, द्वितीयां वक्ष्यति, तृतीयाया विना परिग्रहमनेकस्माल्लभमानाया लाभविशेषा उच्यन्ते,

तत्रापरिग्रहकारणमाह—

गम्यबाहुल्ये बहु प्रतिदिनं च लभमाना नैकं प्रतिगृह्णीयात् ॥१॥

गम्येति । यदा गम्या बहवस्तेभ्यः स्पर्धया बहु लभते, प्रतिदिनं चैकैकमभिगच्छन्ती तदा नैकं प्रतिगृह्णीयात्, स हि बहु प्रतिदिनञ्च न ददाति ॥ १ ॥

यद्येवमनियतो लाभः ततश्च कश्चित्स्वल्पमपि दद्यात् तद्ग्रहणे चान्येऽपि तावन्मात्रकमेव दद्युरित्याह—

देशं कालं स्थितिमात्मनो गुणान्सौभाग्यं चान्याभ्यो न्यूनातिरिक्ततां चावेक्ष्य रजन्यामर्घं स्थापयेत् ॥ २ ॥

देशं सम्पन्नमितरं वा, कालं यत्र काम उद्भूतशक्तिरनुद्भूतशक्तिर्वा, स्थितिः = देशप्रवृत्तिः, यथाऽपरकार्यं सेवमानस्यैकगुणः पूर्वकायमपि द्विगुणः, आत्मनो गुणान्रूपवैदग्ध्यादीन् सतोऽसतो वा, तथा सौभाग्यम्, अन्याभ्य इति । वेश्याभ्यः स्थानमानाभ्यामात्मनो न्यूनत्वं चाधिक्यं चावेक्ष्य तदनुरूपं रजन्यामर्घं स्थापयेद्, इयमेकां रात्रिमियता शेत इति ॥२॥

तत्र यदाऽवस्थापितेनार्घेण गम्य एव स्वदूतसम्प्रेषणेन भाणयति सिद्धं कार्यं, नो चेत्तत्राह—

गम्ये दूतांश्च प्रयोजयेत् तत्प्रतिबद्धांश्च, स्वयं प्रहिणुयात् ॥३॥

तत्प्रतिबद्धान् = गम्यप्रतिबद्धान्, प्रयोजयेदभिप्रायजिज्ञासाऽर्थं, विदिताभिप्राया तु स्वयं प्रहिणुयात् प्रेषयेदात्मीयानित्यर्थः ॥ ३ ॥

दूतसम्प्रेषणाद्गम्यसम्प्रयागे रजन्यर्घलाभः, तस्मान्नियमितादधिको-

योऽनुरागाल्लभ्यते स लाभातिशयः, तं चेरादैव लभते भद्रकमेव नो चेदत्राह—

द्वित्रिश्चतुरिति लाभातिशयग्रहार्थमेकस्यापि गच्छेत् परिग्रहकल्पं सकलं च चरेत् ॥ ४ ॥

द्वीति । इतिशब्दो विकल्पार्थः, द्वौ त्रींश्चतुरो वा वारानेकस्यापि मूलं गच्छेत्, परिग्रहकल्पं सकलं चेति । तावत्सु दिवसेष्वन्यनिरपेक्षाऽनुरञ्जनविधिमाचरेदित्यर्थः ॥ ४ ॥

इदानीन्नियमितमतिशयवन्तं रजन्यर्घलाभमधिकृत्यार्थितया द्रव्यस्वरूपतो गम्यतश्च विशेषमाह—

गम्ययौगपद्ये तु लाभसाम्ये यद्द्रव्यार्थिनी स्यात्तद्दायिनि विशेषः प्रत्यक्ष इत्याचार्याः ॥ ५ ॥

गम्येति । यदि बहवो गम्या युगपदुपस्थिता एको हिरण्यमपरस्तत्तुल्यमूल्यं दातुं, ततो येन द्रव्यार्थिनी तद्दायिनि गम्ये लाभविशेषः—प्रत्यक्षः, तेनार्थिनी स्यादित्याचार्याः ॥ ५ ॥

अप्रत्यादेयत्वात्सर्वकार्याणां तन्मूलत्वाद्धिरण्यद इति वात्स्यायनः ॥ ६ ॥

अप्रेति । हिरण्यमत्र लोकप्रतीत्या कपर्दकाः, ते च दत्ता गम्येन पुनर्न प्रत्यादीयन्ते, वस्त्रादिकं दत्त्वाऽपि किञ्चित्प्रत्यादत्ते, सर्वकार्याणामिति । तद्द्रव्यमन्यच्च कार्यं सर्वं हिरण्यमूलं, तेन लभ्यमानत्वात्, तेन तत एव विशेषः, तस्मात्तत्रैवार्थित्वं कर्तव्यम् ॥ ६ ॥

सुवर्णरजतताम्रकांस्यलोहभाण्डोपस्करास्तरणप्रावरणवासोविशेषगन्धद्रव्यकटुकभाण्डघृततैलधान्यपशुजातीनां पूर्वपूर्वतो विशेषः ॥ ७ ॥

सुवर्णेति । सुवर्णरजते घटिते अघटिते वा, ताम्रकांस्यलोहैर्घटितं भाण्डोपस्करम्, आस्तरणं = तूलिकादि, प्रावरणं = कम्बलादि, वासोविशेषः क्षौमादिः, गन्धद्रव्यं = चन्दनादि, कटुकं = मरिचादि, भाण्डः = पट्टखट्वाऽऽदिः, पूर्वपूर्वत इति । क्षुद्रपशुजातेर्धान्यं ततस्तैलादिरित्यादिना विशेषः ॥ ७ ॥

पत्तनसाम्याद्वा द्रव्यसाम्ये मित्रवाक्यादातिपातित्वादायतितो गम्यगुणतः प्रीतितश्च विशेषः ॥ ८ ॥

पत्तनसाम्याद्वेति । यद्वा गृहस्वरूपानुरूप्येण विशेषः, द्रव्यसाम्य-

इति । यद्वा द्वावपि रूपतः प्रमाणस्तुल्यं द्रव्यं प्रयच्छतस्तत्र मित्त्रवचनमनुष्ठेयं, यत्र वा तदानीमदीयमानमतिपतति, यत्र चायतिः–प्रभावः पुरुषगुणा वा, यत्र गम्ये सति प्रीतिर्वा नायिकायाः, नायकस्य नायिकायां वेति ॥ ८ ॥

गम्यतो विशेषमाह—

रागित्यागिनोस्त्यागिनि विशेषः प्रत्यक्ष इत्याचार्याः ॥ ९ ॥

रागीति। रक्तात् त्यागिनो विशेषः प्रत्यक्षः, तदात्व एव द्रव्यप्राप्तेः॥९॥

शक्यो हि रागिणि त्याग आधातुं, लुब्धोऽपि हि रक्तस्त्यजति न तु त्यागी निर्बन्धाद्रज्यत इति वात्स्यायनः ॥ १० ॥

शक्य इति । रागिण्यत्यागिनि, रक्ते शक्यस्त्याग आधातुमुपायेन, कुत इत्याह–लुब्धोऽपि त्यजति द्रव्यं ददाति, निर्बन्धादिति । प्रयासेनापि न रज्यते तस्य तेजस्वित्वाद्, अरक्तस्तु न त्यजति ॥ १० ॥

तत्रापि धनवदधनवतोर्धनवति विशेषः, त्यागिप्रयोजनकर्त्रोः प्रयोजनकर्तरि विशेषः प्रत्यक्ष इत्याचार्याः ॥ ११ ॥

तत्रापि धनवदधनवतोरिति । रागित्यागिनोर्यो धनवान्स विशिष्यते नेतरो निर्धनः, प्रयोजनकर्तरीति । नायिकायाः कार्यस्य यः कर्ता तस्मिन्नत्यागिनि विशेषः प्रत्यक्षः, तदात्व एव कार्यकरणात्, त्यागी तु दास्यतीति न प्रत्यक्षः ॥ ११ ॥

प्रयोजनकर्ता सकृत्कृत्वा कृतिनमात्मानं मन्यते त्यागी पुनरतीतं नापेक्षत इति वात्स्यायनः ॥ १२ ॥

सकृत्कृत्वेति । एकवारं कृत्वा, कृतिनमिति । कृतमस्याः कार्यं किमपरं करिष्यामीति, अतीतमिति । दत्तमेवास्यै न पुनर्ददामीति नाक्षेपते त्यागशीलत्वात् ॥ १२ ॥

तत्राप्यायतितो विशेषः ॥ १३ ॥

आयतित इति । यदा तत्प्रयोजनमधीरितमवपतति तदा तत एव विशेषः ॥ १३ ॥

कृतज्ञत्यागिनोस्त्यागिनि विशेषः प्रत्यक्ष इत्याचार्याः ॥१४॥

कृतज्ञात् त्यागिनि विशेषः प्रत्यक्षो द्रव्यदर्शनाद्, न तु कृतज्ञे तस्यात्यागित्वात् ॥ १४ ॥

चिरमाराधितोऽपि त्यागी व्यलीकमेकमुपलभ्य, प्रतिगणिकया वा मिथ्यादूषितः, श्रममतीतं नापेक्षते, प्रायेण हि तेजस्विन·

ऋजवोऽत्याहताश्च त्यागिनो भवन्ति, कृतज्ञस्तु पूर्वश्रमापेक्षी न सहसा विरज्यते परीक्षितशीलत्वाच्च न मिथ्या दूष्यत इति वात्स्यायनः ॥ १५ ॥

चिरमिति । दीर्घकालम्, आराधितोऽपि कान्तानुऽवृत्त्या, व्यलीकं नायिकाऽपराधमुपलभ्य, मिथ्यादूषित इति । मिथ्यैव दोषं ग्राहितः सदैवेयं व्यलीकं कुरुत इति, श्रममतीतमाराधनक्लेशं नापेक्षते, कुत इत्याह—प्रायेण हीति । बाहुल्येन त्यागिनां तेजस्वितादयस्त्रयो धर्माः संभवन्ति, तत्र तेजस्वितया व्यलीकं नोपेक्षन्ते, ऋजुतया मिथ्यादोषं ग्राह्यन्ते, अत्याहृतत्वाच्छ्रमं नापेक्षन्ते, ततश्च कथं दातारः, पूर्वश्रमापेक्षीति । कृतज्ञत्वादेव सहसा न विरज्यते व्यलीकमुपलभ्यापि, परीक्षितशीलत्वाच्चेति । कृतज्ञतयैव परीक्षणस्वभावत्वान्न मिथ्यैव दोषं ग्राह्यते ॥ १५ ॥

तत्राप्यायतितो विशेषः ॥ १६ ॥

तत्रेति । स्पष्टम् ॥ १६ ॥

यत्र प्रभावोऽस्ति यथाऽर्थोपगमनहेतुस्तथा मित्रवचनमनर्थप्रतीघातोऽर्थसंशयश्च तेषां विशेषमाह—

मित्रवचनार्थागमयोरर्थागमे विशेषः प्रत्यक्ष इत्याचार्याः ॥१७॥

मित्रवचनादर्थः प्रत्यक्षस्तस्य दृश्यमानत्वाद्, अन्यत्र तु मित्रवचनमेव केवलम् ॥ १७ ॥

सोऽपि ह्यर्थागमो भविता, मित्रं तु सकृद्वाक्ये प्रतिहते कलुषितं स्यादिति वात्स्यायनः ॥ १८ ॥

सोऽप्यर्थागमः, भविता = भविष्यति, प्रतिहत इत्यननुष्ठिते, कलुषितं रोषितं स्यात्, ततश्च तत्प्रतिबद्धकार्यहानिरेव स्यात् ॥ १८ ॥

तत्राप्यतिपाततो विशेषः ॥ १९ ॥

अतिपातत इति । यदा तदानीमुपेक्षितोऽर्थोऽतिपतति तत एव विशेषः ॥ १९ ॥

मित्त्रं कलुषितं स्यादिति चेदाह—

तत्र कार्यसंदर्शनेन मित्रमनुनीय श्वोभूते वचनमस्त्विति ततोऽतिपातिनमर्थं प्रतिगृह्णीयात् ॥ २० ॥

तत्रेति । कार्यसंदर्शनेनेति । यन्मम कार्यं तत्तवापि कार्यं चेदिदं महदुपस्थितमतिपतति त्वद्वचनं च श्वः कर्तास्मीत्यनुनयपूर्वमुक्त्वा प्रतिगृह्णीयात् ॥ २० ॥

अर्थागमानर्थप्रतीघातयोरर्थागमे विशेषः प्रत्यक्ष इत्याचार्याः ॥२१॥

अर्थागमे विशेषः प्रत्यक्ष इति । दृश्यमानत्वात् ॥ २१ ॥

अर्थः परिमितावच्छेदोऽनर्थः पुनः सकृत्प्रसृतो न ज्ञायते-क्वावतिष्ठत इति वात्स्यायनः ॥ २२ ॥

अर्थः परिमितावच्छेद इति । अस्यावच्छेद इयत्ता सा परिमिता स्वल्पा रजन्यर्घस्यानतिशयात्, सकृत्प्रसृत इति । अखण्डितप्रसरत्वादेकपुरुषप्रसृतो न ज्ञायते क्वावतिष्ठते किं मूलघाते शाखाघाते वेति, अत्र मधुबिन्दूपाख्यानमुदाहरणम् ॥ २२ ॥

तत्रापि गुरुलाघवकृतो विशेषः ॥ २३ ॥

गुरुलाघवकृत इति । लघोरनर्थात्प्रतिकर्त्तव्याद् गुरुरनर्थो विशिष्यते लघुश्चेद् गुरुरनर्थ इति ॥ २३ ॥

एतेनार्थसंशयादनर्थप्रतीकारे विशेषो व्याख्यातः ॥ २४ ॥

एतेनेति । अनन्तरोक्तेन पूर्वोत्तरपक्षेण, एकस्मादर्थः स्यान्न वेति संशयः, अन्यस्मादनर्थप्रतीकारः, तदाऽर्थसंशये विशेषः प्रत्यक्षः, तत्र हि संशयितेऽपि लोकस्य प्रवर्तनात्, परिमितावच्छेदोऽर्थोऽनर्थः पुनः सकृत्प्रसृतो न ज्ञायते क्वावतिष्ठत इति, अत्रैव विशेषः, न लघोरनर्थात्प्रतिकर्तव्याद् गुरावर्थे संशयिते विशेष इति व्याख्यातः ॥२४॥

एवं द्विविधेन रजन्यर्घेण विशेषितेन यदुपचितं धनं स प्रकृष्टो नाम लाभातिशयः प्रधानार्थस्य साधनाद्, अतस्तद्द्वारा कर्त्तव्यं दर्शयन्नाह—

देवकुलतडागारामाणां करणं, स्थलीनामग्निचैत्यानां निबन्धनं, गोसहस्राणां पात्रान्तरितं ब्राह्मणेभ्यो दानं, देवतानां पूजोपहारप्रवर्तनं, तद्व्ययसहिष्णोर्वा धनस्य परिग्रहणम्, इत्युत्तमगणिकानां लाभातिशयः ॥ २५ ॥

देवेति । त्रिविधा वेश्या—गणिका रूपाजीवा कुम्भदासी च, ताः प्रत्येकमुत्तममध्यमाधमभेदात्त्रिविधाः, तडागं = पुष्करिणी, स्थलीनामिति । निम्नेषु प्रदेशेषु लोकागमार्थं सेतूनां निबन्धनम्, अग्निचैत्यानामिति । स्थानाद्बहिर्मृद्भिर्गेहानि कृत्वा सर्वे रसगन्धव्रीहिरत्नैरापूर्याग्नये समुत्सृज्यन्ते, पात्रान्तरितमिति । वेश्याद्रव्यस्याप्रतिग्राह्यत्वादन्यहस्तेन दानं, देवतापूजनानां प्रवर्तनं घटानिबन्धेन, उपहाराणां भक्ष्यादीनां, देवतांशमुद्दिश्य सर्वमेतत्प्रधानभूतोऽर्थः, तद्व्ययसहिष्णोरिति ।

तस्मिन्प्रधानेऽर्थे साध्ये यद्व्ययं सहते धनं तस्य परिग्रहणमयं प्रकृष्टो-लाभातिशयः, उत्तमगणिकानामिति । रूपादिभिर्नायिकागुणः, काला-दिभिश्चान्विता उत्तमगणिकाः, गुणानां च पादार्धाभ्यां शून्या मध्य-माधमाः ॥ २५ ॥

सार्वाङ्गिकोऽलंकारयोगः, गृहस्योदारस्य करणं, महार्हैर्भाण्डैः-परिचारकैश्च गृहपरिच्छदस्योज्ज्वलतेति, रूपाजीवानां लाभाति-शयः ॥ २६ ॥

सार्वाङ्गिक इति । सर्वेष्वङ्गेषु यो भवति, उदारस्येति । संस्थानतः-संस्कारतश्चेति, महार्हैरिति । लोहताम्रराजतैः, परिचारकैरिति । यथा-स्वं कर्मणा परिचरन्ति ये, गृहपरिच्छदस्येति । गृहसंविधानकस्योज्ज्व-लतेत्ययं प्रधानार्थः, तद्व्ययसहिष्णोर्धनस्य परिग्रहणमिति वर्तते, अयं प्रकृष्टो लाभातिशयः, रूपाजीवानामिति । उत्तमानां, सत्स्वपि गुणेषु रूप-मेवाजीवो यासां, रूपस्य प्रधानत्वात् कलास्तु न सन्ति, तत्र रूपस्य गुणानां पादार्धहान्या मध्यमाधमाः, अत्र यः प्रधानार्थः स गणिका-नामस्त्येव ॥ २६ ॥

नित्यं शुक्लमाच्छादनमपक्षुधमन्नपानं नित्यं सौगन्धिकेन ताम्बू-लेन च योगः सहिरण्यभागमलंकरणमिति कुम्भदासीनां लाभा-तिशयः ॥ २७ ॥

नित्यमिति । आच्छादनमिति । परिधानीयं प्रावरणीयं च सदैव शु-क्लम्, अपक्षुधमिति । अकदर्थितत्वात्क्षुधमपनयति, सौगन्धिकेन सुग-न्धिसमूहेन चतुःसमकादिना ताम्बूलेन च नित्यं योगः, एतत्सर्वं गणि-कानां रूपाजीवानां चास्त्येव, विशेषमाह—सहिरण्यभागमिति । सुव-र्णलेशेन युक्तमित्यर्थः, अयं स्वप्रधानार्थं, तद्व्ययसहिष्णोर्धनस्य परि-ग्रहणमिति वर्तते, अयं च कर्मोपलक्षणार्थं, कर्मकरीणामित्यर्थः, आसां-चोत्तममध्यमाधमकर्मापेक्षयैव तथाविधत्वं द्रष्टव्यम् ॥ २७ ॥

एतेन प्रदेशेन मध्यमाधमानामपि लाभातिशयान्सर्वासामेव योजयेदित्याचार्याः ॥ २८ ॥

एतेनेति । प्रदेशेनेति । उत्तमानां लाभातिशयमार्गेण, मध्यमाधमाना-मपीति । गणिकारूपाजीवाकुम्भदासीनां, लाभातिशयानिति । प्रकृष्टा-पेक्षं मध्यमाधमान्योजयेत्, तथा चोक्तम्—

'यन्निशाऽर्घार्जितं द्रव्यं प्रधानार्थस्य साधकम् ।
व्यवस्थानं हि वेश्यानां सलाभस्तूत्तमो मतः' इति ॥ २८ ॥

देशकालविभवसामर्थ्यानुरागलोकप्रवृत्तिवशादनियतलाभादियमवृत्तिरिति वात्स्यायनः ॥ २९ ॥

देशेति । देशस्य सुसंपन्नस्यासंपन्नस्य वा, कालस्य सुभिक्षस्य दुर्भिक्षस्य वा, विभवस्यात्मीयस्य महतोऽल्पस्य वा, सामर्थ्यस्याविपन्नशक्तेर्महत्या इतरस्या वा, गम्यानुरागस्य महतोऽल्पस्य वा, लोकप्रवृत्तेर्व्यवस्थायाः, वशादनियतो लाभस्तासां, ततश्च नेयं वृत्तिरियताऽप्रधानार्थद्वारेण या निर्दिष्टा, कदा चित्ततो न्यूनाऽधिका वा सम्भवति ॥२९॥

एवं च कार्यनिरपेक्षया कश्चित्स्वल्पोऽपि लाभो गृह्यते कश्चिन्नैव कश्चित्तदात्वे गृह्यते कश्चिदायत्यां यदाह—

गम्यमन्यतो निवारयितुकामा, सक्तमन्यस्यामपहर्तुकामा वा, अन्यां वा लाभतो वियुयुक्षमाणा, गम्यसंसर्गादात्मनः स्थानं वृद्धिमायतिमभिगम्यतां च मन्यमाना, अनर्थप्रतीकारे वा साहाय्यमेनं कारयितुकामा, सक्तस्य वाऽन्यस्य व्यलीकार्थिनी पूर्वोपकारमकृतमिव पश्यन्ती, केवलप्रीत्यर्थिनी वा, कल्याणबुद्धिः, अल्पमपि लाभं प्रतिगृह्णीयात् ॥ ३० ॥

गम्यमिति । अन्यत इति । अन्यस्या नायिकातो निवारयितुकामा माऽन्यत्र यासीदिति, अपहर्तुकामा मद्द्वेषिण्यां सक्तं त्यक्ष्यामीति, लाभत इति । गम्यसम्बन्धिनो लाभाद्, वियुयुक्षमाणा वियोक्तुमिच्छन्ती, गम्यसंसर्गादिति । येन गम्येन सह संसर्गस्तस्मात् स्थानं जनसंसदि विशिष्टदेशावस्थानं मन्यमाना वृद्धिं प्रकृष्टाख्यां लाभातिशयमायतिं प्रभावमभिगम्यतामन्येषां नायकानामभिगमनीयत्वम्, अनर्थप्रतीकारे वेति । अनर्थं प्रतिकर्तुं सहायमेनं कर्तुकामा, सक्तस्य वेति । यस्तस्यां सक्तोऽन्यत्र वर्तमानस्तेन यः पूर्वमुपकारः कृतस्तं स्वल्पत्वादकृतमिव पश्यन्ती, तस्यातीतस्य व्यलीकार्थिनी, अपराधं कर्तुकामाऽल्पमपि गृह्णीयाद् येनायमपराद्धमनयेति सक्तस्त्यजति, केवलप्रीत्यर्थिनी वेति । प्रीत्यैव केवलमर्थिनी नार्थैः, कल्याणबुद्धिरिति । अविसंवादिका ॥ ३० ॥

यदाऽऽयतिमनर्थप्रतीकारे वेत्युभयमुक्तम्, अत्र विशेषमाह—

आयत्यर्थिनी तु तमाश्रिताऽनर्थं प्रतिचिकीर्षन्ती नैव प्रतिगृह्णीयात् ॥ ३१ ॥

आयेति । यदाऽऽयतिर्महती स्यादनर्थश्च न महान्प्रातकर्तव्यस्तदा नैव प्रतिगृह्णीयात् ॥ ३१ ॥

त्यक्ष्याम्येनमन्यतः प्रतिसन्धास्यामि, गमिष्यति दारैर्योक्ष्यते, नाशयिष्यत्यनर्थान्, अङ्कुशभूत उत्तराध्यक्षोऽस्यागमिष्यति स्वामी पिता वा, स्थानभ्रंशो वाऽस्य भविष्यति, चलचित्तश्चेति मन्यमाना तदात्वे तस्माल्लाभमिच्छेत् ॥ ३२ ॥

त्यक्ष्याम्येनं तदात्वे ततो लाभं गृहीत्वाऽन्यतः प्रतिसन्धास्यामि तस्याधिकत्वाद्, गमिष्यति दारैर्योक्ष्यते, गतः कृतदारपरिग्रहो वा कथं दास्यति तस्य परवशप्रायत्वाद्, नाशयिष्यत्यर्थानर्थात्स्वकीयान्, अस्येति । गम्यस्य कर्मणि स्वामी पिता वाऽङ्कुशभूत इति दमयिता, उत्तराध्यक्षः = उपरिकर्त्ता, आगमिष्यति तदाऽयमस्वतन्त्रः कथं दास्यतीति, स्थानभ्रंशो वेति । यस्मिन्स्थानेऽस्याधिपत्यं तस्माद्विच्युतिः, चलचित्तो वा प्रतिज्ञायापि न दास्यति, तदात्व इति । तदानीम् ॥ ३२ ॥

प्रतिज्ञातमीश्वरेण प्रतिग्रहं लप्स्यते, अधिकरणं स्थानं वा प्राप्स्यति, वृत्तिकालोऽस्य वाऽऽसन्नः, वाहनमस्यागमिष्यति, सस्यमस्य पक्ष्यते, कृतमस्मिन्न नश्यति, नित्यमविसंवादको वेत्यायत्यामिच्छेत् परिग्रहत्वं चास्याचरेत् ॥ ३३ ॥

प्रतिग्रहं लप्स्यत इति । स ह्यक्लेशेनापलब्धार्थो दास्यति, अधिकरणमक्षपटलादिकं स्थानं यत्राधिपत्यं करिष्यति, वृत्तिकालो वेति । सेवकत्वाज्जीवनकालोऽस्यासन्नो राजकुले ग्रामविलग्नस्य वर्तमानत्वाद्, वाहनं यानपात्रमागमिष्यति वाणिज्यधर्मे स्थितत्वात्, स्वराष्ट्रादिसस्यमस्य पक्ष्यत इति, कृषिवृत्तित्वात्, ततश्च पक्वं सस्यं दास्यति, कृतमस्मिन् न नश्यति, अभिगमनं न निष्फलं, कृतज्ञत्वाद्, नित्यमविसंवादको वा, प्रतिज्ञायावश्यं दास्यति, आयत्यामिति । अनागतकाले, परिग्रहत्वं चास्याचरेत् तत्रार्थस्य लिप्स्यमानत्वात् ॥ ३३ ॥

भवन्ति चात्र श्लोकाः—

कृच्छ्राधिगतवित्तांश्च राजवल्लभनिष्ठुरान् ।
आयत्यां च तदात्वे च दूरादेव विवर्जयेत् ॥ ३४ ॥

कृच्छ्राधिगतवित्तांश्चेति । क्लेशेनार्जितधनान्, राजवल्लभनिष्ठुरानिति । ये राज्ञ इष्टा निष्ठुराः क्रूरा येषां नाकरणीयमस्ति, आयत्याञ्च तदात्वे चासत्यपि लोभप्रतिग्रहणकारणे दूरादेव विवर्जयेद्, न तद्दर्शनं सम्भाषणं च कुर्य्यादित्यर्थः, प्रायशस्तेभ्योऽनर्थसंभवात् ॥ ३४ ॥

केषां तर्हि ? उपादानमित्याह—

अनर्थो वर्जने येषां गमनेऽभ्युदयस्तथा ।
प्रयत्नेनापि तान्गत्वा सापदेशमुपक्रमेत् ॥ ३५ ॥

अनर्थ इति । यांस्त्यक्त्वाऽन्यस्मादनर्थोऽभिगमने चाभ्युदयस्तानुभयप्रयोजनत्वात्, प्रयत्नेनापि तान्गत्वेति । अभिगम्य, सापदेशमुपक्रमेदिति । यत्किंचिन्निमित्तीकृत्यानभिगच्छन्तमप्यभिगच्छेदित्यर्थः, वृत्ताद्यभावादात्मनेपदं न भवति ॥ ३५ ॥

येष्वर्थ एव प्रयोजनं तानाह—

प्रसन्ना ये प्रयच्छन्ति स्वल्पेऽप्यगणितं वसु ।
स्थूललक्षान्महोत्साहांस्तान्गच्छेत्स्वैरपि व्ययैः ॥ ३६ ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे
लाभविशेषाः पञ्चमोऽध्यायः ।

प्रसेति । स्थूललक्षाः = महेच्छाः, महोत्साहा महानुत्साहो येषां, महत्त्वं चोत्साहस्य शौर्यादिभिः, ते तुष्टाः स्वल्पेऽपि वेश्याविषये प्रभूतं द्रव्यं प्रयच्छन्ति तस्मात्तान्गच्छेत् स्वैरपि व्ययैरुपचारलक्षणैः ॥ ३६ ॥

इति लाभविशेषाः सप्तपञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां यशोधररचितायां जयमङ्गलाऽऽख्यायां वैशिके
षष्ठेऽधिकरणे लाभविशेषाः पञ्चमोऽध्यायः ।



## षष्ठोऽध्यायः ।

शास्त्रकार एव प्रकरणसंबन्धमाह—

अर्थानाचर्यमाणाननर्था अप्यनूद्भवन्त्यनुबन्धाः संशयाश्च ॥१॥

अर्थेति । अर्थानिति लाभविशेषाननन्तरोक्तान्, आचर्यमाणान्साध्यमानान्, अपरिग्रहाया वेश्याया इत्यर्थः, अनर्था इति । अर्थविरुद्धाः, अनूद्भवन्तीति, 'अनुर्लक्षणे' इत्यनोः कर्मप्रवचनीयत्वेऽर्थानिति द्वितीया, अर्थान्साध्यमानांल्लक्ष्यीकृत्यानर्था अपि स्वहेतुभ्य उत्पद्यन्ते, तत्र यदाऽर्था एवोत्पद्यन्ते तदा निरनुबन्धोऽर्थपक्षः, यदाऽर्थं बाधित्वाऽनर्थास्तदा निरनुबन्धोऽनर्थपक्षः, अनुबन्धा इति । अर्थानर्थयोः संशयाश्चोभयोरेव गृह्यन्ते, तस्मात्तेषु हानोपादानार्थं तद्विचारो युक्तः, इत्यर्थानर्थानुबन्धसंशयविचारा उच्यन्ते ॥ १ ॥

तत्रार्थास्तदनुबन्धाश्चोपादेया एव, तत्संशयाश्च केषांचित्प्रवृत्तेः, येऽनर्थास्तदनुबन्धास्तत्संशयाश्च तेषामनुपादेयत्वादुत्पत्तिकारणान्याह—

ते बुद्धिदौर्बल्यादतिरागादत्यभिमानादतिदम्भादत्यार्जवादतिविश्वासादतिक्रोधात्प्रमादात्साहसाद्दैवयोगाच्च स्युः ॥ २ ॥

त इति । अनर्थादयः, बुद्धिदौर्बल्यादिति । ऊहापोहतत्त्वाभिनिवेशाविवेकाभ्यां वैकल्यं, बुद्धिदौर्बल्यं, रागः = सक्तिः, अभिमानः = अहंकारः, दम्भः = छद्म, आर्जवम् = ऋजुता, विश्वासः = विस्रम्भः, क्रोधः = कोपः, एते कार्यवशाद्युक्तितः प्रयुज्यमाना नैव दोषाय, आधिक्येन तु दोषायैवेत्यतिशब्देनाह, प्रमादः = योऽन्यत्र व्यासङ्गः, साहसम् = अविमृश्यकारित्वम्, एतन्नवधा मानुषं निमित्तं, दैवयोगादिति । दैवेनाशुभकर्मसंज्ञकेन योगादित्यर्थः ॥ २ ॥

तेषां फलं कृतस्य व्ययस्य निष्फलत्वम्, अनायतिः, आगमिष्यतोऽर्थस्य निवर्तनम्, आप्तस्य निष्क्रमणं, पारुष्यस्य प्राप्तिः, गम्यता, शरीरस्य प्रघातः, केशानां छेदनं, यातनम्, अङ्गवैकल्यापत्तिः ॥३॥

तेषां बुद्धिदौर्बल्यादीनाम्, अथ वा तेषामित्यनर्थानां सानुबन्धानां तत्संशयानां च फलमिति परिणामः, अनर्थ एव हि त्रिपरिणामरूपेण संशय्यमानत्वादनर्थसंशयानामपि फलं, व्ययस्येति । गम्याभिगमनाय कृतस्य, अनायतिः = प्रभावहानिः, आगमिष्यत इति । अधिकृते व्यये लप्स्यमानस्य निवर्तनमिति बोद्धव्यम्, आप्तस्येति । प्राप्तस्यार्थस्य निष्क्रमणमन्येन गृह्यमाणत्वात्, पारुष्यस्येति । दुरुक्तस्य, गम्यता = अपरिचेयता, शरीरस्य प्रघातः = प्राणैर्वियोगः, केशानां, छेदनं = लवनं, यातनं = बन्धनं ताडनम्, अङ्गवैकल्यं = कर्णनासाविच्छेदः ॥३॥

तस्मात्तानादित एव परिजिहीर्षेदर्थभूयिष्ठांश्चोपेक्षेत ॥ ४ ॥

तान्बुद्धिदौर्बल्यादीनादित एव परिहर्तुमिच्छेद्, यावदर्थहेतूनुपायान्न प्रयुङ्क्तेऽन्यथा ह्यर्थं बाधित्वाऽनर्थोऽपि स्यात् कारणानां संनिहितत्वाद्, अर्थभूयिष्ठांश्चेति । अर्थबहुलाननर्थहेतूनुपेक्षेत, तत्र ह्यर्थहेतूनामेवोपायानां बाहुल्यात् ॥ ४ ॥

इदानीं निरनुबन्धान्विचारयितुमाह—

अर्थो धर्मः काम इत्यर्थत्रिवर्गोऽनर्थोऽधर्मो द्वेष इत्यनर्थत्रिवर्गः ॥५॥

अर्थ इति । अर्थत्रिवर्गो ह्यर्थ इति कृत्वा तद्विरुद्धोऽनर्थत्रिवर्गः, ततश्चार्थानर्थानुबन्धसंशयविचारा इत्यस्मिन्सूत्रे धर्माधर्मयोः कामद्वेषयोरपि संग्रहः सिद्धः, अनेन निरनुबन्धपक्ष उक्तो वेदितव्यः ॥ ५ ॥

तेष्वाचर्यमाणेष्वन्यस्यापि निष्पत्तिरनुबन्धः ॥ ६ ॥

तेष्विति । अर्थादिषु षट्सु साध्यमानेषु, अन्यस्यापीति । न केवलं-साध्यमानस्यान्यस्यापि सजातीयस्य विजातीयस्य वा पञ्चानामन्यतम-स्योत्पत्तिरनुबन्ध इति ॥ ६ ॥

संदिग्धायां तु फलप्राप्तौ स्याद्वा न वेति शुद्धसंशयः ॥ ७ ॥

अभिगमने क्रियमाणेऽर्थादिफलस्य संप्राप्तौ संदिग्धायां स्याद्वा न वेति यो विकल्पः स शुद्धसंशयः एकस्यैव भावाभावाभ्यां संशय्यमा-नत्वाद् ॥ ७ ॥

इदं वा स्यादिदं वेति संकीर्णः ॥ ८ ॥

इदं वा स्यादिदं वेति सङ्कीर्णः संशयः, द्वयोरन्यतरोत्पत्त्या विकल्प-स्य संकीर्यमाणत्वात् ॥ ८ ॥

एकस्मिन् कार्ये क्रियमाणे कार्यद्वयस्योत्पत्तिरुभयतो योगः ॥९॥

एकस्मिन्कार्य इति । अर्थादिसाधने कार्ये क्रियमाणे, द्वयस्येति । अर्थादीनां षण्णामन्यतमस्य सजातीयस्य विजातीयस्य वा द्वयस्योत्प-त्तिरुभयतो योग इत्युभाभ्यां द्वयस्योत्पत्तिः ॥ ९ ॥

समन्तादुत्पत्तिः समन्ततो योग इति तानुदाहरिष्यामः ॥१०॥

समन्तादिति । एकस्मिन् क्रियमाणे कार्ये बहुभ्योऽर्थादीनामुत्पत्तिः, समन्ततो योगः, अस्य योगद्वयस्य निरनुबन्धपक्ष एवान्तर्भावः, तानिति । निरनुबन्धादीनुदाहरणानुदाहरिष्यामः, स्पष्टोऽर्थः ॥ १० ॥

ननु च त्रिवर्गोऽर्थोऽनर्थश्च तयोः स्वरूपतोऽपरिज्ञाने कथमुदाहरण-मित्याह—

विचारितरूपोऽर्थत्रिवर्गः, तद्विपरीत एवानर्थत्रिवर्गः ॥ ११ ॥

विचारितरूप इति । त्रिवर्गप्रतिपक्षो निरूपितस्वभाव इत्यर्थः, तद्वि-रुद्धत्वादनर्थोऽपि विचारितरूप इत्याह—तद्विपरीत इति ॥ ११ ॥

तत्रार्थानर्थयोस्त्रिवर्गयोरर्थानर्थावाद्यावधिकृत्याह—

यस्योत्तमस्याभिगमने प्रत्यक्षतोऽर्थलाभो ग्रहणीयत्वमायति-रागमः प्रार्थनीयत्वं चान्येषां स्यात्सोऽर्थोऽर्थानुबन्धः ॥ १२ ॥

यस्येति । उत्तमादिभेदात्त्रिविधो नायको व्याख्यातः, तत्र यः सम-स्तगुणस्तस्योत्तमगुणस्याभिगमने, प्रत्यक्षतोऽर्थलाभ इति । तत एव प्रत्य-क्षात्तदानीमर्थलाभः, ग्रहणीयत्वमिति । लोकग्राह्यत्वमुपादेयत्वम्, आय-तिः=प्रभावः, आगमस्तत्कालीयानां प्रार्थनीयत्वमन्येषां गम्यादीनां,

सोऽर्थ इति। योऽसौ तदात्वे लाभः, अर्थानुबन्ध इति। ग्रहणीयत्वादिभिरर्थैरनुबन्धो यस्य, अयं सजातीयानुबन्धः॥ १२॥

लाभमात्रे कस्य चिदन्यस्य गमनं सोऽर्थो निरनुबन्धः॥१३॥

लाभमात्र इति। तदात्वे यो लाभस्तन्मात्रमेव निमित्तं कस्य चिदिति। लोके यो गुणैर्दोषैर्वा न विवक्षितस्तस्याभिगमनमात्रोऽर्थो निरनुबन्धो, ग्रहणीयत्वाद्यभावात्॥ १३॥

अन्यार्थपरिग्रहे सक्तादायतिच्छेदनमर्थस्य निष्क्रमणं लोकविद्विष्टस्य वा नीचस्य गमनमायतिघ्नमर्थोऽनर्थानुबन्धः॥ १४॥

सक्तादिति। यः सक्तो निःसारत्वादन्यदीयमर्थमपहृत्य प्रयच्छति तस्मादन्यार्थस्य परिग्रहे, आयतिच्छेदनं प्रभावहानिर्दस्युना सह तिष्ठतीति, अर्थस्येति। पूर्वोपात्तस्य निष्क्रमणं चात्र द्रव्यस्य नागरकेण गृह्यमाणत्वाद्, लोकविद्विष्टस्य च चौर्यमकुर्वतोऽपि, नीचस्य वा जातिन्यूनस्य, गमनमायतिघ्नमिति। प्रभावं हन्ति, अत्रार्थोऽनर्थानुबन्धः, तदाऽर्थलाभस्यायतिच्छेदाद्यनर्थानुबन्धित्वाद् अयं विरुद्धानुबन्धः॥ १४॥

स्वेन व्ययेन शूरस्य महामात्रस्य प्रभवतो वा लुब्धस्य गमनं निष्फलमपि व्यसनप्रतीकारार्थं महतश्चार्थघ्नस्य निमित्तस्य प्रशमनमायतिजननं च सोऽनर्थोऽर्थानुबन्धः॥ १५॥

स्वेनेति। आत्मीयद्रव्यपरिक्षयेण गमनं निष्फलं लुब्धत्वान्न प्रयच्छति, तथाऽपि व्यसनप्रतीकारार्थं शत्रूपघातार्थं महामात्रस्य शूरत्वाद्, महतश्चार्थस्येति। अप्रयुक्तमर्थं साध्यमानं यस्मिन्महत्वान्निबध्य तिष्ठति तं प्रशमयति तस्य शूरस्यापि राजकुले लब्धप्रभावत्वाद्, आयतिजननं चेति। शूरस्य प्रभाववतो वा सम्पर्को लोके महतीमायतीं जनयति सोऽनर्थ इति। यः कृतो व्ययो निष्फलः, अर्थानुबन्धः, व्यसनप्रतीकारादिनाऽर्थेनानुबद्धत्वादयं विरुद्धानुबन्धः॥ १५॥

कदर्यस्य सुभगमानिनः कृतघ्नस्य वाऽतिसन्धानशीलस्य स्वैरपि व्ययैस्तथाऽऽराधनमन्ते निष्फलं सोऽनर्थो निरनुबन्धः॥१६॥

कदर्यस्येति। आत्मानं भृत्यांश्च पीडयित्वा योऽर्थान्सञ्चिनोति तस्य, सुभगमानिन इति। असुभगः सन्नात्मानं सुभगं यो मन्यते स न प्रयच्छति, यस्तु दुर्भगः सुभगमानी स केवलार्थो गम्य उक्तः, कृतघ्नस्य वेति। अकृतज्ञस्य, वाशब्दः पूर्वापेक्षया सर्वत्र योज्यः, अतिसन्धानशीलस्य छलनपरस्य, तथाऽऽराधनमिति। यथा स्वैरपि व्ययैरभि-

गमनं निष्फलं, तदनुरञ्जमप्यन्ते निष्फलं, सोऽनर्थ इति। यः कृतो व्ययो-निरनुबन्धोऽर्थानर्थाभ्यां निरनुबन्धत्वात् ॥ १६ ॥

कदर्यादेर्विशेषमाह—

**तस्यैव राजवल्लभस्य क्रौर्यप्रभावाधिकस्य तथैवाराधनमन्ते निष्फलं निष्कासनं च दोषकरं सोऽनर्थोऽनर्थानुबन्धः ॥ १७ ॥**

तस्यैवेति। क्रौर्यप्रभावाधिकस्येति। दोषत्रयमत्राधिकं, तथैवाराधनमिति। यथा स्वैर्व्ययैरभिगमनं निष्फलं कदर्यादीनामदातृत्वाद्, निष्कासनमददतां दोषकरं, ते हि निष्कासिता दोषत्रययुक्तत्वात्पारुष्यशरीरप्रघातादीननर्थान्कुर्युरित्यनर्थोऽनर्थानुबन्धः, अयं सजातीयानुबन्धः ॥ १७ ॥

**एवं धर्मकामयोरप्यनुबन्धान्योजयेत् ॥ १८ ॥**

एवमिति। एवमन्यानपि धर्मकामयोरनुबन्धान्योजयेत्, तत्र ब्राह्मणस्य गृहस्थस्यानुरक्तस्य मुमूर्षोर्गमनात्प्राणसंरक्षणं कुटुम्बसंधारणं गार्हस्थ्यधर्मप्रवर्तनं च धर्मो धर्मानुबन्धः, काममात्रं धर्मो निरनुबन्धः, तस्यैवाकृतस्नानभोजनस्य ब्राह्मणस्यातिव्यवायाद् धातुक्षये मुमूर्षुत्वाद् धर्मोऽधर्मानुबन्धः, अभिप्रेतस्य धनवतो भोगिनोऽभिगमने कामः कामानुबन्धः, रागापनयनमात्रेऽभिप्रेतस्य गमनं कामो निरनुबन्धः, अभिप्रेतस्य हरिद्रारागस्य गमनं कामो द्वेषानुबन्ध इति, अत्र निरनुबन्धाः षड्, विजातीयविरुद्धाभ्यामनुबन्धा द्वादश ॥ १८ ॥

**परस्परेण च युक्त्या सङ्कीरेदित्यनुबन्धाः ॥ १९ ॥**

परस्परेण च युक्त्येति। विरुद्धं त्यक्त्वा शेषाणां विजातीयानामन्योन्ययोगादित्यर्थः, तत्रार्थो धर्माधर्मकामद्वेषैः प्रत्येकमनुबद्धश्चतुर्विधः, तथाऽनर्थोऽपि, धर्मोऽर्थानर्थकामद्वेषः प्रत्येकमनुबद्धश्चतुर्विधः, तथाऽधर्मोऽपि, कामोऽर्थानर्थधर्माधर्मैः प्रत्येकमनुबद्धश्चतुर्विधः, तथा द्वेषोऽपि, इति चतुर्विंशतिः संकीर्णानुबन्धाः ॥ १९ ॥

शुद्धसंशयमधिकृत्याह—

**परितोषितोऽपि दास्यति न वेत्यर्थसंशयः ॥ २० ॥**

परीति। यदि तदात्वे न ददाति सुरतोपचारेण परितोषितोऽपि दास्यति, तत्राज्ञातदानशीलत्वाद्दद्यान्न वेत्यर्थसंशयः ॥ २० ॥

**निष्पीडितार्थमफलमुत्सृजन्त्या अर्थमलभमानाया धर्मः स्यान्न वेति धर्मसंशयः ॥ २१ ॥**

उत्सृजन्त्या इति । कामुकेभ्योऽङ्गानि दत्त्वाऽर्थार्जनं वेश्याया धर्मः, तथा हि–"यथास्वं वृत्तिर्धर्मः" इत्याचार्याः, तत्रार्थमलभमानाया निष्पीडितार्थस्योत्सर्जनमपि किं धर्मो न वेति संशयः ॥ २१ ॥

**अभिप्रेतमनुपलभ्य परिचारकमन्यं वा क्षुद्रं गत्वा कामः स्यान्न वेति कामसंशयः ॥ २२ ॥**

अभिप्रेतमत्र रुचिरं नायकं परिचारकमात्मीयमन्यं वा क्षुद्रं निकृष्टं गत्वा तयोरनभिप्रेतत्वादज्ञातकामत्वाच्च कामः स्याद्वा न वेति संशयः ॥ २२ ॥

**प्रभाववान् क्षुद्रोऽनभिमतोऽनर्थं करिष्यति न वेत्यनर्थसंशयः॥२३॥**

अनभिमत इति । अभिगन्तुमिच्छन् क्षुद्रत्वात्प्रत्याख्यातः, स हि राजकुले लब्धप्रभावत्वादनर्थं करिष्यति न वेति संशयः ॥ २३ ॥

**अत्यन्तानिष्फलः सक्तः परित्यक्तः पितृलोकं यायात्तत्राधर्मः स्यान्न वेत्यधर्मसंशयः ॥ २४ ॥**

सक्त इति । अनुरक्तोऽभिगन्तुमिच्छन् परित्यक्तो निष्फलत्वात्, पितृलोकं यायादिति । अवस्थाऽन्तरप्राप्तौ यमलोकं यायादिति सम्भाव्यते, तत्रेति । परित्यागेऽधर्मः स्यान्न वेति संशयः ॥ २४ ॥

**रागस्यापि विवक्षायामभिप्रेतमनुपलभ्य विरागः स्यान्न वेति द्वेषसंशय इति शुद्धसंशयाः ॥ २५ ॥**

रागस्याऽपि विवक्षायामिति । कामो न भविष्यतीति न विवक्षितं रागेण पीड्यमानत्वाद्, अभिप्रेतोऽपि नास्ति यमाश्रित्य स्यादित्याह— अभिप्रेतमनुपलभ्येति । केवलमेव वर्तमानाया विद्वेषः स्यान्न वेति संशयः, शुद्धसंशया इति । एकस्यैव भावाभावाभ्यां संशय्यमानत्वाद् ॥२५॥

**अथ संकीर्णाः ॥ २६ ॥**

अथेति । आनन्तर्ये, संकीर्णा निर्दिश्यन्ते, शुद्धानन्तरं हि संकीर्णस्योद्दिष्टत्वाद्, इदं वा स्यादिदं वेति 'कीर्ण इति ॥ २६ ॥

स च विरुद्धाविरुद्धाभ्यां; तत्र पूर्वमधिकृत्याह—

**आगन्तोरविदितशीलस्य वल्लभसंश्रयस्य प्रभविष्णोर्वा समुपस्थितस्याराधनमर्थोऽनर्थ इति संशयः ॥ २७ ॥**

आगन्तोरिति । कुतश्चिदागतस्याभिगमनेऽविदितशीलत्वादर्थोऽनर्थो वेति संशयः, तस्य चार्थितया समुपस्थितत्वादर्थः, वल्लभसंश्रयत्वात्प्रभविष्णुत्वाद्वाऽनर्थ इति कारणद्वयसंनिधानात्संशयः ॥ २७ ॥

**श्रोत्रियस्य ब्रह्मचारिणो दीक्षितस्य व्रतिनो लिङ्गिनो वा मां-**

दृष्ट्वा जातरागस्य मुमूर्षोर्मित्रवाक्यादानृशंस्याच्च गमनं धर्मोऽधर्म इति संशयः ॥ २८ ॥

श्रोत्रियस्येति । गृहस्थस्यापि क्रियावतः, ब्रह्मचारिण इति । प्रथमाश्रमस्य, दीक्षितस्य व्रतिन इति । श्रितव्रतस्य कियन्तं कालं गृहीतपराकादिव्रतस्य, लिङ्गिन इति । भौतादेशवतः, मुमूर्षोरिति । मर्तुमिच्छोः कामस्यावस्थाऽन्तरप्राप्तत्वाद्, मित्रवाक्यादिति । श्रोत्रियादीनां मित्रस्याभ्यर्थनावचनादानृशंस्याच्च करुणयाऽभिगमने, धर्मोऽधर्म इति । मा भूत्प्राणत्याग इति धर्मः; नियमभ्रंशः कृत इत्यधर्मः, तदुभयमपि कस्मान्न भवतीति चेद्, न, अन्यतरस्य बलीयस उत्पादनात् ॥ २८ ॥

लोकादेवाकृतप्रत्ययादगुणो गुणवान्वेत्यनवेक्ष्य गमनं कामो द्वेष इति संशयः ॥ २९ ॥

अकृतप्रत्ययादिति । अकृतनिश्चयाल्लोकात् , किमयं गुणवान्न वेति, स्वयमनवेक्ष्यानिश्चित्य केवलं लोकप्रवादाद् गुणवानित्यभिगमनादभिसरणे किं कामो द्वेषो वेति विरुद्धसंकीर्णास्त्रयः ॥ २६ ॥

अविरुद्धमधिकृत्याह—

संकिरेच्च परस्परेणेति संकीर्णसंशयाः ॥ ३० ॥

संकिरेच्चेति । तत्रार्थो धर्माधर्मकामद्वेषैश्चतुर्भिः प्रत्येकं विकल्पितश्चतुर्विधः, तथाऽनर्थोऽपि; धर्मोऽर्थानर्थकामद्वेषैर्विकल्पितश्चतुर्विधः, तथा द्वेषोऽपि, विरुद्धसंकीर्णाश्चतुर्विंशतिः पूर्वैः सह सप्तविंशतिरित्युक्ताः-संकीर्णसंशयाः ॥ ३० ॥

उभयतो योगमधिकृत्याह—

यत्र परस्याभिगमनेऽर्थः सक्ताच्च संघर्षतः स उभयतोऽर्थः ॥ ३१ ॥

अत्रेति । यस्मिन्नुभयतो योगे, परस्येति । अपूर्वस्य, उत्तरत्राप्यधिकृतं वेदितव्यम् , अभिगमनेऽर्थः । परस्मादेव, सक्ताच्चेति । अनुरक्तात्, सङ्घर्षत इति । स्पर्धमानादर्थः, स मा भूदनेनास्याः संप्रयोग इति स्पर्धया ददाति, स इति । उभयतो योग उभयतोऽर्थनामा, अन्यत्र यस्मिन् परस्मिन् सक्ते चेदभिगमनं तदैकमेवार्थसाधककार्यं न विजातीयमन्यदस्ति, उभयस्माच्च सकाशात् फलद्वयं प्रत्युपस्थितं तेनैकस्मिन् क्रियमाणे कार्यद्वयस्योत्पत्तिरुभतो योग इति मूलसूत्रार्थो योज्यः ॥ ३१ ॥

यत्र स्वेन व्ययेन निष्फलमभिगमनं सक्ताच्चामार्षितादृित्तप्रत्यादानं स तूभयतोऽनर्थः ॥ ३२ ॥

यस्मिन्नुभयतो योगे स्वेन व्ययेनाभिगमनम् , परस्येति वर्तते, नि-

